*Kendriya Sanskrit Vidyapeetha Series—No. 13*

# VIŚVĀMITRA SAṀHIT

# विश्वामित्रसंहिता

CRITICALLY EDITED BY

**UNDEMANE SHANKARA BHATTA**

*Research Assistant,*

*Kendriya Sanskrit Vidyapeetha, Tirupati.*




**KENDRIYA SANSKRIT VIDYAPEET**

**TIRUPATI**

**1970**

*Kendriya Sanskrit Vidyapeetha Series—No. 13.*

Grams : VIDYAPEETHA ORIGINAL Ph. No. 2469

**KENDRIYA SANSKRIT VIDYAPEETHA,**

Regd. Post

TIRUPATI - 517 507.

No. 2301 Date 5-10-1990

To

M/s Shri VIPIN Kumar
Silicon shed (Materials Division)
National Physical Laboratory
NEW DELHI- 110012

Your order/reference No ..................... dated .....................

| S No | Name of the Particulars | No. of copies | Cost Rs Ps | Amount Rs Ps |
|---|---|---|---|---|
| | Adv. Recd by M.O on 5-10-1990 Rs. 33/- | | | |
| | Viswamitra Samhita | | | 22=00 |
| | Less discount @ 15%. | | | 3=30 |
| | | | | 18=70 |
| | Forw & Packing charges | | | 14=30. |
| | | | | 33=00 |

Rupees Thirty Three only

| | |
|---|---|
| Total | 33=00 |
| Less discount | — |
| Balance | 33=00 |

Assistant For PRINCIPAL

*Kendriya Sanskrit Vidyapeetha Series—No. 13*

# VIŚVĀMITRA SAṀHITĀ

# विश्वामित्रसंहिता

CRITICALLY EDITED BY

**UNDEMANE SHANKARA BHATTA**

*Research Assistant,*

*Kendriya Sanskrit Vidyapeetha, Tirupati.*




**KENDRIYA SANSKRIT VIDYAPEETHA**

**TIRUPATI**

**1970**

केन्द्रीयसंस्कृतविद्यापीठग्रन्थमाला-१३.

# विश्वामित्रसंहिता

केन्द्रीयसंस्कृतविद्यापीठसंशोधनसहायकेन
श्रीमता उण्डेमने शङ्करभट्टेन
पाठभेदादिभिः संशोध्य संपादिता




केन्द्रीयसंस्कृतविद्यापीठम्
तिरुपति
१९७०

# TABLE OF CONTENTS

# प्रस्तावना

संचिन्तयामि जगदुद्भवमूलमूर्तिं
तं **शंकर**प्रियमुदात्तगुणं वरेण्यम् ।
**लक्ष्मी**निषेवितमजं विभुमादिदेवं
**विष्णुं** प्रपन्नपरिरक्षणबद्धदीक्षम् ॥

१. अपारात् संसारसागराद् आत्मानम् उज्जिहीर्षता महर्षिणा **विश्वामित्रेण ब्रह्मणो** मुखाद् अधिगतं विश्वजनीनं वेदार्थं संग्रहेण उद्बोधयन्ती **विश्वामित्रसंहिता** स्वापावस्थाम् अपहाय इदानीं कार्योन्मुखी वर्तत इत्येतत् परं प्रमोदस्थानम् आस्तिकमहाभागानाम् । चिराय संप्रदायशरणानाम् अर्चकादीनां गृहान् अध्युषितवती सेयं **विश्वामित्रसंहिता** प्रकाशम् उपनीयते तिरुपतिकेन्द्रीय-संस्कृतविद्यापीठाधिकृतैरिति अहो सौभाग्यम् आगमस्य !

भगवतो **नारायणस्य** मुखारविन्दात् निःसृतं पञ्चरात्रम् इति प्रचलति महती प्रतीतिः । 'पञ्चरात्रं' 'पाञ्चरात्रम्'—इति अनर्थान्तरम् इत्याहुरागमिकाः । तस्यास्य पञ्चरात्रस्य उत्पत्तिप्रकारम् उपवर्णयता **ब्रह्मणा** संसारार्णवम् उत्तितीर्षवे **विश्वामित्राय** अनूदितानि भगवद्वाक्यानि (१.७६-७८) एनाम् एव प्रतीतिम् उपोद्बलयन्ति । भवनिवृत्त्युपायबुभुत्सुना **विश्वामित्रेण ब्रह्मणो**ऽधिगतं, सत्पात्रादर्शनाद् विनोपदेशं स्वहृदयकुहरगोपितं च तत् पञ्चरात्रामृतम् उपसन्नस्य विनीतस्य भक्तियुक्तस्य च **काश्यपस्य** श्रवणपथम् अवतारितं सद्,

"अतः परं त्वयोक्तत्वाद् भूमौ त्वन्नामधेयतः ।
**विश्वामित्रीयमित्येव तन्त्रं** तात भविष्यति ॥" [१.८०&८१]

इति स्वयंभूवचनानुसारेण **विश्वामित्रसंहिता**ख्यया प्रथितम् इति सुस्पष्टम् उपवर्ण्यत एतदीयोपोद्घाताध्याये । सकलोऽपि आगमसिद्धान्तो **विश्वामित्रसंहितायाम्** अस्यां संकलितः सन् प्रतिक्षणं सौलभ्याकाङ्क्षिणाम् आधुनिकानाम् अध्येतॄणाम् आनन्दाय कल्पते ।

## २. परिशीलिता मातृकाः

जगद्भक्षके अस्मिन् काले भारतीयसंस्कृतिपरिचायिकानां चिरस्य अनुभूतार्चकादिसद्मवासानां संहितानाम् एतादृशीनां प्रकाशनं कर्तव्यकोटयन्तर्गतं

मन्यमानैरस्माभिः संपादितानां मातृकाणां विमर्शपद्धत्यनुरोधेन तुलनात्मकम् अध्ययनं निर्वर्तितवद्भिः वर्षद्वयपरिमितेनैव कालेन कृतसंपादना **विश्वामित्र-संहिता** इदानीं प्राकट्यं नीयते। अस्याः स्वरूपनिर्धारणकार्ये मार्गदर्शिकानां मातृकाणां बह्वयः अपूर्णाः। एतत्संपादननियुक्तैरस्माभिः विशिष्य षट् मातृकाः परिशीलिताः। तथा हि—

(१) अडैयार्ग्रन्थालयत उपलब्धा T R 1116 मातृकायाः प्रतिलिपिः A–संज्ञिका (Transcript of T R 1116, Adyar Library, Adyar-Paper-Devanagari—chapters 1-26 only).

(२) बडौदाप्राच्यसंस्थात उपगतः Ms. 6640, तालपत्रहस्तलेखः B–संज्ञकः (Ms. 6640, Oriental Institute, Baroda-Palm-leaf-Grantha-chapters 1-26 only).

(३) चेन्नपुरीप्राच्यहस्तलिखितग्रन्थालयादधिगता R 1601 मातृका M–संज्ञिका (Ms. 1601, Government Oriental Manuscript Library, Madras-Paper-Grantha-chapters 1-26 only).

(४) महिशूरप्राच्यसंशोधनसंस्थायाः संपादिता तालपत्रहस्तलेखस्य प्रतिलिपिः My–संज्ञिका (Transcript of the Ms., Oriental Research Institute, Mysore—Palm-leaf-Grantha-complete-chapters 1-27).

(५) तिरुपतिकेन्द्रीयसंस्कृतविद्यापीठग्रन्थालयगता KSV 554 A B & c मातृका K–संज्ञिका (Ms. 554 A B & C, Kendriya Sanskrit Vidyapeetha, Tirupati-Paper-Telugu-Incomplete).

(६) तिरुपतिकेन्द्रीयसंस्कृतविद्यापीठग्रन्थालयगता K S V 43 मातृका Ks–संज्ञिका (Ms. 43. A Compilation entitled as नानासंहिताविषयोद्धारः-Palm-leaf-Granth-chapters 3 & 14 only).

एतदतिरिक्ता श्रीमद्भ्यः तिरुनेल्वेलिमण्डलगतश्रीवैकुण्ठग्रामवासिभ्यः पेरियतिरुवडिभट्टाचार्येभ्यः अधिगता M मातृकासंवादिनी विश्वामित्रसंहिता च परिशीलिता अस्माभिः।

अन्यान्यपि उत्सवसंग्रहप्रभृतीनि कानिचित् संकलनानि पाठनिर्धारणार्थं परिशीलितानि यानि न विवदन्ति स्वीकृताभ्यः मातृकाभ्यः। अस्मत्परिशीलितानां

सर्वासामपि मातृकाणाम् अद्वितीयायाम् एव My मातृकायां संहिताकार्त्स्न्यमिव आसाद्यते। तथापि स्वीकृतानां सर्वासामपि पाठभेदा यथाशास्त्रं पादटिप्पण्यां (Footnotes) निवेशिता:।

## ३. संहिताविस्तर:

अस्मदुपलब्धानां विश्वामित्रसंहितामातृकाणां My मातृकायां

"ज्ञातव्यं तात वक्ष्यामि संक्षेपात् कश्यपात्मज।
सहस्रत्रयमानेन सुग्रहत्वाय सुव्रत॥" [२.३६]

इति प्रतिज्ञानुसारेण,

"सप्तविंशतिभि: प्रोक्तम् अध्यायै: कश्यपात्मज।
विश्वामित्रीयनाम्नैतन्मयोक्तत्वात् प्रथां गतम्॥" [२७.५६]

इति उपसंहारवाक्यानुसारेण च ग्रन्थविस्तर: अधिगम्यते। अन्यासु तु षड्विंशतिरेव अध्याया: दृष्टिपथमुपयान्ति। तथा च My मातृकानुरोधेन, चेन्नपुरीप्राच्यहस्तलिखितग्रन्थालयगताया: R3960 मातृकाया [1]ग्रन्थान्तवाक्यानुरोधेन (Colophon) च संहितायाम् अस्यां त्रिसहस्रं श्लोका:, सप्तविंशतिरध्यायाश्चेति करतलामलककल्प: अस्या ग्रन्थविस्तर:।

## ४. प्रधानमातृकाविवेक:

संपूर्णा शैथिल्यक्रमिदंशादिदोषजुष्टा [2]प्राचीना च My-मातृका आदृता समुचितपाठनिर्णयेऽस्माभि:। मातृकायाम् अस्याम् अनुपदं दरीदृश्यमानानां ग्रन्थलोपानां परिपूरणे मातृकान्तरेभ्य: समीचीनानि पदजातानि निर्विशङ्कम् अङ्गीकृतानि। सर्वथा दुर्लभानां केषांचित् श्लोकभागानां परिपूरणे संहितान्तरपरिशीलनेन कोष्ठान्तरिता उपनिवेशितप्रश्नचिह्नकाश्च सूचना: संनिवेशिता:। मुख्यमातृकायामपि मातृकान्तरेष्विव उपलब्धानां सर्वथा अशुद्धानां पाठानां नि-

---

1. "इति श्रीपाञ्चरात्रे महोपनिषदि विश्वामित्रसंहितायां प्रायश्चित्तविधिर्नाम सप्तविंशोऽध्याय:॥ विश्वामित्रसंहिता समाप्ता॥"

2. एतन्मातृकोपसंहारवाक्यम् अस्या: प्राचीनतामवगमयति। विस्तरेणायं विचार: अन्यत्र प्रस्तोष्यते। पञ्चरात्रसंहितान्तराणामिव अस्याश्च संहिताया: कालनिर्धारणं न सुशकमिति विदितमेव समेषां विमर्शकानाम्।

शङ्क परित्यागः कृतः। अशुद्धानां सुलभशोधनानां च पाठानां संशोधनं, प्रश्नचिह्नेन साकं कोष्ठान्तरितं सत्, पार्श्व एव संसूचितम्। अस्पष्टस्य भागस्य पार्श्वयोः नक्षत्रचिह्ने निवेशिते। मातृकान्तरगतानि पाठान्तराणि पादटिप्पणीरूपेण (Footnotes) ग्रन्थभागम् अधोऽधः संयोजितानि। संहितायाम् अस्याम् उपदृश्यमानानां गुणदोषाणां विमर्शिका टिप्पणी (Critical Notes) ग्रन्थान्ते संयोजिता।

एतत्समानाभिधाना अन्याः काश्चिद् उपलभ्यन्ते संहिताः। परं तु प्रतिपाद्येन (विषयेण) भिन्नास्ता नाहन्ति पञ्चरात्रान्तर्भावम्। अत एव ताः सर्वा अपि अस्माभिरनादृताः। तदनादरकारणानि विस्तरभयात् नात्र विशिष्य प्रस्तूयन्ते।

## ५. संहिताप्रतिपाद्यम्

पञ्चरात्रानुरोधि परार्थयजनं प्रधानं प्रतिपाद्यम् अस्याः संहितायाः। परार्थयजनसंबन्धिनः "पञ्चरात्रार्थविवेचनं, गुरुशिष्यलक्षणं, व्यूहसृष्टिः, जगत्सृष्टिः, प्रणवादिमन्त्रोद्धारः, मन्त्रोद्धारसंबन्धिन्यः वर्णसंज्ञाः, दीक्षाविधिः, नित्याराधनविधिः, अग्निकार्यं, नित्योत्सवः, मुद्रालक्षणं, प्रतिष्ठाविधिः, मण्डलयागः, नैमित्तिकार्चनं, महोत्सवविधिः, स्नपनविधिः, देवालयनिर्माणविधिः, बिम्बमानं, जीर्णोद्धारविधिः, पवित्रकह्लारकुसुमदमनारोपणविधिः, प्रायश्चित्तविधिः" इत्येते प्रधानांशाः सुस्पष्टम् उपवर्ण्यन्ते संहितायाम् अस्याम्। आलयार्चने प्रचुरप्रचारां **पाद्मसंहितां** बहुषु अंशेषु एषा संवदति। मण्डलयागविधौ मण्डललेखनसंबन्धि इदमीयं विवरणं **पाद्मसंहिता**पेक्षया स्पष्टतरमुपलक्ष्यते। अङ्कुरार्पणविधौ सहस्रकलशस्नपनविधौ च एतदीयं विवरणं सर्वथा **पाद्मसंहिता**तो विलक्षणं भाति। अष्टोत्तरशतपञ्चरात्रतन्त्रत्वेन परिगणितानि सर्वाण्यपि तन्त्राणि (२.१६-३३) यद्यपि अद्य विमर्शकानां दृष्टिपथं नोपयान्ति, तथापि उपलभ्यमानेषु मुख्येषु च तन्त्रान्तरेषु **विश्वामित्रीय**वत् नैव भगवदाराधनोपयोगिन्यः अङ्गुलिसमावेशविशेषात्मिका मुद्राः सप्रपञ्चं निर्दिश्यन्ते। एवमेव आलयार्चासंबन्धिनः बहवो विचाराः संहितायाम् अस्यां स्पष्टतरेण मार्गेण निरूपिताः सन्तः पञ्चरात्रसमयजिज्ञासूनाम् आदराय कल्पन्ते। तथा च संहितैषा महर्षिणा शाण्डिल्येन सात्त्विकशास्त्रत्वेन परमवैदिकसिद्धान्तरत्नाकरे परिगण्यते।

## ६. ग्रन्थसंयोजनम्

ग्रन्थसंयोजने प्रकरणसांगत्यमेव प्रधानं प्रमाणम् अभ्युपगच्छद्भिः अस्माभिः प्रकरणानपेक्षितानां भागानां विषये अनादरः प्रदर्शितः। तथा च षड्विंशस्य अध्यायस्य अन्ते फलपूजाविधिसंबन्धिनां श्लोकानां स्वीकारः प्रकरणासंगत इति निश्चितम्। अध्याये अस्मिन् महर्षिप्रतिज्ञानुसारेण दमनारोपणविधेरेव अवकाशः। परं तु मूलमातृकात्वेन अङ्गीकृतायां My–मातृकायां फलपूजाविधि-संबन्धिनां श्लोकानाम् अन्तर्भावः अनवधानमूलकः स्यादिति तर्क्यतेऽस्माभिः। तथा च प्रकरणासंगतानां तेषां श्लोकानां परिशिष्टभागे (Appendix) अवकाशः कल्पितः। ABM-मातृकासु अनुपलभ्यमानोऽपि सप्तविंशोऽध्यायः प्रायश्चित्तविषयकः सन् अर्हति संहितान्तरवद् अत्रापि अन्तर्भावम्। संहितायाः कात्स्न्र्यसमापादने अध्यायस्यास्य स्वीकारः अपरिहार्य एव। अस्मदभ्युपगतासु मातृकास्वलब्धावकाशः षड्विंशाध्यायान्तर्गतत्वेन निर्दिश्यमानः विशाखोत्सवनिर्णयविषयको ग्रन्थभागः अस्मत्सहोद्योगिभिः श्रीमद्भिः आसूरि **श्रीनिवासय्यंगार्** महोदयैः संपादितः गवेषकापेक्षितप्रमाणहीनोऽपि परिशिष्टे संयोजितः।

## ७. भाषाशुद्धिः

आगमीया भाषा कतिषुचिद् अंशेषु वैलक्षण्यम् आवहति। पाणिनीयनियमा अत्र यथावकाशं शिथिलीकृताः संलक्ष्यन्ते। तदनुरोधेन विश्वामित्रसंहितायां च पाणिनीयनियमोल्लङ्घनम् असकृद् दृष्टिपथम् आयाति। पदानां वैरूप्यम् (२७.३८), पौनरुक्त्यम् (२५.१८२), क्लिष्टान्वयः (१७.१९८,१९९; १८.१७८; २७.४३); असमर्थानां पदानां प्रयोगः (१४.३१; १६.३४, ८२; १८.९७,१३६; २२.२२; २५.१३,५३,१७४); विशेष्य-विशेषणयोः विभक्तिव्यत्ययः (१७.१३६; १९.१६६; २४.१४); पदानां लिङ्गविपरिणामः (१.४६; १४.७०; १७.६६; १८.१५१; २१.९६); सन्धिनियमोल्लङ्घनम् (६.७; ७.५४); कृदन्तनियमानाम् अतिक्रमः (९.८२; १७.१७३; २६.८, ४९); अकाण्डे तद्धितान्तानां पदानां प्रयोगः (१४.९९; २२.५,६,१८); समासनियमानां विस्मरणं (१.१८; ६.२५; १४.२५, ६९; १७.२०); विलक्षणानां तिङन्तानां पदानां प्रयोगः (९.२५,२८, ४०, ५०; १०.१४५; ११.३७, ४६, ५६, ६४,६५; १७.२४८; १८.७६;

१९.५१ ; २०.३३ ; २१.१, ८, ११४ ; २७.२२, ४७) ; आत्मनेपदिधातोः परस्मैपदीकरणं (१०.१०५ ; २१.९२) ; परस्मैपदिधातोः आत्मनेपदीकरणं (१२.१ ; १४.१०४ ; १९.८५, १४१, १५८ ; २५.३०) ; सेटो धातोरनिटीकरणं (१६.११५ ; १७.२०७, २४५ ; २५.३९ ; २७.४४) ; णिजन्तस्य धातोः स्थाने केवलस्य प्रयोगः (१९.५७) ; लकारार्थविस्मृतिः (२५.२५) ; कारकनियमानां शिथिलीकरणम् (१.५७ ; १७.१३४, १४०, १४३, १४५, १५१ ; २५.१३३ ; २६.२१)-इत्येवमादयो भाषादोषाः संहितान्तरवदत्रापि दरीदृश्यन्त एव।

## ८. छन्दःशुद्धिः

छन्दोनियमानुसरणेऽपि आगमिकानां नातीव आदरः। वर्णानां गौरलाघवपरीक्षा उपसर्जनीभावमापाद्यते आगमे। अत्रापि दृश्यन्ते तन्निदर्शनानि (७.५४ १२.२३ ; १४.१८३ ; १६.१०३ ; १७.१३७, १५४, २११ ; १८.६८; १९.५८, ८७, ९७, १४१, १४४, १८८ ; २०.३८)। तथा चेदमतिरोहितं विमर्शकानां यत् प्रतिपाद्यमात्रविश्रान्तैः आगमिकैः भाषायाः छन्दसो वा शुद्धौ न विशिष्य प्रयतितमिति। एतत् सर्वं विस्तरेणास्माभिः अन्यत्र प्रदर्शयिष्यते।

## ९. पौराणिककथाविपर्यासः

संहितायामस्यां नृसिंहविषयकः कश्चन पौराणिककथाभागः विपर्यस्तो भासते। एतदीयषोडशाध्याये लक्ष्मीनृसिंहमुपवर्णयता विश्वामित्रेण "लक्ष्मीनृसिंहः हिरण्याक्षासुरगणस्य मर्दयिता (?), धरण्युद्धारकः, अङ्कसंस्थधरणीकः" (१६.११०) इति च कीर्त्यते। भागवतादिपुराणेषु तु लक्ष्मीनृसिंहः हिरण्यकशिपुसंहारक इति, हिरण्याक्षसंहरणपूर्वकधरण्युद्धारकर्ता वराहमूर्ति" रिति च उपवर्ण्यते। तथा चात्र विपर्यस्तस्य कथाभागस्य औचित्यं चिन्त्यमवशिष्यते।

## १०. परिशिष्टम्

आधुनिकविमर्शकानां सौकर्याय, संहितार्थावगमसौलभ्याय च यथाप्रदेशं मुद्रा-मण्डल-स्नपन-संबन्धिनां रेखाचित्राणामुपकल्पनमन्तरा एतत्संहितोक्तानां पञ्चरात्रतन्त्राणां, वर्णसंज्ञानां, मुद्राणां, मन्त्राणां, श्लोकाद्यपादानां, पारिभाषिकपदानां च अनुक्रमणिकाः परिशिष्टात्मना ग्रन्थान्ते संयोजिताः।

मुद्रणावसरे संभाव्यमानानां दोषाणां निष्कासने कृतभूरिपरिश्रमैरपि अस्माभिः ग्रन्थेऽस्मिन् क्वचिद् अनिवार्यतया लब्धप्रतिष्ठा मुद्रणदोषाः प्रत्यक्षीकृता एव। तन्निवारणाय ग्रन्थान्ते मुद्रणदोषसूची (Corrigenda) च संयोजिता।

तदेवं कालोचितसौकर्यपरिपूर्णा इयं **विश्वामित्रसंहिता** विषयग्राहसंकुलं भवसागरं तितीर्षूणाम् आस्तिकानां नौकायेतेति रूढमूलोऽस्मासु विश्वासः।

## ११. उपकारस्मृतिः

अस्मच्चिकीर्षितस्य **विश्वामित्रसंहिता**संपादनस्य साफल्ये बह्वीभिः संस्थाभिः नितरां वयमुपकृताः। अडैयार्पुस्तकालयः (Adyar Library, Adyar), बडौदाप्राच्यसंस्था (Oriental Institute, Baroda), चेन्नपुरीप्राच्यहस्तलिखित-ग्रन्थालयः (Government Oriental Manuscripts Library, Madras), महिशूरप्राच्यसंशोधनसंस्था (Oriental Research Institute, Mysore) इत्येताः संस्थाः स्वीय**विश्वामित्रसंहिता**प्रेषणेन अस्मदीयं गुरुतरमपि कार्यभारं लघूकृतवत्यः। आभ्यः, विशिष्य इदमीयाधिकारिवर्येभ्यः, स्वीय**विश्वामित्रसंहिता**-प्रेषणेन नितान्तमुपकृतवद्भ्यः श्रीमद्भ्यः श्रीवैकुण्ठं **पेरियतिरुवडि भट्टाचार्ये**-भ्यश्च वयमत्र हार्दिकमाधमर्ण्यम् आविष्कुर्मः।

**विश्वामित्रसंहितायाः** विमर्शात्मकसंस्करण-(Critical edition) स्यास्य संपादने यथाकालं सूक्तमार्गदर्शनेन उपकृतवद्भ्यः तिरुपतिकेन्द्रीयसंस्कृत-विद्यापीठनिदेशकवर्येभ्यः श्रीमद्भ्यः बेल्लिक्कोत्तु **रामचन्द्रशर्म**महाभागेभ्यः, अस्मदी-यविभागाग्रेसरेभ्यः श्रीमद्भ्यः म. द. **बालसुब्रह्मण्य**महोदयेभ्यः, रेखाचित्रलेख-केभ्यः शिल्पिभ्यः श्रीमद्भ्यः सा. **सुब्बय्य**महाशयेभ्यः, साक्षात् परंपरया वा साहाय्यम् आततवद्भ्यः अस्मत्सहकर्मचारिभ्यः, सर्वाङ्गीणम् आनुकूल्यम् उपकल्पि-तवद्भ्यः तिरुपतिकेन्द्रीयसंस्कृतविद्यापीठनिर्वाहकेभ्यः, अतिसुन्दरं मुद्रणकार्यं सश्रद्धं निरूढवद्भ्यः चेन्नपुरीगत**भारतीविजयं**मुद्रणालयनिर्वाहकेभ्यः श्रीमद्भ्यः सी. **राम अय्यर्** महोदयेभ्यः, प्रकाशनधुरंधरेभ्यः विद्यापीठनिदेशकवर्येभ्यश्च हार्दिकं कार्तज्ञ्यम् आविष्कुर्वद्भिः विद्वत्परितोषमेव परिश्रमफलं मन्वानैः एतादृशी-

नाम् आत्यन्तिकश्रेयःसाधिकानां सुप्तप्रायाणां संहितान्तराणां स्वापापोहं, तद्द्वारा आस्तिकजनजागर्यां च अभिलषद्भिरस्माभिः लोककल्याणम् आशास्यते इति शम्।

केन्द्रीयसंस्कृतविद्यापीठम्,
तिरुपति, आन्ध्रप्रदेशः।
साधारण(शकाब्द १८९२)-चैत्र
पूर्णिमा-कुजवासरः।

इति विद्वद्विधेयः,
**उण्डेमने शङ्करभट्टः**
संपादकः।

---

# विषयानुक्रमणिका

3

ॐ

# विश्वामित्रसंहिता

## प्रथमोऽध्यायः

अव्यक्तायाप्रमेयाय विशुद्धज्ञानहेतवे ।
श्रीमते श्रेयसां धाम्ने नमः पुंसे परात्मने ॥ १ ॥

सिद्धाश्रमे श्रमहरे सिद्धसंवनिषेविते ।
आम्नायघोषैरनिशं मुनीनां मुखरीकृते ॥ २ ॥

वैखानसैर्वालखिल्यैः फेनपैरूष्मपैरपि ।
अश्मकुट्टैश्च मुनिभिर्दन्तोलूखलिभिर्वृते ॥ ३ ॥

सदा संफुल्लकह्लारकुमुदोत्पलसेविते ।
विकस्वराम्भोजगलन्मधुचन्द्रकिताम्बुभिः ॥ ४ ॥

*अन्त्यजैरतिशीतैश्च पूर्णैरशनमम्बुभिः ।*
दृष्टमात्रश्रमहरैः सरोभिः समलङ्कृते ॥ ५ ॥

चूतचम्पकपुंनागनागकेसरकेसरैः ।
तमालतालहिन्तालकुन्दामलकतिन्दुकैः ॥ ६ ॥

कदम्बजम्बूजम्बीरवीरणोदुम्बरैरपि ।
प्रियालैर्नालिकेरैश्च वकुलैः पनसैरपि ॥ ७ ॥

कुन्दचन्दनमन्दारदेवदारुशतैस्तथा ।
सदाफलैः सदापुष्पैः सदापल्लवशोभितैः ॥ ८ ॥

स्तबकस्तनभारेण संनताभिः समन्ततः ।
नानालताभिः कान्ताभिराश्लिष्टैस्तरुणैरिव ॥ ९ ॥

---

5–(b) ABK ° रशिन for ° रशन

7–(d) ABK ° स्तथा for ° रपि

उत्फुल्लपुष्पपटलीसौरभासारलम्पटैः ।
भ्रमद्भिरभितो भृङ्गैर्नदद्भिरिव कुण्ठितैः ॥ १० ॥

मञ्जुलालापमधुरैः कोकिलाकलितान्तरैः ।
मत्तबर्हिणसन्नादैराह्वयद्भिरिवातिथीन् ॥ ११ ॥

दात्यूहैर्भृङ्गराजैश्च कोकिलैः क्रुकरैस्तथा ।
अन्यैश्च विविधैर्जुष्टैरभितः पक्षिमण्डलैः ॥ १२ ॥

*छायासु गोमयस्थासु* (यात्कासु ?) सुखासीनैर्द्विजोत्तमैः ।
क्वचिद्व्याख्याननिपुणैः क्वचिदाम्नायपाठकैः ॥ १३ ॥

वावदूकैः क्वचिच्चैव क्वचित् पौराणिकैरपि ।
अन्यैश्च नानाशास्त्रज्ञैरधिदैवयुतैरपि ॥ १४ ॥

स्वादुपक्वफलोपेतैः पुष्पामोदितदिङ्मुखैः ।
एतैश्चान्यैश्च विविधैस्तरुभिः परिवारितैः ॥ १५ ॥

गायद्भिः किंनरगणैः श्रोत्रेन्द्रियसुखावहैः ।
*कोकै रावकुलैर्नित्यमाश्रिकाहृच (ताभ्य ?)र्णभूतले* ॥ १६ ॥

वराहपुरुषोत्खात*मुक्तासौरिभिरुच्छ्रिते* (मुस्तासुरभितान्तरे ?) ।
हरिणैरर्धसंदष्टशष्पश्यामलितान्तरे ॥ १७ ॥

शार्दूलशावैरापीतस्तनिभिर्गोभिरावृते ।
भल्लूककान्ताशमितमुनिदारकरोदने ॥ १८ ॥

शाखामृगसमारब्धशुष्यद्धान्यसमूहके ।
उच्चद्रुमफलेप्सूनामृषीणामभितः स्थिते (तैः ?) ॥ १९ ॥

---

12–(b) ABK कूकरै for क्रुकरै
–(d) B मण्डले for मण्डलैः
13–(a) ABK गोमयस्थाय for गोमयस्थासु
–(c) AB निरतैः for निपुणैः
16–(c) BM ° रावकुले for ° रावकुलैः
17–(b) A ° रुच्छृते for ° रुच्छ्रिते
18–(b) B ° स्तनिभिराश्रिते for ° स्तनिभिर्गोभिरावृते
19-(b) ABK ° शुष्यधान्यसमूहरे for शुष्यद्धान्यसमूहके

करिभिः कौतुकारब्धशाखावनमनक्रिये ।
शुकसङ्घातविस्तृतवेदपाठकसंशये ॥ २० ॥

उत्सर्पिताग्निधूमस्य *दमपावितदिङ्मुखे* ।
समासीनं द्विजवरैरर्च्यमानपदाम्बुजम् ॥ २१ ॥

अशेषवेदवेदान्तवाक्यसूक्ष्मार्थदर्शिनम् ।
सांख्य(ख्ये ?)योगे च निरतं सर्वशास्त्रोपनिष्ठितम् ॥ २२ ॥

संदीप्यमानं तपसा मोक्षकाममिवापरम् ।
ब्राह्मण्यं तपसा स्वेन समुपार्जितमूर्जितम् ॥ २३ ॥

दधानं सर्वतीर्थेषु कृतस्नपनपावनम् ।
पञ्चरात्रमहाम्भोधिपारदृश्वानमञ्जसा ॥ २४ ॥

अशेषावभृथस्नानपवित्रितजटावनम् ।
लोकाचारविशेषज्ञं पञ्चकालपरायणम् ॥ २५ ॥

पुण्यतीर्थोद्धृतश्वेतमृत्स्नाविरचितैश्शुभैः ।
ऊर्ध्वपुण्ड्रैर्द्वादशभिः सौम्यैरावृतविग्रहम् ॥ २६ ॥

स्वस्थानविधृताशेषपञ्चायुधविभूषितम् ।
सौम्यत्वेऽपि दुराधर्षं तेजोमण्डलमण्डितम् ॥ २७ ॥

क्षान्तं च दान्तमनघं सदा दीनानुकम्पिनम् ।
गाधिसूनुं महात्मानं विश्वामित्रं तपोधनम् ॥ २८ ॥

अभ्येत्य काश्यपो नाम कदाचिदृषिसत्तमः ।
प्रणम्योपान्तिके तस्थौ शिरस्याधाय चाञ्जलिम् ॥ २९ ॥

ततस्तं भगवान् दृष्ट्वा विश्वामित्रः समागतम् ।
विनयावनतं विप्रं वाक्यमेतदुवाच ह ॥ ३० ॥

---

20-(c) KM विधृत for विस्तृत
22-(b) BM ° दर्शनम् for दर्शिनम्
-(d) ABK शास्त्रे च for शास्त्रोप.
29-(d) M °स्यादाय for ° स्याधाय

विश्वामित्रः—

कच्चित्ते कुशलं विप्र कच्चित्ते वर्धते तपः ।
वर्धन्ते क्रतवः कच्चिदविच्छिन्नास्तवाश्रमे ॥ ३१ ॥

कच्चित् स्वाध्यायविच्छेदो जायते न तवानिशम् ।
गृहागतास्त्वतिथयो यथाकालं त्वया मुने ॥ ३२ ॥

अर्च्यन्ते कच्चिदेतन्मे सर्वमाचक्ष्व पृच्छतः ।

काश्यपः—

भगवन् यत्त्वया पृष्टं सर्वमेतत्तथा मयि ॥ ३३ ॥
एवं यमनुगृह्णाति भवान् तस्याशुभं कुतः ।

विश्वामित्रः—

एवं चोदित आसीनः शुभागमनकारणम् ॥ ३४ ॥

वक्तुमर्हसि तत्त्वेन वत्स काश्यपनन्दन ।
एवमुक्तः स मुनिना समासीनः कृताञ्जलिः ॥ ३५ ॥

शोकवेगसमाक्रान्तचेता वचनमब्रवीत् ।
पठिताः सकला वेदाः सरहस्या महामुने ॥ ३६ ॥

मीमांसाद्यानि शास्त्राणि वेदान्तानि यथार्थतः ।
पठितानि मया सम्यगादिमध्यान्तसंगतम् ॥ ३७ ॥

व्यामुह्यतीव मे चेतो बहुशास्त्रनिरीक्षणात् ।
इदं निःश्रेयसकरमिति बुद्धौ न निश्चयः ॥ ३८ ॥

अद्यत्वे भगवान् सर्वं जानातीति तपोधनाः ।
सर्वे वदन्ति ते *वेदाज्ञानामृतमहोदधिः* ॥ ३९ ॥

तस्मादिहागतोऽस्म्यद्य तत्त्वज्ञानबुभुत्सया ।
केनोपायेन भगवन्! तरन्ति भवसागरम् ॥ ४० ॥

---

34–(a) M आसीनं for आसीनः

37–(c) AM. यथा for मया

माद्दशा ज्ञानहीनास्तु तन्द्रालुमनसो जनाः ।
प्रसीद सीदते मह्यं *नोयत्वं नृपसंनिधौ (?)* ॥ ४१ ॥

*करुणं चरणाम्भोजशरणाय विधत्स्व माम्* ।
संसारापारजलधौ मज्जतो मादृशान् जनान् ॥ ४२ ॥

तत्त्वज्ञानप्लवेनैव संतारयति यद्भवान् ।
अतस्त्वामद्य शरणं यातो येनाहमाप्नुयाम् ॥ ४३ ॥

अमृतत्वं वदतु मे तमुपायं महामुने ।
एतावदुक्त्वा विरते तस्मिन् काश्यपनन्दने ॥ ४४ ॥

ध्यात्वा मुहूर्तं प्रोवाच प्रसन्नो गाधिनन्दनः ।
साधु साधु महाप्राज्ञ वत्स काश्यप सुस्थिर ॥ ४५ ॥

ईदृशी ते समुत्पन्ना बुद्धिर्वयसि नूतने ।
इत्यस्माकमतीवासीदानन्दमतिनिर्भरम् (?) ॥ ४६ ॥

हृदयं सदयं दातुं पारितोषिकमिच्छति ।
भवते भक्तियुक्ताय भवाम्भोनिधिभीरवे ॥ ४७ ॥

तस्माद्ददामि ते वत्स निःश्रेयसकरं परम् ।
उपायः कथितः पूर्वं ब्रह्मणा मत्प्रियेप्सुना ॥ ४८ ॥

*पुराभावेतिभवता* तस्माद्भीतो भृशं मुने ।
एवं निवृत्तिकर्तारमुपायं लब्धुमञ्जसा ॥ ४९ ॥

तपसोग्रेण सुरसं(?) ब्रह्माणं समतोषयम् ।
ततः प्रसन्नो भगवान् ब्रह्मा लोकपितामहः ॥ ५० ॥

दयया दर्शनं देवो ददौ मह्यं दिदृक्षवे ।
ततो हर्षसमाविष्टहृदयो रचिताञ्जलिः ॥ ५१ ॥

प्रणम्य दण्डवद् भूमौ स्तोत्रमेतदुदैरयम् ।
नमस्ते सर्वजगतां स्रष्ट्रे जगति तस्थुषे ॥ ५२ ॥

---

44-(b) M तदु॰ for तमु॰

51-(cd)B. ततोहं विष्टहृदयो......रचिता॰ for ततो हर्षसमाविष्टहृदयो रचिता॰

अवते सत्त्वमाश्रित्य संहर्त्रे तामसाश्रयात् ।
अचिन्त्यायाप्रमेयाय नमस्ते परमात्मने ॥ ५३ ॥

अक्षरायाविकाराय भक्तानामार्तिनाशिने ।
नमस्तुभ्यं त्रिलोकेश त्रयीमय जगन्मय ॥ ५४ ॥

अनघाघौघविध्वंसकारिणे मीढुषे नमः ।
सूक्ष्मसूक्ष्मतराव्यक्तकारिणे मीढुषे नमः ॥ ५५ ॥

स्थूलात् स्थूलतराव्यक्त सूक्ष्मात् सूक्ष्मतर प्रभो ।
व्योमवाय्वग्निसलिलपृथिवीमयविग्रह ॥ ५६ ॥

भगवन् पाहि मां देव कृपया भक्तवत्सल ।
प्राणिनामन्तरात्मा यो हृदयेष्वधितिष्ठति (?) ॥ ५७ ॥

सत्यमित्येव विद्वद्भिः सर्वदा विनिगद्यते ।
सर्वौषधीर्यथाकालं प्रसूते पृथिवी प्रभो ॥ ५८ ॥

रात्रिंदिवविभागेन यश्च सूर्यश्च चन्द्रमाः ।
*परतः पतितो योगातनतन्त्रौ गतक्रमौ* ॥ ५९ ॥

यश्च वायुः सदा जन्तून् प्राणयत्यनिशं चरन् ।
*त्वत्तोत्पन्न*भयादेतत् क्रियते कमलासन ॥ ६० ॥

हिरण्यकेश भगवन् हिरण्यश्मश्रुसंयुतम् ।
आनखात् स्वर्णरूपं त्वां संपश्यन्ति हि योगिनः ॥ ६१ ॥

सरस्वतीप्राणनाथ जगन्मय जनार्तिहन् ।
जय ज्ञानमयाचिन्त्य जय ज्ञेय महाप्रभो ॥ ६२ ॥

जयकारण सर्वस्य जयकारणकारण ।
जय विश्वामराधीश वेदवेद्य जयस्व च ॥ ६३ ॥

---

58–(d) A प्रासूत for प्रसूते and प्रभा for प्रभो.
B. प्रभाः for प्रभो.

59–(cd)A° स्तत्र for °तन B परितो for पतितो and °स्तन far °तन

61–(c) A नख्यात् for नखात् AB °रूप for °रूपं

62–(d) B ° मय for महा.

63–(d) AB जयाय for जयस्व

एवं स्तुवन्तं प्रणतमनाथं कृपणं च माम् ।
प्रसन्नो भगवान् ब्रह्मा प्राह गम्भीरया गिरा ॥ ६४ ॥

ब्रह्मा—

उत्तिष्ठ ते प्रसन्नोऽहं वरं वरय सुव्रत ।
यद्यदिच्छसि तत्सर्वं दास्यामि कथयस्व मे ॥ ६५ ॥

इत्युक्तोऽहं भगवता ब्रह्मणाव्यक्तजन्मना ।
परमां प्रीतिमासाद्य बाष्पकण्ठो व्यजिज्ञपम् ॥ ६६ ॥

यदि प्रसन्नो भगवान् मह्यं भक्तिमते भृशम् ।
उपायं कथयत्वद्य निःश्रेयसकरं परम् ॥ ६७ ॥

मया महीमिमां कृत्स्नां भ्रान्त्वा चिरमुपासिताः ।
आचार्या बहवस्तेभ्यो लब्धं त्रैवर्गिकं फलम् ॥ ६८ ॥

तस्मात् संसारपाथोधेर्विषयग्राहसंकुलात् ।
तस्मादुद्धर्तुमिच्छामि तदुपायं वद प्रभो ॥ ६९ ॥

ब्रह्मा—

गाधिसूनो महाप्राज्ञ साध्वी ते मतिरागता ।
पुरा नारायणो देवः परमात्मा सनातनः ॥ ७० ॥

भूत्वा हंसवपुर्दैत्यान् हत्वा सर्वान् क्षणेन च ।
प्रत्याहृत्य चतुर्वेदान् तेभ्यो मह्यमदात् प्रभुः ॥ ७१ ॥

ततो मुदं परां प्राप्य नत्वा देवं जगद्गुरुम् ।
व्यजिज्ञपमिदं वाक्यं कृत्वा शिरसि चाञ्जलिम् ॥ ७२ ॥

वेदास्त्वया मे चत्वारो दत्ता दैत्यहृताः प्रभो ।
एषामर्थं न जानामि संकीर्णत्वाच्च विस्तरात् ॥ ७३ ॥

*एषां (ते ?) निर्वाणफलदमि(दा इ ?)त्यप्यासीन्न मे मतिः* ।
तस्मात् संक्षिप्य वेदानामर्थं निर्वाणहेतुकम् ॥ ७४ ॥

कथयस्व दयाम्भोधे भगवन् भक्तवत्सल ।
एवमुक्तो मया देवः सर्वलोकेश्वरो हरिः ॥ ७५ ॥

---

69–(c) B ° दुत्तर्तुं· for दुद्धर्तुं.

75–(c) AK महा for मया

प्राह गम्भीरया वाचा प्रसन्नेनान्तरात्मना ।

श्रीभगवानुवाच—

ब्रह्मन् निःश्रेयसकरं ज्ञेयानां ज्ञेयमुत्तमम् ॥ ७६ ॥

वेदार्थसारसर्वस्वं मम प्रीतिकरं परम् ।
पञ्चरात्राख्यममृतं कथयामि शृणुष्व मे ॥ ७७ ॥

इत्येवमुक्त्वा भगवान् पञ्चरात्रमशेषतः ।
ततो(?)पदिष्टवान् मह्यं तदिदानीं वदामि ते ॥ ७८ ॥

एतदुक्त्वा तु वचनं स्वयंभूर्लोकपावनः ।
पञ्चरात्राह्वयं ज्ञानं दिदेश मम सादरम् ॥ ७९ ॥

दत्वा पुनर्वाक्यमेतदुवाच कमलासनः ।
अतः परं त्वयोक्तत्वात् भूमौ त्वन्नामधेयतः ॥ ८० ॥

विश्वामित्रीयमित्येव तन्त्रं तात भविष्यति ।
इत्युक्त्वान्तर्दधे देवो ब्रह्मा लोकपितामहः ॥ ८१ ॥

तदाप्रभृति तज्ज्ञेयं हृदये मम वर्तते ।
सत्पात्रादर्शनाद् गुप्तं भवानद्य समागतः ॥ ८२ ॥

इदानीं भक्तियुक्ताय विनीताय च काश्यप ।
तुभ्यं ददामि तत्तन्त्रं श्रूयतामवधार्यताम् ॥ ८३ ॥

**॥ इति पञ्चरात्रे महोपनिषदि विश्वामित्रसंहितायां [तन्त्रावतरणं नाम] प्रथमोऽध्यायः ॥**

---

76–(d) My. श्रेय उ. for ज्ञेयमु.
79–(a) A एवमु. for एतदु.
–(b) AK भावनः for पावनः
81-(a) My °त्येवं for °त्येव
–(b) My त....तद् for तन्त्रं तात
82–(a) My ज्ञात्वा for ज्ञेयं
–(d) B °द्दतः My वृतः for गतः
83–(d) M °मपि for °मव

# द्वितीयोऽध्यायः

**काश्यपः—**

भगवन् पञ्चरात्राख्यं शास्त्रमस्तीति यत्त्वया ।
आख्यातं तस्य शब्दस्य कोऽर्थस्तत्किंपरं मुने ॥ १ ॥

तस्य रूपं कतिविधं कीदृशो ग्रन्थविस्तरः ।
एतत्सर्वं यथातत्त्वं संक्षेपात् कथ्यतां मम ॥ २ ॥

**विश्वामित्रः—**

श्रूयतामभिधास्यामि यत्पृष्टोऽसि त्वया मुने ।
पञ्चेन्द्रियाणि विषयाः पञ्चभूतानि तद्गुणाः ॥ ३ ॥

पञ्चशब्दाभिधेयानि विद्वांसोऽप्याचचक्षिरे ।
रा इत्ययमपि प्रोक्तो धातुरादानवाचकः ॥ ४ ॥

विषयेन्द्रियभूतानामादातारश्च पञ्चराः ।
मनुष्याः पालनात्तेषां पञ्चरात्रमिति स्मृतम् ॥ ५ ॥

सांख्ययोगादयः पञ्च *रात्रा(त्री ?)* यन्तेऽस्य संनिधौ ।
तस्माद्वा पञ्चरात्रार्थः प्रोच्यते सूरिसत्तमैः ॥ ६ ॥

अथवा रात्रयो यद्वत्* संनिधौ पञ्चताय वै*(?) ।
नीयन्ते तद्वदन्यानि शास्त्राण्येतस्य संनिधौ ॥ ७ ॥

---

2–(b) My ब्रूहि for ग्रन्थ
–(c) M यत्तत् for एतत्

4–(b) My: °सो व्या for °सोऽप्या
–(d) M °रादाय for °रादान

5–(b) ABKM धातार for दातार

इति वा पञ्चरात्रार्थो विद्वद्भिः कथ्यते द्विज ।
सर्ववेदान्तवेद्यस्य सर्वदेवेश्वरस्य च ॥ ८ ॥

विष्णोराराधनपरं शास्त्रमेतत् प्रकीर्तितम् ।
भवार्णवनिमग्नानां पुंसां सिद्धिकरं परम् ॥ ९ ॥

वासुदेवस्य देवस्य परस्य परमात्मनः ।
परस्य परतो ज्योतेः परतत्त्वस्वरूपिणः ॥ १० ॥

शास्त्रं भगवतो विष्णोः मुखाम्बुजविनिर्गतम् ।
पञ्चरात्राख्यममृतं पुण्यं पापविनाशनम् ॥ ११ ॥

यथा सर्वेषु देवेषु परो नारायणः स्मृतः ।
तथा सर्वेषु शास्त्रेषु पञ्चरात्रं परं स्मृतम् ॥ १२ ॥

पञ्चरात्रोक्तविधिना योऽर्चयेत् पुरुषोत्तमम् ।
तस्य सांसारिकं दुःखं न भवेन्नात्र संशयः ॥ १३ ॥

नारायणमुखाच्छ्रुत्वा यथास्वमतिवैभवम् ।
*अवधार्य प्रवक्तॄणां भेदोऽनन्तस्य कर्हिचित्* ॥ १४ ॥

*विद्यन्ते तत्र भेदानां(?) लोके कश्यपनन्दन* ।
तथापि तन्त्राण्यधुना प्राधान्येन स्मृतानि वै ॥ १५ ॥

कथ्यन्ते कानिचिद्विप्र श्रृणुष्वावहितो मुने ।
विष्णुसिद्धान्तमात्रयं परमा विश्वसंहिता ॥ १६ ॥

सनत्कुमारं सत्याख्यं विश्वामित्रीयमित्यपि ।
पाद्मं जया सात्त्वतं च पौष्करं पुरुषोत्तमम् ॥ १७ ॥

---

8–(d) M वेदे for देवे.
9–(c) M महा° for भवा.
11–(a) M स्वयं for शास्त्रं
17–(a) ABKM सत्वा° for सत्या.

श्रीप्रश्नं च महीप्रश्नं मायावैभविकं तथा ।
माहेन्द्रसंहिता पञ्चप्रश्नाख्यं श्रीकरं तथा ॥ १८ ॥

पद्मोद्भवं नारदीयं नलकूबरमित्यपि ।
त्रैलोक्यमोहनं तन्त्रं वासिष्ठं सनकं तथा ॥ १९ ॥

अहिर्बुध्न्यं चान्द्रमसं तत्त्वसागरसंज्ञितम् ।
विष्वक्सेनं विहङ्गेन्द्रसंहिता भार्गवं तथा ॥ २० ॥

पारमेश्वरमौपेन्द्रं मारीचं दक्षसंहिता ।
शौनकीयं पुष्टितन्त्रं कपिञ्जलमतः परम् ॥ २१ ॥

जैमिनं वामनं तन्त्रं ब्रह्मसिद्धान्तमेव च ।
वैयासं चैव हैरण्यं पाराशर्यं च शाम्बरम् ॥ २२ ॥

वीरमङ्गलिकं चैव प्रह्लादं मूलसंहिता ।
मार्कण्डेयं महालक्ष्मीसंहिता कापिलं तथा ॥ २३ ॥

ब्राह्मं नारायणाख्यं च याज्ञवल्क्यं नृकेसरि ।
सांवर्तं श्रीकरं सौरं सौम्यं भागवतं तथा ॥ २४ ॥

बार्हस्पत्यं जामदग्न्यं याम्यसंज्ञात्मकं तथा ।
विष्णुसद्भावसंज्ञं च तेजोद्रविणमित्यपि ॥ २५ ॥

---

19–(a) M पाद्मो° for पद्मो.

20–(a) My आहि° for अहि°

(b) ABKM. तन्त्र for तत्त्व

21–(cd) My. Om.

22–My. Om.

–(d) KM सा. for शा.

23–(a) K माङ्गलिकं for मङ्गलिकम्

–(ab) My. Om.

धनदीयं च कौमारं विष्णुवैभविकं तथा ।
विष्णुपूर्वरहस्यं च तथैवानन्दसंज्ञितम् ॥ २६ ॥

हारीतं योगहृदयं तथैवोशनसाह्वयम् ।
परपौरुषसंज्ञं च पौलस्त्यं गौतमं तथा ॥ २७ ॥

शाकल्यं चापि जाबालं कात्यायनमतः परम् ।
औपगायनसंज्ञं च तथा वाल्मीकिसंहिता ॥ २८ ॥

बोधायनमथागस्त्यं कार्ष्ण्यं शातातपं तथा ।
भारद्वाजं पैङ्गलं च त्रैलोक्यविजयं तथा ॥ २९ ॥

आग्नेयं वारुणं चैन्द्रं ब्रह्मनारदसंहिता ।
उमामहेश्वरं शुक्रं रुद्राख्यं पार्षसंहिता ॥ ३० ॥

संकर्षणं च प्रद्युम्नं नन्दाख्यं शर्वसंहिता ।
प्राचेतसं राघवं च कल्किसंज्ञं तथैव च ॥ ३१ ॥

महासनत्कुमाराख्यं रुद्राख्यं स्कन्दसंहिता ।
वाराहं मिहिराख्यं च तथैवामृतसंहिता ॥ ३२ ॥

इत्येवमुक्तं तन्त्राणां शतमष्टोत्तरं मुने ।
एतानि तन्त्रनामानि यो जानाति स मुक्तिभाक् ॥ ३३ ॥

---

26–(a) My सनकं पद्म for धनदीयं च
–(d) ABKM तथा चा° for तथैवा.

27–(a) ABM योगि for योग

28–(d) K संज्ञिता for संहिता

30–(a) ABKM चैव for चैन्द्रं
(b) M संहिते for संहिता
(c) A °श्वरशुक्रं for °श्वरं शुक्रं
BKM शुक्रं for शुक्रं
(d)–K रत्ना° for रुद्रा·

31–(b) ABKM सर्व for शर्व

3-(c) ABKM वाराह मिहिराख्यं for वाराहं मिहिराख्यं

एतेषां ग्रन्थसंख्या च शतकोटिप्रमाणतः ।
युगक्रमवशाद्विप्र वृद्धिं ह्रासं च गच्छति ॥ ३४ ॥

*ब्रह्मणा पूर्वमाख्यातमयुतग्रन्थसंख्यया* (?) ।
तत्पुनर्मतिमान्द्येन *मया पञ्चसहस्रकैः (?)* ॥ ३५ ॥

ज्ञातव्यं तात वक्ष्यामि संक्षेपात् कश्यपात्मज ।
सहस्रत्रयमानेन सुग्रहत्वाय सुव्रत ॥ ३६ ॥

एतत् श्रुत्वा गुरुमुखात् दीक्षामासाद्य यत्नतः ।
कर्षणादिप्रतिष्ठान्तं सर्वं कर्म समाचरेत् ॥ ३७ ॥

इह लोकेऽखिलान् भोगान् पुत्रपौत्रादिभिः सह ।
भुक्त्वान्ते परमं दिव्यं पदं वैष्णवमाप्नुयात् ॥ ३८ ॥

॥ इति पञ्चरात्रे महोपनिषदि विश्वामित्रसंहितायां
[पञ्चरात्रनिर्वचनं नाम] द्वितीयोऽध्यायः ॥

## तृतीयोऽध्यायः

काश्यपः—

गुरुरेवं त्वया प्रोक्तो मुने किंलक्षणः स्मृतः ।
*किं वा योनिःसमाचार*(किंयोनिर्वा किमाचारः) स्तच्छिष्यश्चापि कीदृशः ॥ १ ॥

विश्वामित्रः—

श्रूयतामभिधास्यामि गुरोर्लक्षणमुत्तमम् ।
ब्राह्मण्यां ब्राह्मणाज्जातो यथावत् साङ्गवेदवित् ॥ २ ॥

---

36–(b) ABKM शृणुष्व कशिपात्मज
–(c) ABKM सहस्रत्वं मयानेन
–(d) ABKM संग्रह° for सुग्रह°
38–(a) M कामान् for भोगान्
1–(b) ABKM My. लक्षणं स्मृतम् for ° लक्षणः स्मृतः
–(d) ABKM °ष्यः क्वापि ks °ष्यस्यापि for °ष्यश्चापि

कृतश्रमः शब्दशास्त्रे बहुशः प्रयतात्मवान् ।
न्यायशास्त्रे च निष्णातो वैशेषिकविचक्षणः ॥ ३ ॥

मीमांसापारदृश्वा च सांख्ये योगे च निष्ठितः ।
ज्योतिषामयने कल्पे शीक्षायां च विशारदः ॥ ४ ॥

निरुक्ते छन्दसां शास्त्रे वास्तुशास्त्रे तथैव च ।
सर्वशास्त्रार्थतत्त्वज्ञः प्रतिभानसमन्वितः ॥ ५ ॥

वेदान्तविश्रन्तमनाः कर्मणां च प्रयोगवित् ।
पञ्चरात्रार्थनिष्णातः पञ्चकालपरायणः ॥ ६ ॥

सृष्टिसंहारतत्त्वज्ञो लोकानां करुणाकरः ।
स्थिरधीर्मधुराभाषी विनीतः सत्यसंगरः ॥ ७ ॥

विमत्सरः प्रसन्नात्मा साधुर्वाग्मी जितेन्द्रियः ।
*उपेन्द्रियः*(?) पण्डितश्च पुण्यापुण्यविवेकभाक् ॥ ८ ॥

प्रासादप्रतिमादीनां गुणदोषविशेषवित् ।
नित्यस्नायी शुद्धवासाः शुद्धवेषः शुभाश्रयः ॥ ९ ॥

दोषाभिष्वङ्गरहितो ज्ञानी नित्यं जितेन्द्रियः ।
विष्णोराराधनपरो हुताग्निर्मन्त्रवित्तमः ॥ १० ॥

सर्वसंशयसंछेत्ता शिष्याणां शान्तमानसः ।
वैष्णवानागतान् दृष्ट्वा ह्यभ्युत्थानाभिवादनैः ॥ ११ ॥

---

3–(a) ABK Ks. °श्रुतः for °श्रमः
4–(d) M विशेषतः for विशारदः
5–(b) M वस्तु for वास्तु
–(c) ABKM न्याय for सर्व
6–(c) My °रात्रादि for °रात्रार्थ
8–(b) ABKM °वग्वि° ks ° वाङ्गी for °वग्मी
11–(d) ABK Ks My चाभ्युत्थाया. for ह्यभ्युत्थाना.

प्रतिग्रहीतार्चनाभिरर्घ्याद्याभिः कुतूहलात् ।
अनन्यचेताः सततं विष्णोर्भजनतत्परः ॥ १२ ॥

समयाचारनिरतः संविद्वाग्मी गुरोः प्रियः ।
प्रेष्यवर्गाशनात् पश्चात् स्वयं भोक्ता सतां मतः ॥ १३ ॥

पराङ्मुखो निषिद्धेषु परमास्तिक्यसंयुतः ।
धृतोर्ध्वपुण्ड्रः सततं शस्तया श्वेतमृत्स्नया ॥ १४ ॥

शङ्खचक्रादिभिश्चिह्नैः स्वेषु स्थानेषु लाञ्छितः ।
अन्यूनानतिरिक्तैश्च सर्वाङ्गैः समलङ्कृतः ॥ १५ ॥

आभिरूप्यगुणोपेतः प्रजारञ्जनतत्परः ।
एवं लक्षणसंयुक्तो यः स आचार्य उच्यते ॥ १६ ॥

शिष्याणां लक्षणं वच्मि तच्छृणुष्व समाहितः ।
त्रिषु वर्णेषु संभूतः प्रशस्तकुलसंभवः ॥ १७ ॥

अधीतसाङ्गवेदश्च नित्यस्नायी जितेन्द्रियः ।
श्रुतवृत्तोपसंपन्नः सत्यवाक् पाठतत्परः ॥ १८ ॥

आचार्यभक्तियुक्तश्च सुशीलः शाठ्यवर्जितः ।
अलुब्धः संविभागी च कृतज्ञः सज्जनादृतः ॥ १९ ॥

स्वदारमात्रसंतुष्टः शास्त्रश्रवणतत्परः ।
संवत्सरैस्त्रिभिर्वापि द्वाभ्यां वैकेन वा द्विज ॥ २० ॥

परीक्षितः प्रसन्नात्मा विष्णुभक्तिसमन्वितः ।
अपर्युषितभोक्ता च जिह्वाचापलवर्जितः ॥ २१ ॥

संनिधौ च गुरोर्मौनी भूमावेवोपवेशकः ।
मातापित्रोश्च शुश्रूषुः श्रौतस्मार्तक्रियापरः ॥ २२ ॥

---

13–(c) ABKM °वर्गाविताः for °वर्गाशनात्
–(d) ABKM समयज्ञः ks स्वयमश्नन् for स्वयं भोक्ता
19–(b) My विरागी for सुशीलः
21–(b) My परायणः for समन्वितः

गुरोः पत्न्यां गुरोः पुत्रे गुरुवद्वृत्तिसंयुतः ।
मित्राणामनभिद्रोही द्वेष्यसंगविवर्जितः ॥ २३ ॥

निषिद्धाचारविमुखो वृद्धानामभिवादकः ।
अग्निकार्ये च निरतो गुरोर्वेश्मन्यतन्द्रितः ॥ २४ ॥

आराधको वैष्णवानां वेद्यानां शुभलक्षणः ।
धृतोर्ध्वपुण्ड्रतिलकः सदा द्वादशनामभिः ॥ २५ ॥

प्रशस्तोज्ज्वलवेषश्च शङ्खचक्रादिलाञ्छितः ।
एवमादिगुणैर्युक्तः स्थिरधीः शिष्य उच्यते ॥ २६ ॥

स्त्रियः शूद्राश्चानुलोमाः कल्याणगुणसंयुताः ।
यदि तानपि शिष्यत्वे गृह्णीयात् कृपया गुरुः ॥ २७ ॥

बाधिर्यादिभिराचार्यो दोषैः कैश्चिद्युतो यदि ।
न स त्याज्यो भवेदेष दीक्षितश्चक्रमण्डले ॥ २८ ॥

तद्गतं ज्ञानपौष्कल्यं दोषांश्च गुणतां नयेत् ।

इति पञ्चरात्रे महोपनिषदि विश्वामित्रसंहितायां
[गुरुशिष्यलक्षणं नाम] तृतीयोऽध्यायः ॥

---

23-(a) M पित्रोः for पुत्रे

24-(c) Ks, My अग्नौ व्रतेन निवसन्

26-(d) ABKM सुष्ठु. for स्थिर.

28-(a) AKs आधिव्याधि. for बाधिर्यादि.

-(c) M सत्यज्ञो भवेद्येष for स त्याज्यो भवेदेष
My. सं for स

Colophon:- Ks आचार्यलक्षणो नाम for [गुरुशीष्यलक्षणं नाम]

# चतुर्थोऽध्यायः

काश्यपः—

भगवत्परमित्युक्तं तन्त्रमेतत् त्वया गुरो ।
किमर्थो भगवच्छब्दः कीदृशो भगवांश्च सः ॥ १ ॥

विश्वामित्रः—

वदामि भगवच्छब्दं शृणुष्व मुनिसत्तम ।
ज्ञानं निस्सीममैश्वर्यमनन्यपुरुषाश्रयम् ॥ २ ॥

सर्वातिशायिनी शक्तिः बलं सर्वोत्तमं तथा ।
अन्यैरहार्यं वीर्यं च तेजः सर्वोत्तरोत्तरम् ॥ ३ ॥

एतानि षड्गुदीर्यन्ते भगशब्देन काश्यप ।
यस्मिन्निमे गुणाः सन्ति स उक्तो भगवानिति ॥ ४ ॥

एकवक्त्रो द्विहस्तश्च शुद्धस्फटिकसंनिभः ।
अयुतादित्यवह्नीन्दुकोटिकोटिसमप्रभः ॥ ५ ॥

तेजोऽतिरेकाद् दुष्प्रेक्षः शङ्खचक्रधरः स्वयम् ।
कौस्तुभं वक्षसा बिभ्रत् श्रीवत्सश्रीनिकेतनः ॥ ६ ॥

पीताम्बरधरो नित्यं वनमालाविभूषितः ।
किरीटहारकेयूरकुण्डलोज्ज्वलविग्रहः ॥ ७ ॥

एवंरूपो वासुदेवो भगवानिति शब्दितः ।
हृत्पुण्डरीकमध्यस्थं यं ध्यायन्ति मुमुक्षवः ॥ ८ ॥

---

1–(a)ABKM पद for पर
–(c) My कश्चार्थो भगवच्छब्दे/कीदृगर्थो भगशब्दः
3–(b) ABKM सर्वोत्तरं for सर्वोत्तमम्
4–(a) AKM षड्विधीयन्ते for षड्गुदीर्यन्ते
5–(a) ABKM स्तिस्रो for वक्त्रो

V—3

गुणवैषम्यतोऽभूवन् तस्मात् संकर्षणादयः ।

काश्यपः—

गुणवैषम्यतो जाताः संकर्षणमुखा इति ॥ ९ ॥
आख्यातं भवता ब्रह्मन् तन्मे विस्तरतो वद ।

विश्वामित्रः—

पूर्वमुक्तं भगवतो *वासुदेवो ददत् त्रिधा* ॥ १० ॥

अन्योऽभूद्वासुदेवाख्यः सृष्टिस्थित्यन्तकारकः ।
एकवक्त्रश्चतुर्बाहुः शङ्खचक्रगदाब्जभृत् ॥ ११ ॥

श्रीवत्सं वक्षसा बिभ्रत् कौस्तुभं च प्रभोज्ज्वलम् ।
वनमालां तथा बिभ्रत् दिव्यामतिमनोहराम् ॥ १२ ॥

पीताम्बरधरः सौम्यः शिखिकण्ठोपमच्छविः ।
स्वातन्त्र्येण स्वकीयेन द्विधात्मानं चकार सः ॥ १३ ॥

तयोर्भगवतोरेको विमलस्फटिकच्छविः ।
अन्यः कालाम्बुदाभासो नारायण इतीरितः ॥ १४ ॥

वासुदेवात् ततो जज्ञे संकर्षणसमाह्वयः ।
तस्मात् प्रद्युम्नसंभूतिरनिरुद्धस्ततोऽभवत् ॥ १५ ॥

एते सर्वे चैकवक्त्राश्चतुर्बाहुसमन्विताः ।
सर्षिभिर्जातिभिः सर्वैर्वासुदेवसमैर्युताः ॥ १६ ॥

---

9–(ab) My. om.
10–(d) My. वासुदेवादयं श्रितात्
11–(b) M कारणः for कारकः
13–(c) My. कायेन for कीयेन
–(d) My. चकासता for चकार सः
14–(d) A समाह्वयः for इतीरितः
15–(c) ABKM समभूत् for संभूतिः

ज्ञानाधिक्यादभूदेवं संकर्षणसमाह्वयः ।
प्रद्युम्नस्तु बलाधिक्यादैश्वर्याधिक्यतोऽभवत् ॥ १७ ॥

अनिरुद्ध इमे सर्वे स्वैः स्वैः षड्भिर्गुणैर्युताः ।
चतुर्भुजाः सर्व एते प्रागुक्तायुधधारिणः ॥ १८ ॥

वासुदेवात् प्रथमतः त्रयो देवास्तु जज्ञिरे ।
चत्वारश्चाथ तन्नाम्ना क्रमादेते द्विजोत्तम ॥ १९ ॥

चत्वारोऽमी चतुर्भ्यश्च संभूतास्तु यथाक्रमम् ।
अधोक्षजो नृसिंहश्च वामनो भार्गवस्तथा ॥ २० ॥

जनार्दन उपेन्द्रश्च हरिः कृष्णश्च नामतः ।
वासुदेवाद्देवदेवादष्टैता मूर्तयोऽभवन् ॥ २१ ॥

ब्राह्मी तु प्रथमा मूर्तिः प्राजापत्या च वैष्णवी ।
दिव्या चार्षी मानुषी च सप्तमी कीर्तितासुरी ॥ २२ ॥

पैशाची चाष्टमी तासां मूर्तीनां दशमूर्तयः ।
मीनमुख्या द्विजश्रेष्ठ व्यूहे ह्युक्ता यथाक्रमम् ॥ २३ ॥

---

17–(d) ABKM °र्यादधिको° for °र्याधिक्यतो°

18–(b) A सर्वैः for स्वैः स्वैः
M. Om. गुणैः
My. स्ववर्णैष स-युंताः

19–(a) My. तु प्रथमाः for प्रथमतः
–(b) K. वेदा for देवा
My सुजज्ञिरे for °स्तु जज्ञिरे

21–(c) My. °देव for °द्देव

23–(a) My. स्वैरा च for पैशाची
(b) My मूर्तानां for मूर्तीनां
–(cd) My °श्रेष्ठा व्यूहेभ्यस्था for °श्रेष्ठ व्यूहे ह्युक्ता

मत्स्यकूर्मवराहास्तु वासुदेवात् प्रजज्ञिरे ।
*अच्युतादच्युतो भूत्वा वासुदेवाच्च जज्ञिरे* ॥ २४ ॥

बभ्रूत्रैलोक्यमोहाह्वौ दाशार्हः शौरिसंज्ञकः ।
अन्नाधिपतिनामा च पञ्चैता मूर्तयो द्विज ॥ २५ ॥

संकर्षणाद्धयग्रीवः शङ्खोदरनृकेसरी ।
वैकुण्ठमूर्तिराद्यस्तु मुकुन्दोऽथ वृषाकपिः ॥ २६ ॥

वराहश्च तथानन्दो नागराजश्च जज्ञिरे ।
सर्वासामेव मूर्तीनां मुहूर्तसमये द्विज ॥ २७ ॥

शङ्खचक्रगदापद्माद्यायुधानि सहैव तु ।
किरीटहारकेयूरकटकानि च जज्ञिरे ॥ २८ ॥

*श्रियादयोऽथ देव(व्यः?)स्तु श्रीवत्सा(त्सात्?)दिव्यालाञ्छना:(नात्?)* ।
अजायन्ताथ गरुडः संजातो मूर्तिसंचयात् ॥ २९ ॥

वासुदेवादिकाद्वेदमूर्तिस्तद्वाहनात्मना ।
कुमुदः कुमुदाक्षश्च पुण्डरीकोऽथ वामनः ॥ ३० ॥

शङ्कुकर्णः सर्पनेत्रः सुमुखः सुप्रतिष्ठितः ।
प्रश्निगर्भो मानवश्च भूतनाथा अमी दश ॥ ३१ ॥

सर्वैः पारिषदैः सार्धमनिरुद्धाङ्घ्रितोऽभवन् ।
सर्वतः पाणिपादाच्च सर्वतोऽक्षिशिरोमुखात् ॥ ३२ ॥

---

24–(a) My मत्स्यः कूर्मो वराहस्तु
–(d) My °देवश्च for °देवाच्च
25–(a) My बभ्रः for बभ्रू
(b) M सभु/सरि for शौरि
26–(cd) My °राद्यास्तु जज्ञिरे......for °राद्यस्तु मुकुन्दो°
29–(a) A प्रिया° for श्रिया°
(b) श्रीवत्सो दिव्यलाञ्छिताः
–(d) M मूर्तसंजयात् for मूर्तिसंचयात्
31–(a) My कण्ठ for °कर्ण and सर्व° for सर्प°

सर्वतः श्रुतिसंयुक्तादनिरुद्धात्मनः प्रभोः।
अङ्गादासीत् जगत्सर्वं सदेवासुरमानुषम् ॥ ३३ ॥

इन्द्रवह्नी च चत्वारो वेदाश्चाङ्गानि षट् तथा ।
अजायन्तास्य मुखतो द्यौर्मूर्ध्नश्चक्षुषो रविः ॥ ३४ ॥

चन्द्रमा मनसो जातः श्रोत्रात् सर्वा दिशोऽभवन् ।
नाभेरभून्नभश्चास्य पद्भ्यां भूमिरजायत ॥ ३५ ॥

वायुः प्राणात् तथा मृत्युरपानात् केशतोऽम्बुदः ।
क्षणादयः कालभेदाः शरीरादस्य जज्ञिरे ॥ ३६ ॥

ओषध्यो रोमकूपेभ्यो वनस्पतिभिरन्विताः ।
आसन् यज्ञाश्च बहवो दक्षिणासहिता द्विज ॥ ३७ ॥

ब्राह्मणा मुखतोऽभूवन् बाह्वोश्च क्षत्रियास्तथा ।
ऊर्वोर्वैश्यास्तथा पद्भ्यां शूद्रा जाताः पृथक् पृथक् ॥ ३८ ॥

कृत्वैवं जगतः सृष्टिं क्षीरार्णवगतः प्रभुः ।
अनन्तभोगिपर्यङ्के श्रीभूमिभ्यां समन्वितः ॥ ३९ ॥

सनन्दनाद्यैर्योगीन्द्रैश्चिन्त्यमानो हृदम्बुजे ।
ब्रह्मेन्द्रशर्वप्रमुखैर्वन्द्यमानो मरुद्गणैः ॥ ४० ॥

चण्डाद्यैर्द्वारपालैश्च भूतेशैः कुमुदादिभिः ।
विष्वक्सेनगरुत्मद्भ्यां सेव्यमानश्च सर्वदा ॥ ४१ ॥

शेते विष्णुरचिन्त्यात्मा भूतानामनुकम्पया ।
इत्येवं गुणवैषम्यात् मूर्तिभेदसमुद्भवः ॥ ४२ ॥

जगदुद्भूतिसंयुक्तः प्रोक्तस्ते कश्यपात्मज ।
अतः परं महाप्राज्ञ किमन्यत् कथयामि ते ॥ ४३ ॥

**इति पञ्चरात्रे महोपनिषदि विश्वामित्रसंहितायां वासुदेवादिमूर्त्युत्पत्तिकथनं नाम चतुर्थोऽध्यायः**

---

**Colophon :—ABKM. Om.** वासुदेवादिमूर्त्युत्पत्तिकथनं नाम.

# पञ्चमोऽध्यायः

काश्यपः—

अनिरुद्धाज्जगत्सृष्टिः साक्षाद्भगवतस्त्वया ।
उक्ता यत्सृजति ब्रह्मा लोकानित्यनुशुश्रुम ॥ १ ॥

तत्सत्यं किमुतासत्यं महत् कौतूहलं हि मे ।
वर्तते ज्ञातुमधुना कथ्यतामखिलं गुरो ॥ २ ॥

[विश्वामित्रः—]

देवो नारायणः श्रीमान् क्षीरार्णवनिकेतनः ।
आदौ विनोदमन्विच्छन् स्वातन्त्र्येणात्मनः प्रभुः ॥ ३ ॥

अपः सृष्ट्वा स्वकं वीर्यं निदधे तासु चोज्ज्वलम् ।
हैरण्यमण्डमभवद् रविकोटिसमप्रभम् ॥ ४ ॥

तस्मादभूत् स्वयं ब्रह्मा सर्वलोकपितामहः ।
तं दृष्ट्वा भगवान् विष्णुर्लोकसृष्ट्यर्थमादिशत् ॥ ५ ॥

तथेत्युक्त्वा पुनर्ब्रह्मा सनकादीन् तथासृजत् ।
तानुवाचाथ स ब्रह्मा प्रजाः सृजत पुत्रकाः ॥ ६ ॥

इत्युक्ता अपि ते सर्वे तथा स्वायंभुवा द्विज ।
मनो न प्रवणं चक्रुः जगन्निर्माणकर्मणि ॥ ७ ॥

ते तु सर्वे समभवन् योगिनो विजितेन्द्रियाः ।
निर्ममा निरहंकारा रागद्वेषविवर्जिताः ॥ ८ ॥

विशुद्धसत्वाः सततं तत्त्वचिन्तापरायणाः ।
इत्येवं तेषु सर्वेषु *जगत्सृष्ट्यर्थमेषु च* ॥ ९ ॥

---

1–(c) ABK सृजति ब्रह्माथ M सृजति ब्रह्मादौ for यत्सृजति ब्रह्मा
4–(a) AM अपासृजत् for अपः सृष्ट्वा

चुकोप भगवान् ब्रह्मा स्वतन्त्रान् स्वसुतान् प्रति ।
ततः क्रुद्धस्य देवस्य ललाटात् कुटिलभ्रुवः ॥ १० ॥

प्रादुर्बभूव पुरुषो नीललोहितवर्णभाक् ।
नाम मह्यं ददस्वेति सोऽरोदीत् पितुरग्रतः ॥ ११ ॥

रुदन्तं तमथो दृष्ट्वा व्याजहार प्रजापतिः ।
अरोदीरिति यत्तेन रुद्रनामा भविष्यसि ॥ १२ ॥

द्विधा कुरु शरीरं ते पुत्रकेत्याह तं प्रभुः ।
ततो हृष्टमना रुद्रः शरीरं स द्विधाकरोत् ॥ १३ ॥

अर्धेन सोऽभवन्नारी नरोऽप्यर्धेन चाभवत् ।
तस्मात्तु मिथुनाज्जाताः रुद्राणां कोटयोऽद्भुताः ॥ १४ ॥

चतुर्भुजाः शूलहस्तास्त्रिनेत्राः क्रूरमूर्तयः ।
प्रधानास्तेषु च मुने रुद्रा एकादशाभवन् ॥ १५ ॥

ब्रह्माथ रुद्रसृष्टिं तां व्यर्थां वीक्ष्य ततः प्रभुः ।
मरीचिमत्रिं पुलहं पुलस्त्यं च भृगुं तथा ॥ १६ ॥

दक्षं च मनसा देवसृष्ट्यर्थं निर्ममे पुनः ।
तैरेव सकलं सृष्टं जगत् स्थावरजङ्गमम् ॥ १७ ॥

इत्येवं जगतः सृष्टिं विधाय कमलासनः ।
ध्यानं परं समास्थाय पश्यन्नास्ते परं महः ॥ १८ ॥

इति ते ब्रह्मणः सृष्टिः कथिता द्विजसत्तम ।
ब्रह्मा हरो विष्णुरिति भेदो नैवास्ति कर्हिचित् ॥ १९ ॥

---

10–(a) My. चुक्रोश for चुकोप

14–(c) ABKM मिथुनं जातं for मिथुनाज्जाताः
–(d) M रुद्राण्यां for रुद्राणां
ABKM °ऽभवन् for °ऽद्भुताः

17–(a) ABKM देवः for देव

गुणत्रयं समास्थाय भगवान् पुरुषोत्तमः ।
सृष्टिं स्थितिं संहृतिं च जगतः कुरुते स्वयम् ॥ २० ॥

मूर्तीरास्थाय भगवान् ब्रह्मविष्णुशिवात्मिकाः ।
विना तेन तृणाग्रं च न किंचिच्चलितुं क्षमम् ॥ २१ ॥

काश्यपः—

किं गुणानां त्रयं प्रोक्तमधिष्ठाय च कं गुणम् ।
किं च रूपं समास्थाय किं कर्म कुरुते परः ॥ २२ ॥

विश्वामित्रः—

सत्त्वं रजस्तम इति गुणत्रयमुदाहृतम् ।
रजोगुणमधिष्ठाय ब्रह्मनामा सृजत्ययम् ॥ २३ ॥

सत्त्वमास्थाय विष्ण्वाख्यः पालयत्यखिलं जगत् ।
तमस्संश्रयणाद्रुद्ररूपी संहरति प्रजाः ॥ २४ ॥

सृष्टिस्थितिविनाशानामेकमेव हि कारणम् ।

काश्यपः—

जानामि कस्माल्लोकोऽयमाविर्भवति सुव्रत ॥ २५ ॥

अन्ते च कस्मिन् वसति कथ्यतां द्विजपुंगव ।
प्रसादप्रवणं चित्तं मयि चेत्तद् द्विजोत्तम ॥ २६ ॥

विश्वामित्रः—

नारायणस्य द्वे रूपे पुरुषः प्रकृतिश्च ते ।
आत्मेच्छयानुप्रविश्य द्वितयं क्षोभयत्यसौ ॥ २७ ॥

---

21–(b) My. °त्मकः for °त्मिकाः

24–(c) ABKM तमसः शंकरो भूत्वा
–(d) ABKM उपसंहरति for ° रूपी संहरति

26–(a) My विशति for वसति

अनादिरेषा प्रकृतिस्त्रिगुणा चाविनाशिनी ।
चराचरमिदं सूते जगत् पुरुषसंश्रयात् ॥ २८ ॥

गुणसाम्ययुताद् तस्मात् पुरुषेणाप्यधिष्ठितात् ।
अभूत् तत्त्वं महन्नाम गुणैस्तैस्त्रिविधं द्विज ॥ २९ ॥

तस्मादभूदहंकारः त्रिविधः संप्रकीर्तितः ।
वैकारिकस्तैजसश्च भूतादिश्चेति नामतः ॥ ३० ॥

वैकारिकात् सत्त्वयुतादहंकारात् बभूव ह ।
श्रोत्रत्वक्चक्षुजिह्वाग्रघ्राणमिन्द्रियपञ्चकम् ॥ ३१ ॥

रजोयुक्तादहंकारात तैजसात् पञ्च जज्ञिरे ।
कर्मेन्द्रियाणि वाक्पाणिपायूपस्थपदानि च ॥ ३२ ॥

तमोयुक्तादहंकारात् भूतादेः समजायत ।
शब्दतन्मात्रमेतस्माद् आकाशः संबभूव ह ॥ ३३ ॥

आकाशात् स्पर्शतन्मात्रं वायुस्तस्मादभूद् द्विज ।
वायोश्च रूपतन्मात्रं क्रमेणाग्निमजीजनत् ॥ ३४ ॥

अग्नेश्च रसतन्मात्रं तस्मादापः प्रजज्ञिरे ।
अद्भ्यश्च गन्धतन्मात्रमभूत् तस्मादभून्मही ॥ ३५ ॥

आकाशस्य गुणः शब्द एक एव प्रकीर्तितः ।
वायोः स्पर्शश्च शब्दश्च द्वौ गुणौ परिकीर्तितौ ॥ ३६ ॥

---

29–(c) ABKM महादादि for महन्नाम
30–(c) AKM वैकालिक for वैकारिक
31–(a) AKM वैकालिकात् for वैकारिकात्
–(b) A °दहं वै संबभूव ह ।
BKM °दहं संबभूव ह ।
–(c) AKM जिह्वाख्या for जिह्वाग्र
–(d) My घ्राणाविन्द्रिय for घ्राणमिन्द्रिय
34–(d) ABKM अभूत्सो° for क्रमेणा°

अग्नेः स्पर्शश्च शब्दश्च रूपं चेति गुणत्रयम् ।
चत्वारोऽपां गुणाः शब्दरूपस्पर्शरसाः स्मृताः ॥ ३७ ॥

भूमेः पञ्च गुणाः शब्दस्पर्शरूपरसा अपि ।
गन्धश्च पञ्च भूतानि जातान्येवं द्विजोत्तम ॥ ३८ ॥

नानावीर्याणि चान्योन्यसंसर्गेण विना स्वयम् ।
नाशकन् जगतः सृष्टौ तस्मात् संहतिमाययुः ॥ ३९ ॥

महदाद्या विशेषान्ताः प्रधानपुरुषेरिताः ।
अण्डमुत्पादयन्ति स्म ते सर्वे लोककारणम् ॥ ४० ॥

देवस्य पद्मनाभस्य नाभौ हेममयं बृहत् ।
तस्मात् स्वयंभूर्भगवान् तेन सृष्टमिदं जगत् ॥ ४१ ॥

एवं यथा प्रकृतितो जगदासीच्चराचरम् ।
तथा तत्रैव विप्रेन्द्र लयमेति पुनः पुनः ॥ ४२ ॥

**इति पञ्चरात्रे महोपनिषदि विश्वामित्रसंहितायां**
**[जगत्सृष्टिलयकथनं नाम] पञ्चमोऽध्यायः ॥**



# षष्ठोऽध्यायः

काश्यपः—

भगवन् कथ्यतां मह्यं गुरुणानेन किं खलु ।
शिष्येभ्य उपदेष्टव्यं कथं वा तेन गृह्यते ॥ १ ॥

विश्वामित्रः—

आचार्येणोपदेष्टव्या मन्त्राः प्रणवपूर्वकाः ।
प्रणवस्य समुद्धारः श्रूयतां प्रथमं द्विज ॥ २ ॥

प्रथमं विष्णुमुद्धृत्य श्रीधरं तदनन्तरम् ।
एकीकृत्याचरेदेतौ मन्दरं तदनन्तरम् ॥ ३ ॥

एष प्रणव इत्युक्तः परब्रह्मप्रवक्तृकः ।
एकाक्षरो मनुरयं प्लुतोदात्तमिमं पठेत् ॥ ४ ॥

ऋषिर्ब्रह्मा भवेदस्य देवीगायत्रसंज्ञितम् ।
छन्दोऽस्य प्रतिपाद्यं तु परमात्मा हरिः स्वयम् ॥ ५ ॥

बुद्धिस्तत्त्वं स्मृतं क्षेत्रं परमं पदमुच्यते ।
सितो वर्णः समुद्दिष्टः षडङ्गान्यपि मे शृणु ॥ ६ ॥

ज्ञानैश्वर्येऽथ(?)शक्तिश्च बलवीर्ये सतेजसी ।
नमः स्वाहा वषट् हुंफट् वौषडन्तानि तान्यपि ॥ ७ ॥

चतुर्थ्यन्तानि हृदये शिरसः शिखया सह ।
कवचास्त्रे सनयने क्रमेणैतेन विन्यसेत् ॥ ८ ॥

---

1–(b) ABKM मुने for खलु
–(c) AK कं शिष्यं तूपदेष्टव्यम्
My शिष्यं रूपनिर्देष्टव्यम्
3–(c) A °कृत्यावरा° BM °कृत्यो वरो. for °कृत्याचरे.
4–(b) A °वर्त. for °वक्तृ.
6–(a) BKM °स्वमृतं for स्वं स्मृतम्

आद्यमेषां त्रयाणां स्यात् बीजं बिन्दुविभूषितम् ।
शक्तिं च तद्विदुः सर्वमेनं तत्त्वं जपेन्मनुम् ॥ ९ ॥

अविज्ञातऋषिच्छन्दोदेवताबीजशक्तयः ।
मन्त्राः सर्वे चाङ्गहीना निष्फला जपकर्मणि ॥ १० ॥

तस्मात् सर्वं विदित्वैव जपकर्म समाचरेत् ।
प्रणम्य स्वगुरुं पूर्वं तद्गुरूंश्चान्वगस्य तु ॥ ११ ॥

मन्त्रमूर्त्यादिकान् पश्चात् नत्वैतज्जपमाचरेत् ।
प्रथमं व्यापकन्यासं वर्णन्यासमतः परम् ॥ १२ ॥

अङ्गन्यासं च तदनु करयोर्वपुषि क्रमात् ।
कृत्वा जपविधिं सम्यगाचरेन्मुनिपुंगव ॥ १३ ॥

मातृकान्यासपूर्वस्तु सर्वमन्त्रजपः स्मृतः ।
शिरोमध्येऽथ वदने दृष्टिश्रोत्रनसायुगे ॥ १४ ॥

कपोलोष्ठोदरद्वन्द्वे ऊर्ध्वाधश्चास्यमध्यगे ।
अचः क्रमेण विन्यस्य करयोः पादयोरपि ॥ १५ ॥

संध्यग्रेषु क्रमान्न्यस्य हलां वर्गचतुष्टयम् ।
पञ्चमं पार्श्वयोः पृष्ठे नाभौ च जठरे तथा ॥ १६ ॥

वक्षःकक्षापरगलकण्ठेष्वपि चतुष्टयम् ।
यकारादि ततः पश्चाच्छकारादिचतुष्टयम् ॥ १७ ॥

---

9–(a) ABKM °मेतत् for °मेषां
–(c) My. उशक्तिबिन्दुसहितम्
–(d) My. एतत् ज्ञात्वा for °मेनं तत्त्वं

12–(b) ABKM एवैतान् for नत्वैतत्

15–(a) My. रद for °दर
(b)– My. मध्यमे for मध्यगे

17–(b) ABKM कक्षे° for कण्ठे.

हृत्पाणिपादयुगले कक्षे हृदि मुखान्तरे ।
विन्यस्य मातृकामेव मूर्तिशक्तियुतां तु वा ॥ १८ ॥

जपः पुंसां समुद्दिष्टो वाग्देवीसंप्रसादकः ।
भाष्यं प्रणवमन्त्रस्य शृणुष्वैकमना द्विज ॥ १९ ॥

अकारार्थो भवेद्विष्णुर्मकारो जीववाचकः ।
अवधारणवाची स्यादुकारेण त्रयेण तु ॥ २० ॥

जीवो नारायणस्यैवेत्ययमर्थो निरूपितः ।
लक्षत्रयं जपेन्मन्त्रं तदर्धं तर्पयेदपि ॥ २१ ॥

होमश्चापि तदर्धं स्यादेवं कृत्वा ततो मनुः ।
सिद्धः स्यात् सिद्धिमात्रेण सर्वकर्म समाचरेत् ॥ २२ ॥

शाकयावकभैक्षाशी त्रिसन्ध्यं स्नानमाचरेत् ।
कृतोर्ध्वपुण्ड्रः सततं देवतालयगोष्ठगः ॥ २३ ॥

पर्वताग्रे नदीतीरे समुद्रतटसंश्रितः ।
अथवा बिल्वमूलस्थो जपकर्म समाचरेत् ॥ २४ ॥

एवं *प्रणवसिद्धस्य* ह्यैहिकामुष्मिकं फलम् ।
करसंपुटसंस्थं स्यात् तस्मादेवं तु साधयेत् ॥ २५ ॥

एतस्मान्न परो मन्त्रः सर्वसिद्धिप्रदायकः ।
सर्वे वेदाः समुत्पन्नाः प्रणवान्मन्त्रनायकात् ॥ २६ ॥

अन्त्यकाले हरिं ध्यायन् वाचा प्रणवमुच्चरन् ।
योगशास्त्रोक्तमार्गेण यः शरीरं परित्यजेत् ॥ २७ ॥

---

18-(a) BKM तत्रादिवर्गतो युग्मे

22-(c) ABKM सिद्धमन्त्रेण for सिद्धिमात्रेण

23&24 My. Om.

25-(c) M सुस्थं for संस्थं

स याति परमं धाम नारायणसमाह्वयम् ।
अथाष्टाक्षरमन्त्रस्य समुद्धारं वदाम्यहम् ॥ २८ ॥

प्रणवं पूर्वमुद्धृत्य भद्रपाणिं सविष्णुकम् ।
ओतदेवयुतं दक्षं विघ्नशं च सगोपनम् ॥ २९ ॥

विश्वात्मानं सादिदेवं शङ्खमादिसमन्वितम् ।
द्वितीयस्वरसंयुक्तं वनमालीं (?) समुद्धरेत् ॥ ३० ॥

अप्रमेयेन संयुक्तं चतुर्गतिमथोद्धरेत् ।
एवमष्टाक्षरो मन्त्र उद्धृतः सर्वसाधकः ॥ ३१ ॥

ओंकारादियुतं बीजमर्धेन्दुकृतशेखरम् ।
शक्तिरायेति मन्त्रान्तोऽस्यान्तर्यामी मुनिः स्मृतः ॥ ३२ ॥

छन्दो गायत्रमुद्दिष्टं देवीपूर्वं च देवता ।
परमात्मा समुद्दिष्टः क्षेत्रं व्योम परं स्मृतम् ॥ ३३ ॥

*वर्णा(र्ण ?)ः शुक्ल(क्लो ?) भवेदस्य* प्रत्यक्षरमृषीन् शृणु ।
गौतमश्च भरद्वाजो विश्वामित्र अनन्तरम् ॥ ३४ ॥

जमदग्निवसिष्ठौ च काश्यपा*ग्नि(त्री ?)सकुम्भजौ* ।
ऋषयोऽष्टौ क्रमादेते वर्णानां समुदाहृताः ॥ ३५ ॥

गायत्र्यादिविराडन्तच्छन्दोऽष्टकमुदाहृतम् ।
धरा ध्रुवश्च सोमश्च तथापोऽग्निर्जलेश्वरः ॥ ३६ ॥

---

29–(c) My. °देह for °देव
30–(d) M °मालं for °मालीं (?)
32–(a) A व्रतं My. कृतं for युतम्
–(d) M. om. स्या
33–(b) ABKM दैव° for देवी
34–(a) A वर्णाः शुक्लस्य वेदस्य M वर्णाः शुक्ल च वेदस्य My. वर्ण-क्यो भवेदस्य
36–(c) ABK सुरद्रुमा ससोमौ च M सुरद्रुमौ ससोमौ च
–(d) BKM जलेश्वराः for र्जलेश्वरः

प्रत्यूषः संप्रभासश्च देवान् प्रत्यक्षरं विदुः ।
क्षेत्राणि परमाकाशं सत्याद्यं लोकसप्तकम् ॥ ३७ ॥

*पृथिव्यन्तर्व्यु(न्तं व्यु ?) त्क्रमेण* वर्णानां क्रमवर्तिनाम् ।
तत्त्वान्यग्निर्वायुवियत् सूर्यो द्यौरथ चन्द्रमाः ॥ ३८ ॥

नक्षत्रसंघाः क्रमशो विद्युद्वर्णाष्टकस्य तु ।
नारा नराणां संघाता नराणां सूनवोऽथवा ॥ ३९ ॥

आपोऽथवा समुद्दिष्टाः तेषामयनमित्ययम् ।
आस्यन्ते वायनमिति तेन नारायणः स्मृतः ॥ ४० ॥

तदीयोऽहं मदीयो न भवेयमिति चार्थना ।
अस्यार्थः कथितो विप्र नरस्तस्मै करोति वा ॥ ४१ ॥

दीक्षापूर्वं गुरोर्लब्ध्वा मन्त्रमेनं शुभेऽहनि ।
मार्गशीर्षे सिते पक्षे द्वादश्यां भक्तिपूर्वकम् ॥ ४२ ॥

नारायणं समाराध्य चक्राब्जे मण्डलोत्तमे ।
नीलाम्बुदप्रतीकाशं पुण्डरीकायतेक्षणम् ॥ ४३ ॥

चतुर्भिर्बाहुकमलैः शङ्खचक्रगदाम्बुजम् ।
दधानं सौम्यवपुषं नीलकुञ्चितमूर्धजम् ॥ ४४ ॥

---

37–(a) ABKM संभ्रमासं च for संप्रभासश्च

38–(a) A °व्यन्तर॰व्युत्क्रमेण K °व्यन्तः उत्क्रमेणMy. °व्यां तत्कृतैरेव for °व्यन्तर्व्युत्क्रमेण
–(c) ABMK विथ for वियत्
–(d) A सूपिशितीभृत् BKM सूपिशितिभृत्

40–(c) A वायमिति तत् for वायनमिति

41–(a) B मदीयेन for मदीयो न
–(b) My. चार्थता for चार्थना

44–(b) ABKM चक्रशङ्खगदाम्बुजे

वसानं पीतवसने पूर्णचन्द्रनिभाननम् ।
ताम्रोष्ठं चारुहसितं लसन्मकरकुण्डलम् ॥ ४५ ॥

श्रीवत्सं कौस्तुभं चैव बिभ्राणं बृहतोरसा ।
मकुटाङ्गदहारादिसर्वाभरणभूषितम् ॥ ४६ ॥

वनमालां दधानं च सूर्यकोटिसमप्रभम् ।
रत्नसिंहासनासीनं लक्ष्म्या देव्या भुवा सह ॥ ४७ ॥

ध्यायन्नेवं शुचिर्भूत्वा जपेन्मन्त्रवरं सुधीः ।
हविष्याशी ब्रह्मचारी लक्षानष्टौ मुदान्वितः ॥ ४८ ॥

चतुर्लक्षं तर्पयेच्च सुशुद्धोषसि काश्यप ।
लक्षद्वयं च जुहुयात् पायसेन तिलैस्तथा ॥ ४९ ॥

हविषाज्येन बिल्वोत्थसमिद्भिरपि नित्यशः ।
एवं कृतवतः पुंसो मन्त्रनाथः प्रसिध्यति ॥ ५० ॥

सिद्धिसंसूचकांश्चैव सुस्वप्नानपि पश्यति ।
एवं संसाधितो मन्त्रः सर्वकामप्रदो भवेत् ॥ ५१ ॥

धर्मार्थकाममोक्षाणां यद्वाञ्छति तदेव तत् ।
नित्यं जपादौ कृत्वा त्रीन् प्राणायामाननन्यधीः ॥ ५२ ॥

करयोश्च शरीरे च व्यापकं प्रथमं न्यसेत् ।
न्यासश्च त्रिविधः प्रोक्तः स सृष्टिस्थितिसंहृतिः ॥ ५३ ॥

दक्षिणाङ्गुष्ठमारभ्य वामाङ्गुष्ठान्तमेव यः ।
न्यासोऽयं सृष्टिसंज्ञः स्यात् व्युत्क्रमेण च संहृतिः ॥ ५४ ॥

अङ्गुष्ठादिकनिष्ठान्तमुभयोः करयोस्तु यः ।
स्थितिन्यासश्च संप्रोक्तो गृहस्थस्तं समाचरेत् ॥ ५५ ॥

---

49–(a) ABKM चातु° for चतु°
–(b) ABKM °द्धेऽम्भसि for °द्धोषसि

53–(d) My. सृष्टिश्च for ससृष्टि

सृष्टिन्यासं ब्रह्मचारी संन्यासी संहृतिं न्यसेत् ।
देहे च शिर आरभ्य पादान्तः सृष्टिसंज्ञकः ॥ ५६ ॥

संहारो विपरीतः स्यात् नाभ्यादिहृदयान्तकः ।
स्थितिन्यासः समुदितः त्रिष्वेकं न्यासमाचरेत् ॥ ५७ ॥

तर्जनीं दक्षिणकरादारभ्यार्णचतुष्टयम् ।
प्रणवाद्यन्तसंयुक्तं तत्कनिष्ठावधि न्यसेत् ॥ ५८ ॥

सबीजकं वामकरेऽप्येवमेव चतुष्टयम् ।
अङ्गुष्ठाभ्यामङ्गुलीनां मध्यपर्वसु विन्यसेत् ॥ ५९ ॥

विन्यस्याङ्गानि च तथा करयोरुभयोरपि ।
अङ्गुष्ठादिकनिष्ठान्तं विन्यस्याङ्गानि वै दश ॥ ६० ॥

शेषमङ्गद्वयं न्यस्येदङ्गुल्यग्रेषु विन्यसेत् ।
देहेऽपि व्यापकन्यासं कृत्वा वर्णाष्टकं पुनः ॥ ६१ ॥

नाभ्यधोगुह्यजान्वग्रपादपृष्ठेष्वपि क्रमात् ।
शिरोऽक्षियुगनासाग्रहृदयेष्वपि विन्यसेत् ॥ ६२ ॥

कनिष्ठाङ्गुष्ठशिरसि संयोज्य प्रथमं न्यसेत् ।
अङ्गुष्ठाभिश्चतसृभिर्द्वितीयं न्यासमाचरेत् ॥ ६३ ॥

जानुनो नैतदग्रे स्यात् पादयोः सममूरुभिः ।
*मूर्ध्न्यांकया (?)* मध्यमया तर्जन्या सा च चक्षुषोः ॥ ६४ ॥

नासाग्रानामिकाङ्गुष्ठशिरोभ्यां हृदये पुनः ।
अङ्गुष्ठतर्जन्यग्राभ्यामष्टवर्णानि विन्यसेत् ॥ ६५ ॥

---

59-(a) BKM My. सबिन्दुकं for सबीजकम्
62-(a) ABKM ऽङ्गुष्ठ for गुह्य
64-(c) मूर्धेन्यकया My. मूर्ध्नि तया for मूर्ध्न्यांकया
(d)-My. वै for सा
65-(a) My. नासाग्रेऽनामिङ्गुकाङ्गुष्ठौ
-(b) My. ... ... नाभ्यां .... ... ... ।

वर्णषट्कं पञ्चशिखं प्रणवादि सजातिकम् ।
षट्स्वङ्गेषु क्रमान्न्यस्य ज्ञानादिगुणसंयुतम् ॥ ६६ ॥

उपाङ्गषट्कं जठरं पृष्ठबाहूरुजानुषु ।
पदद्वये नमोऽन्तं च विन्यसेत् सचतुर्थकम् ॥ ६७ ॥

सप्तमाष्टमवर्णौ द्वौ विन्यसेत्त्वङ्घ्रिपृष्ठयोः ।
अस्त्रमन्त्रेण दिग्बन्धं कृत्वा पश्चाच्च तर्जनीम् ॥ ६८ ॥

अग्निप्राकारमन्त्रेण त्रिः परिक्रम्य चोर्ध्वगम् ।
जपादीनि च कर्माणि कुर्यादेवमतन्द्रितः ॥ ६९ ॥

**इति पञ्चरात्रे महोपनिषदि विश्वामित्रसंहितायां [अष्टाक्षरमन्त्रोद्धारविधिर्नाम] षष्ठोऽध्यायः ॥**



66-(a) ABKM ° शिरः for °शिखं
(b) KM समात्मिकम् for सजातिकम्
(d) My. ज्ञानदं for ज्ञानादि

67-(d) A चतुरर्थं for सचतुर्थ°

Colophon :- K प्रणवाद्युद्धारः My. अष्टाक्षरमन्त्रोद्धारणं नाम for [अष्टाक्षरमन्त्रोद्धारविधिर्नाम].

# सप्तमोऽध्यायः

विश्वामित्रः—

श्रूयतां द्वादशार्णस्य मन्त्रराजस्य संविधिः ।
यस्य श्रवणमात्रेण मुच्यते सर्वपातकैः ॥ १ ॥

अभ्यर्च्य मातृकाचक्रादुद्धरेद् द्वादशाक्षरम् ।
उद्गीथमुद्धरेत् पूर्वं विघ्नेशं विष्णुपूर्वकम् ॥ २ ॥

मन्दरं चौदनयुतं सुभद्रं चाप्रमेयकम् ।
गदध्वंसं विष्णुशीर्षं वरुणं चादिसंयुतम् ॥ ३ ॥

संप्रसारणसंयुक्तमेकनेत्रमतः परम् ।
आदिदेवयुतं कुम्भमनन्तरमुदीरयेत् ॥ ४ ॥

सश्रीधरं पूर्णचन्द्रमत्रिं माधवसंयुतम् ।
मधुसूदनसंयुक्तं पीयूषात्मानमञ्चितम् ॥ ५ ॥

अप्रमेययुतं शङ्खमुद्धरेन्मुनिसत्तम ।
एवं द्वादशवर्णस्य मन्त्रवर्यस्य सुव्रत ॥ ६ ॥

विष्णुर्दण्डसमायुक्तो बीजमस्य प्रकीर्तितः ।
क्रुद्धोल्काय महोल्काय वीरोल्काय तथैव च ॥ ७ ॥

व्युल्काय च सहस्रादि उल्कायेति च पञ्चमः ।
तेजोल्काय च षष्ठः स्यादग्निजायान्तिमा इमे ॥ ८ ॥

---

2–(a) B. चक्रमु° for चक्रादु°
M मान्त्रिकाचार्यमु° for मातृकाचक्रादु°
–(c) My उद्गीथं पूर्वमादाय
–(d) My मस्तकम् for पूर्वकम्
5–(d) My. °मन्वितम् for °मञ्चितम्
6–(b) My. °मुच्चरेन्मनुसत्तमम् ।
7–(cd) My. om.
8 My. om.

हृदयाद्यङ्गमन्त्राः स्युः षडेते मन्त्रसत्तमाः ।
अथवा द्वादशार्णस्य स्थानेषु द्वादशस्वपि ॥ ९ ॥

इयं क्लृप्तिः परस्यैव वासुदेवस्य कीर्तिता ।
विभवादेः पुनर्बीजं भास्करः स गुणालयः ॥ १० ॥

अर्धचन्द्रसमायुक्तं पुनरङ्गप्रकल्पनम् ।
द्वादशात्मानमुद्धृत्य वरुणेन समन्वितम् ॥ ११ ॥

आदिदेवं पञ्चबिन्दुं हृषीकेशं च गोधनम् ।
अनिरुद्धमनुं चौर्वं षडिमान् दण्डिनः पठेत् ॥ १२ ॥

एते क्रमेण संयोज्या नत्यन्ताश्चाङ्गकल्पने ।
व्यूहादौ विष्णुरस्य स्यात् बीजदण्डेन संयुतम् ॥ १३ ॥

क्रुद्धोल्कादीनि वा बीजं वर्णद्वादशकं तु वा ।
बीजपक्षे द्वादशाङ्गः षडङ्गोऽन्यस्य मन्त्रराट् ॥ १४ ॥

त्रिषु पक्षेषु ब्रह्मर्षिर्वासुदेवः स्वयं स्मृतः ।
छन्दश्च देवीगायत्रं देवतापि स्वयं भवेत् ॥ १५ ॥

सितो वर्णश्च तत्त्वं स्यात् बुद्धिः क्षेत्रं परं वियत् ।
बीजपक्षे द्वादशाङ्गे बीजानि द्वादशच्छविः ॥ १६ ॥

---

9–(ab.) om.
9–(d) My. द्वन्द्वगेष्वपि for द्वादशस्वपि
10–(ab) My अयं तु विष्णु……वासुदेव-कथ्यते ।
–(c) My. °वाद्यैः for °वादेः
–(d) My. गुह्या° for गुणा°
11–(b) M. कल्पने for कल्पनम्
12–(ab) My. हृषीकेशं विष्टरं च गोधनं तदनन्तरम् ।
–(c) My. सर्वान् for चौर्वं
–(d) My. षड्धामानं दण्डि…. ।
16–(c) M °पि for °ङ्गे

प्रणवाद्यं नमोऽन्तं च बीजान्ते नामसंयुतम् ।
न्यस्य पश्चाज्जपेन्मन्त्रं पूर्ववद्ध्यानसंयुतम् ॥ १७ ॥

करयोर्व्यापकं न्यस्य दशस्वङ्गुलिषु क्रमात् ।
विन्यस्य दशवर्णांश्च शिष्टं तं मूर्ध्नि विन्यसेत् ॥ १८ ॥

*देवे*(हे ?)पि पूर्ववत् पञ्च वर्णान् विन्यस्य देशिकः ।
शिरसश्च चतुर्दिक्षु पूर्वादिषु चतुष्टयम् ॥ १९ ॥

विन्यस्य पूर्ववच्छेषं न्यसेद्वर्णत्रयं द्विज ।
पूर्वस्मात्तु विशेषोऽस्य देवः स्फटिकसंनिभः ॥ २० ॥

शेषाहिभोगे विपुले सुखासीनो भवेत् स्वयम् ।
उभाभ्यां पार्श्वसंस्थाभ्यां देवीभ्यां सहितो विभुः ॥ २१ ॥

जपेद् द्वादशलक्षं तु तदर्धं तर्पणं भवेत् ।
तदर्धं च भवेद्धोम एवं सिध्यति मन्त्रराट् ॥ २२ ॥

द्वादशार्णसमो मन्त्रो विद्यते न कदाचन ।
संकर्षणमनुं वक्ष्ये शृणु त्वमवधानतः ॥ २३ ॥

द्वादशार्णात् समुद्धृत्य प्रथमं सप्तवर्णकम् ।
चतुर्थ्यन्तं स्वनामैव पठेद्विन्यस्य वै द्विज ॥ २४ ॥

प्रद्युम्नस्यानिरुद्धस्याप्येवमेव विधिः स्मृतः ।
द्विषट्काक्षरवत् सर्वं ऋष्यादिकमुदीरितम् ॥ २५ ॥

---

19-(b) A वर्गान् for वर्णान्

20-(b) AB द्विजः for द्विज

21-(a) My. विमले for विपुले
  -(c) M पर for पार्श्व

22-(a) M जपे द्वादशलक्षं स्यात्

25-(b) M समाचरेत् for विधिः स्मृतः

अग्निप्राकारमन्त्रस्य विधानं शृणु सर्वतः ।
वेदादीन् (दिं ?) पूर्वमुद्धृत्य वह्निं गोपे(प?)नसंयुतम् ॥ २६ ॥

सार्धचन्द्रं समुद्धृत्य भद्रपाणिं समाधवम् ।
उद्धृत्य द्वादशार्णोऽयमग्निप्राकारसंज्ञितः ॥ २७ ॥

सर्वमन्त्रसमारम्भे कृतोर्ध्वस्तां सतर्जनीम् ।
मूर्ध्नः परिसमुद्धृत्य भ्रामयेत् त्रिः प्रदक्षिणम् ॥ २८ ॥

गायत्र्या विष्णुपूर्वाया वर्णोद्धारक्रमं शृणु ।
उद्गीथं पूर्वमुद्धृत्य मन्त्रस्याष्टाक्षरस्य तु ॥ २९ ॥

*आद्यः*(द्यात् ?) परे पञ्चवर्णास्ततः कुम्भं सविष्णुकम्(?) ।
वैराजं मन्दरयुतं साप्रमेयमुदीरयेत् ॥ ३० ॥

संप्रसारणसंयुक्तं दीप्तिमन्तं समुद्धरेत् ।
द्वादशाक्षरमन्त्रस्य पञ्च वर्णानुदाहरेत् ॥ ३१ ॥

धीमहीति पदं चोक्त्वा विजयं विष्णुसंयुतम् ।
भद्रपाणियुतं पश्चाद् वीरसेनयुतं पठेत् ॥ ३२ ॥

कलशं बन्धुसहितं शान्तं सुमुखसंयुतम् ।
सश्रीधरं सर्गयुतं पठित्वा तदनन्तरम् ॥ ३३ ॥

पवित्रमग्निविष्णुभ्यामुद्धृत्य प्रेतनायकम् ।
वासुदेवसमाक्रान्तमत्रिं प्रथमसंयुतम् ॥ ३४ ॥

चतुर्गतिं*साति(दि ?)देश*(व ?)मुक्त्वा वैराजमुद्धरेत् ।
केवलं (लो ?) विष्णुगायत्रीमनुरेवं समुद्धृतः ॥ ३५ ॥

---

26–(d) BMy. अग्निं गोपन° for वह्निं गोपे(प?)न°
30–(a) M आद्याः पदे for आद्यः परे
–(cd) My उदीरयेत्ततः.........मुदीरयेत् ॥
31–(ab) ABM समाप्तं दीप्तिमन्त्रान्तमुद्धृत्य तदनन्तरम् ।
33–(c) ABM साश्वि for सर्गं

ऋषिर्ब्रह्मास्य गायत्रं छन्दो विष्णुश्च देवता ।
क्रुद्धोल्कादीनि चास्य स्युः षडङ्गानि महामते ॥ ३६ ॥

शिरोललाटनयनद्वयश्रवणयुग्मके ।
मुखे कण्ठे च हृदये बाहुमूलयुगेऽपि च ॥ ३७ ॥

कूर्परद्वितये चैव मणिबन्धयुतेऽपि च ।
करयोरुदरे गुह्ये चोरुजङ्घापदद्वये ॥ ३८ ॥

विन्यसेत् क्रमशो वर्णान् वर्णवर्णानतः शृणु ।
हेमाभरक्तधूमाभसितासितसुपाटलाः ॥ ३९ ॥

श्वेतपीतारुणश्यामसितरक्तनिभाः क्रमात् ।
स्फटिकस्वर्णदुर्वर्णशशिरश्मिसमं ततः ॥ ४० ॥

पद्मकिञ्जल्कसंकाशं विद्रुमस्वर्णवर्णकम् ।
नक्षत्राभं तथा रक्तं तारावर्णं तथारुणम् ॥ ४१ ॥

रविबिम्बाभमित्येते वर्णाः प्रोक्ता महामते ।
देवः पूर्वोक्तवद् ध्येयो विशेषो गरुडस्थितः ॥ ४२ ॥

इत्थं ध्यात्वा जपेत् प्रातः मध्याह्ने स्फटिकप्रियम् (प्रभम् ?) ।
सायं च प्रातरेवं तु नवाम्बुदनिभं स्मरेत् ॥ ४३ ॥

चतुर्विंशतिलक्षं स्यात् जपस्तर्पणहोमयोः ।
प्रमाणमध्यर्धमिति प्रोक्ता मन्त्रेश्वरा इमे ॥ ४४ ॥

*चत्वारः साधके* (चतुर्षु साधिते ?) ष्वेषु साक्षाद्विष्णुर्भवेत् स्वयम् ।
श्रीकराष्टाक्षरमनोरुद्धारं कथयाम्यहम् ॥ ४५ ॥

ॐ तत्तरे श्रीधरं पूर्वं मायाबीजद्वयं भवेत् ।
उग्रात्मा कौस्तुभयुतो विष्णुशीर्षस्ततो भवेत् ॥ ४६ ॥

---

42 (b) My मनोः for महा°

पाशाङ्कुशधरां सौम्यविग्रहां गीतयेन्मनुम् ।
जपेद् द्वादशसाहस्रं व्रतस्थः संयतेन्द्रियः ॥ ५७ ॥

लक्ष्मीनारायणमनुं वक्ष्यामि शृणु सुव्रत ।
उच्यते *द्विषड्वर्ण*(डर्ण)स्य प्रथमं *सर्व*(स ?) वर्णकम् ॥ ५८ ॥

उद्धृत्य मूर्तिनामानि चतुर्थ्यन्तानि योजयेत् ।
बीजान्याद्याक्षराण्येवं तारबिन्दुयुतानि च ॥ ५९ ॥

*अन्येषां द्वादशार्णां तु (?) पूर्वं चत्वार ईरिताः* ।
*व्यूहाख्यायितरेषां (?) तु अष्टानां शृणु सुव्रत* ॥ ६० ॥

नारसिंहोऽधोक्षजश्च अच्युतः पुरुषोत्तमः ।
*जनार्दनोपेन्द्रहरिः*(?) कृष्णश्चाष्टौ प्रकीर्तिताः ॥ ६१ ॥

एतेऽष्टौ - - (?) वर्णानां प्रागुक्ता ये च पूर्ववत् ।
चतुर्थ्यन्त*स्वनाम्ने*(म्नै ?)व पश्चाद्बीजेन पूर्ववत् ॥ ६२ ॥

अङ्गानि च यथापूर्वं छन्दो गायत्रमुच्यते ।
ऋष्यादि पूर्ववत् सर्वं पुनश्चर्या च पूर्ववत् ॥ ६३ ॥

मत्स्यादिदशमूर्तीनां उक्त्वादौ वर्णसप्तकम् ।
उक्त्वा च मूर्तिनामानि रूपायेत्यन्तिमे पदे ॥ ६४ ॥

बीजमाद्यर्ण एव स्यात् सामान्येन सबिन्दुकः ॥

**इति पञ्चरात्रे महोपनिषदि विश्वामित्रसंहितायां**
**[द्वादशाक्षरादिमन्त्रोद्धारविधिर्नाम] सप्तमोऽध्यायः ॥**

---

**Colophon :—ABM Om,**
**V—6**

श्रीकरेति त्रयो वर्णाः पठितस्य ततोऽप्यनु ।
उच्चरेद्‌युगं पश्चादष्टार्णोऽयं मनूत्तमः ॥ ४७ ॥

सानलं द्वादशात्मानं महामायासमन्वितम् ।
आद्येन संयुतं बीजं मन्त्रस्यास्य प्रचक्षते ॥ ४८ ॥

क्रुद्धादीनि षडङ्गानि प्रजापतिमृषिं द्विज ।
अवेहि देवीगायत्रं छन्दो देवः श्रियः पतिः ॥ ४९ ॥

पूर्वाष्टाक्षरवत् सर्वं प्रत्यर्णं मुनिपूर्वकम् ।
छायायां कल्पवृक्षस्य सर्वभूषणधारिणम् ॥ ५० ॥

गरुडस्य चतुर्बाहोः स्कन्धस्योपरि संस्थितम् ।
अष्टबाहुं किरीटादिसर्वाभरणभूषितम् ॥ ५१ ॥

सततं दिव्यगन्धादिविलेपनविभूषितम् ।
दक्षिणे चक्रमुसले बाणाङ्कुशधरं भुजे ॥ ५२ ॥

वामे च शङ्खं सगदं धनुःपाशौ च बिभ्रतम् ।
पीताम्बरधरं पूर्णचन्द्रवत् प्रियदर्शनम् ॥ ५३ ॥

*गरुत्मन्तोपरि संस्थाप्य भुजाभ्यां पादपङ्कजे* (?) ।
*बिभ्राणं देवदेवस्य शेषपाणियुगेन च* ॥ ५४ ॥

पीयूषकुम्भं स - - (?) निक्षिप्तं दधतं स्मरेत् ।
देवीं लक्ष्मीं च देवस्य वामपादोरुसंभृताम् ॥ ५५ ॥

हेमवर्णां शुभां क्षौमवासिनीं दिव्यभूषणाम् ।
*स्थितिचञ्चद्दिव्यपुष्प*(सततं दिव्यगन्धादि ?)विलेपनविभूषिताम्॥५६॥

---

47–(b) My. पठितः स्यात्ततोऽप्यनुः ।
–(c) My. ह्रीत्यन्तं चोद्धरेत् पश्चात्

53–(cd) My. पीताम्बरं पूर्णचन्द्रसुप्रसन्नमुखं विभुम् ।

**54–65 ABM. Om.**

पाशाङ्कुशधरां सौम्यविग्रहां गीतयेन्मनुम् ।
जपेद् द्वादशसाहस्रं व्रतस्थः संयतेन्द्रियः ॥ ५७ ॥

लक्ष्मीनारायणमनुं वक्ष्यामि श्रृणु सुव्रत ।
उच्यते *द्विषड्वर्ण*(डर्ण)स्य प्रथमं *सर्व*(स ?) वर्णकम् ॥ ५८ ॥

उद्धृत्य मूर्तिनामानि चतुर्थ्यन्तानि योजयेत् ।
बीजान्याद्याक्षराण्येवं तारबिन्दुयुतानि च ॥ ५९ ॥

*अन्येषां द्वादशार्णा तु (?) पूर्वं चत्वार ईरिताः* ।
*व्यूहाख्यायितरेषां (?) तु अष्टानां श्रृणु सुव्रत* ॥ ६० ॥

नारसिंहोऽधोक्षजश्च अच्युतः पुरुषोत्तमः ।
*जनार्दनोपेन्द्रहरिः*(?) कृष्णश्चाष्टौ प्रकीर्तिताः ॥ ६१ ॥

एतेऽष्टौ - - (?) वर्णानां प्रागुक्ता ये च पूर्ववत् ।
चतुर्थ्यन्त*स्वनाम्ने*(म्ने ?)व पश्चाद्बीजेन पूर्ववत् ॥ ६२ ॥

अङ्गानि च यथापूर्वं छन्दो गायत्रमुच्यते ।
ऋष्यादि पूर्ववत् सर्वं पुनश्चर्या च पूर्ववत् ॥ ६३ ॥

मत्स्यादिदशमूर्तीनां उक्त्वादौ वर्णसप्तकम् ।
उक्त्वा च मूर्तिनामानि रूपायेत्यन्तिमे पदे ॥ ६४ ॥

बीजमाद्यर्ण एव स्यात् सामान्येन सबिन्दुकः ॥

इति पञ्चरात्रे महोपनिषदि विश्वामित्रसंहितायां
[द्वादशाक्षरादिमन्त्रोद्धारविधिर्नाम] सप्तमोऽध्यायः ॥

---

Colophon :—ABM Om.
V—6

# अष्टमोऽध्यायः

**काश्यपः—**

भगवन् सर्वमन्त्राणामुद्धारस्तु त्वयेरितः ।
वर्णानां नामभेदा ये त्वयोक्ता मुनिपुंगव ॥ १ ॥

न वेद्मि तानहं सर्वानुपदेष्टुं त्वमर्हसि ।
मयि प्रसादप्रवणं मानसं विदधासि चेत् ॥ २ ॥

**विश्वामित्रः—**

वक्ष्यामि वर्णनामानि क्रमशो मुनिसत्तम ।
येषु ज्ञातेषु मन्त्राणामुद्धारः सुकरो भवेत् ॥ ३ ॥

सुसमे भूमिभागे तु शुद्धे विरहिते जनैः ।
प्रशस्ते वातरहिते प्रोक्षिते पञ्चगव्यकैः ॥ ४ ॥

दर्पणोदरसंकाशं चतुरङ्गुलमुच्छ्रितम् ।
हस्तद्वयप्रमाणं च चतुरश्रं विधाय च ॥ ५ ॥

स्थण्डिलं शुद्धदेशोत्थमृद्भिर्गोमयवारिणा ।
उपलिप्य च संप्रोक्ष्य प्रणवेन विलिप्य च ॥ ६ ॥

द्वादशाक्षरमन्त्रेण दशकृत्वोऽभिजप्य च ।
तन्मध्ये मातृकाचक्रमरैः षोडशभिर्युतम् ॥ ७ ॥

संयुक्तं नाभिनेमिभ्यां कृत्वा चन्दनवारिणा ।
शुभनक्षत्रयोगे तु सुमुहूर्ते द्विजोत्तम ॥ ८ ॥

---

1–(b) ABM °योदितः for °येरितः
–(d) B सत्तम for पुंगव
2–(ab) My Om.
–(c) BM प्रणय for प्रवणम्
6–(d) My सधूप्य for विलिप्य
7–(b) B My. विजप्य for ऽभिजप्य
8–(d) My °त्तमः for °त्तम

स्नातः शुक्लाम्बरयुगं परिधाय सुभूषितः ।
शुभचन्दनलिप्ताङ्गः शुक्लमाल्यविभूषितः ॥ ९ ॥

स्वदेहे मातृकां देवीं विन्यस्य गुरुचोदितः ।
बहवो मणयः सूत्रे यथा स्युर्द्विजसत्तम ॥ १० ॥

तथैव तस्मिन्नाकारे वर्तते वर्णमालिका ।
सूतेति(?) कृत्वा मनसि वर्णचक्रं समालिखेत् ॥ ११ ॥

मध्ये प्रणवमालिख्य स्वरानप्यरभूमिषु ।
नाभिमध्ये तथा स्पर्शानादिनेमौ समालिखेत् ॥ १२ ॥

आदिवर्णप्रक्लृप्ताङ्गां वर्णाभरणभूषिताम् ।
स्वरक्लृप्तमुखाम्भोजां कवर्गककरद्वयाम् ॥ १३ ॥

टवर्गपादयुगलां पवर्गविहितोदराम् ।
यादिवर्णमयीं(?) देवीं वलक्षहृदयप्रभाम् ॥ १४ ॥

पाशाङ्कुशधरां देवीं शुक्लवर्णविभूषिताम् ।
ध्यात्वैवं मातृकां देवीमर्चयेदर्घ्यपूर्वकैः ॥ १५ ॥

उपचारैः षोडशभिस्तथा वै मूलविद्यया ।
वर्णात्मानं च पुरुषं पूजयेच्चक्रमध्यमे ॥ १६ ॥

मन्त्रान् समुद्धरेत् पश्चाद् यथेष्टं भक्तिपूर्वकम् ।
वर्णानां नामधेयानि शृणुष्वावहितो द्विज ॥ १७ ॥

प्रणवो ब्रह्मकोशश्च ब्रह्म चोद्गीथ इत्यपि ।
तारकश्छन्दसामादिरोंकारस्याभिधा इमाः ॥ १८ ॥

---

10–(d) My सूता द्विजोत्तम for स्युर्द्विजसत्तम

12–(d) A °यादीन् प्रतिगणे न्यसेत् ॥
B °न्यादीन् प्रथिगणे न्यसेत् ॥
M नादीन् पथगणे न्यसेत् ॥

14–(c) ABM यातुधातुमयीं for यादिवर्णमयीं

अकारश्चाप्रमेयश्च प्रथमो विष्णुरुच्यते ।
आकारश्चादिदेवश्च गोपनो मधुसूदनः ॥ १९ ॥

इकार इष्ट *इन्ध*(द्ध ? )श्च रामो *बन्ध*(न्धु ? )श्च कल्प्यते ।
ईकारः पञ्चबिन्दुश्च महामाया च वामनः ॥ २० ॥

*उकारादय - - व* (उकार उदयोद्दामौ ? ) श्रीधरो भुवनाह्वयः ।
ऊकारश्चोर्ध्वलोकेशो हृषीकेशो गुहालयः ॥ २१ ॥

ऋकार ऋत*या माया* (धामा च ? ) सत्यश्चैव तथाङ्कुशः ।
ॠकारो विष्टरो ज्वाला यो - (गी ?) दामोदरोऽपि च ॥ २२ ॥

ऌकारो गोप्तृनामा स्यात् केशवश्च महेश्वरः ।
ॡकारो दीर्घघोणस्तु नारायणसमाह्वयः ॥ २३ ॥

एकारो माधव*स्त्री*—(स्त्र्यश्चः ?) संप्रसारणनामकः ।
ऐकारो गोधनो वीरसेनो गोविन्द - - -(संज्ञकः ?) ॥ २४ ॥

ओकार ओतदेहश्च वासुदेवस्तथौदनः ।
औकार औषधश्चौर्वः संकर्षणसमाह्वयः ॥ २५ ॥

अंकारोऽनु-(स्व ?)रश्चैव प्रद्युम्नः कपिलाक्षकः ।
अःकारश्च कलान्तोपसर्गश्चैवानिरुद्धकः ॥ २६ ॥

ककारश्च करालश्च कमलो ब्रह्मसंज्ञकः ।
खकारश्चक्रिनामा च खर्वो गरुडवाहनः ॥ २७ ॥

गकारश्च गदध्वंसी गदी पञ्चान्तकः स्मृतः ।
घकारो गजवाहश्च पञ्चात्मा पञ्च-(पञ्चपा ?)णिकः ॥ २८ ॥

ङकार एकदंष्ट्रश्च शार्ङ्गपाणिः कपिध्वजः ।
चकारो वक्रतुण्डश्च खड्गधृक् प्रेतनायकः ॥ २९ ॥

---

19–(b) My प्रथमाक्षरमु° for प्रथमो विष्णुरु°
 –(c) A °श्चाति for °श्चादि
20-37 ABM, Om.

छकारश्छलविध्वंसी स्वच्छन्दः कुण्डली तथा ।
जकारो जन्महन्ता च मुस*ली - - - षि*(ककुभोऽपि ?) च ॥ ३० ॥

झकारश्च झषाशी च सामवेदः सुवर्णकः ।
ञकारः पाशपाणिश्च भृगुश्चन्द्रसितः स्मृतः ॥ ३१ ॥

टकारो हृदयाह्लादी पर्वतः खेटकी तथा ।
ठकारस्तोमरो मेघी कौस्तुभो दुष्प्रभः स्मृतः ॥ ३२ ॥

डकारः पुण्डरीकाक्षः भूमिर्वह्नि(न ?) निकेतनः ।
ढकारो दृढकर्मा च पुष्पभद्रः प्रतर्दनः ॥ ३३ ॥

णकारः सुमुखश्चैव वनमाली प्रचण्डकः ।
तकार एकनेत्रश्च वैराजो विजयस्तथा ॥ ३४ ॥

थकारः सुप्रतिष्ठश्च रसात्मा सर्वरोधकः ।
दकारो वैधरो दृष्टिरत्रिः सर्वपुरान्तकः ॥ ३५ ॥

धकारः सुभगः पुण्यो धनदो मोहन - - (नाशनः ?) ।
नकारो मा - - श(नुषेश ? )श्च विघ्नेशो भद्रपाणिकः ॥ ३६ ॥

पकारः पापहननः पवित्रः पश्चिमाननः ।
फकारः फल्गु (फुल्ल ?) नयनः शिखण्डी च विकर्मणः(कः ?) ॥ ३७ ॥

बकारो मतिमान् ह्रस्वो* - - - वनेमि - - * (जृम्भलः कालनेमिजित् ?)।
भ - - - (ह्लातको ? ) भकारश्च सुभद्रः सूक्ष्मलोचनः ॥ ३८ ॥

मकारो माधवी दक्षो मन्दरः पाटलप्रियः ।
यकारः पुरुषात्मा च शङ्खो वायुश्चतुर्गतिः ॥ ३९ ॥

रेफोऽनलो महाज्वालो विश्वात्मा सर्वदाहकः ।
लकारः पुलहश्चैव माहेन्द्रः पीतवर्णकः ॥ ४० ॥

---

38-(abc) ABM. Om.

वकारो वरुणः कुम्भः पीयूषात्मा सुधारसः ।
शकारः शुभदो लक्ष्मीः श्रीवत्सो वित्तवर्धनः ॥ ४१ ॥

षकारः क्रोधरूपी स्यादुग्रात्मा शत्रुदाहकः ।
सकारः पूर्णचन्द्रश्च कालात्मा शुक्लनामकः ॥ ४२ ॥

हकारो द्वादशात्मा स्याद् भास्करो दीप्तिसंस्कृतः ।
ळकारो डुण्डुभो गर्भो विष्कम्भो विषसंज्ञकः ॥ ४३ ॥

क्षकारो नृहरिः कूट अनन्तो गरुडात्मवान् ।
अनुस्वारो ध्रुवो बिन्दुश्चन्द्रार्धो यष्टिसंज्ञकः ॥ ४४ ॥

स्वाहाकारो हुतान्तश्च ठठेति परिकीर्तितः ।
नमस्कारो नतिः प्रोक्तो वर्णसंज्ञा इति स्मृताः ॥ ४५ ॥

चक्रमध्यस्थवर्णानां देवताः क्रमशः शृणु ।
प्रणवस्य परब्रह्म देवतेति निरूपितः ॥ ४६ ॥

सर्वकारणरूपत्वात् विष्णुस्तस्याधिदैवतम् ।
*द्व्यर्णाद्या मधुद्वेष्या* देवताः परिकीर्तिताः ॥ ४७ ॥

*नवर्णाद्याः केशवाद्याः चत्वारो देवताः स्मृताः* ।
*त्रयोदशान्ता वर्णाद्या देवताः प्रवदामि ते* ॥ ४८ ॥

*चत्वारो वासुदेवाद्याः षोडशैते प्रकीर्तिताः* ।
स्पर्शानां शृणु देवाः स्युः क्रमेण मुनिपुंगव ॥ ४९ ॥

विधिः सुदर्शनो वाणी शार्ङ्गो नन्दक इष्यते ।
गदायमौ च मुसली तथा चैवाङ्कुशो भृगुः ॥ ५० ॥

---

42-(d) A शुक्र for शुक्ल

44-(c) ABM अनुस्वारश्च बिन्दुश्च
-(d) My. चन्द्रोऽर्धो for चन्द्रार्धो

47-(c) My. अरुद्या मधुद्वेष्याद्या

49-(b) B °शैशा for °शैते

50-(c) ABM गदयामौ for गदायमौ

सुमेरुः कौस्तुभो भूमिर्वामनो वनमालिका ।
दंष्ट्री रसोऽत्रिर्धनदो विघ्नराजः पवित्रकः ॥ ५१ ॥

शिखण्डवान् जृम्भलश्च सुभद्रो दक्षदेवताः ।
यकारान्तस्थवाय्वग्निदेवेन्द्रवरुणाः स्मृताः ॥ ५२ ॥

ऊष्मणां श्रीः क्रोधरूपश्चन्द्रः सूर्यश्च देवताः ।
भद्रो नृसिंह इत्येते कथिता देवताः क्रमात् ॥ ५३ ॥

**इति पञ्चरात्रे महोपनिषदि विश्वामित्र—**
**संहितायां [वर्णसंज्ञाविधिर्नाम]अष्टमोऽध्यायः ॥**

---

## नवमोऽध्यायः

**काश्यपः—**

दीक्षाया लक्षणं ब्रूहि भगवन् मदनुग्रहात् (?) ।
तत्सर्वं विस्तरेणैव ब्रूहि मे भक्तवत्सल ॥ १ ॥

**विश्वामित्रः—**

दीक्षां वक्ष्ये तु संक्षेपात् तच्छृणु द्विजपुंगव ।
आदित्ये मीनमेषेषुवृषनक्रेषुसंस्थिते ॥ २ ॥

पूर्वपक्षे शुभे ऋक्षे एकादश्यां तथा निशि ।
शुचौ देशे मनोज्ञे च कारयित्वा तु मण्डपम् ॥ ३ ॥

---

51–(c) My. दृष्टि for दंष्ट्री

52–(a) A श्वभ्रलो B जुभूलो M श्वभृलो for जृम्भलः
–(c) BM यकारस्थत्व for यकारन्तस्थ
My. वायुश्चैव तथा चाग्निः
–(d) My. देवेन्द्रो वरुणः स्मृतः ॥

53–(c) ABM लक्षयेन्नृहरीत्येते

Colophon : My वर्णसंज्ञा नाम for [वर्णसंज्ञाविधिर्नाम].

3–(a) My °ऽनुकूलर्क्षे for शुभे ऋक्षे

गोमयेन समालिप्य वेष्टयेद्दर्भमालया ।
वेदीं कुर्याच्च तन्मध्ये चतुर्हस्तप्रमाणतः ॥ ४ ॥

तालोत्से*धापरा चान्ये विस्तारायामतत्समा*: (?) ।
वेद्याः पश्चिमदिग्भागे कुण्डं कुर्याद्विधानतः ॥ ५ ॥

क्रमेण ब्राह्मणादीनामेवंलक्षणकं मुने ।
चतुष्कोणं तालयुग्ममनुकूलं द्विजस्य तु ॥ ६ ॥

वृत्तं कुर्यात् क्षत्रियस्य गोकर्णयुतसंयुतम् ।
चापाकारं च वैश्यस्य वितस्तिद्वयसंमितम् ॥ ७ ॥

त्रिकोणं शूद्रयोनेः स्यात् प्रादेशद्वयसंमितम् ।
विस्तारायामसदृशं तत्प्रमाणमितां तथा ॥ ८ ॥

त्रिमेखलां च कुर्वीत पश्चिमे योनिभूषिताम् ।
दशम्यां संभरेत् सर्वान् समिदादीन् समाहितः ॥ ९ ॥

मध्यंदिने शुचिः स्नात एकभुक्तेन वर्तयेत् ।
एकादश्यां तिथौ स्नातः शुद्धवासोयुगं दधत् ॥ १० ॥

श्वेतगन्धानुलिप्ताङ्गः श्वेतमाल्यविभूषितः ।
भूषितश्च यथालब्धैर्भूषणैः समलंकृतः ॥ ११ ॥

सायंकाले तु संप्राप्ते कुर्याच्चैवाधिवासनम् ।
चतुर्षु द्वारदेशेषु पार्श्वयोः कलशद्वयम् ॥ १२ ॥

निधाय वेदिकामध्ये कुर्याच्चक्राब्जमण्डलम् ।
हेमादिनिर्मितं कुम्भं गालितोदकपूरितम् ॥ १३ ॥

---

5-(b) My °यामतः समाः for °यामतत्समाः

8-(d) ABM °णावटं for °णमिताम्

9-(a) ABM मेखलं for मेखलाम्

-(b) ABM भूषितम् for भूषिताम्

10-(c) My प्रातः for स्नातः

11-(d) My डम्भवर्जितः for समलंकृतः

विन्यस्तरत्नकनकं सकूर्चं सूत्रवेष्टितम् ।
वासोयुगलसंवीतं चन्दनस्रगलंकृतम् ॥ १४ ॥

अक्षतैः सुमनोभिश्च विकीर्णं च समन्ततः ।
यद्द्रव्यनिर्मितः कुम्भस्तद्द्रव्यात् कर्करी भवेत् ॥ १५ ॥

शतकृत्वोऽस्त्रमन्त्रेण कर्करीं चाभिमन्त्रयेत् ।
वेदिकां परितः सिञ्चेत् धारयाच्छिन्नया गुरुः ॥ १६ ॥

चक्राब्जस्येशदिग्भागे कुम्भस्थापनमाचरेत् ।
व्रीहीन् निधाय सुशुभान् कुम्भं तस्योपरि न्यसेत् ॥ १७ ॥

कुम्भस्यान्तः फलं तस्य फलानि परितो न्यसेत् ।
कलशं दक्षिणे पार्श्वे वामे च करकं न्यसेत् ॥ १८ ॥

कुम्भे च हरिमावाह्य पूजयेन्मूलविद्यया ।
मण्डले च यजेद् देवमुपचारैश्च षोडशैः ॥ १९ ॥

सह सर्वैः परीवारैः शास्त्रचोदितवर्त्मना ।
पश्चिमे च हरिं देवं मण्डलादुक्तवर्त्मना ॥ २० ॥

हरिं च लक्ष्मीभूमिभ्यां शयानं परिकल्प्य च ।
भोगैरर्घ्यादिभिः सर्वैर्नैवेद्यान्तैः समर्चयेत् ॥ २१ ॥

मथित्वाग्निं च मूलेन कुण्डे तं विन्यसेद्गुरुः ।
तत्र सिद्धं चरुं कृत्वा तण्डुलैः सुसितैः शुभैः ॥ २२ ॥

चतुर्भागैकभागं तु मण्डलस्थाय विष्णवे ।
निवेद्य चैकं भागं तु कुम्भस्थाय निवेदयेत् ॥ २३ ॥

---

14–(d) ABM चन्दनैः समलंकृतम् ॥

19–(b) A पूरये° for पूजये°
M करके पूरयेन्मृदा ।

20–(a) ABM ससर्वैः परिवारैश्च

21–(b) AB My शयनं for शयानम्

22–(d) AM सुशितैः शितैः for सुसितैः शुभैः

जुहुयादग्नये भागं भागं भुञ्जीत तत्स्वयम् ।
समिधोऽष्टोत्तरशतं जुहुयान्मूलविद्यया ॥ २४ ॥

चरुं पुरुषसूक्तेन तावत्संख्यं हुनेद्बुधः ।
पूर्णाहुतिं विधायान्ते स्नातं शिष्यं जितेन्द्रियम् ॥ २५ ॥

वसानं चाहते शुभ्रे वाससी भूषणोत्तमैः ।
भूषितं चानुलिप्ताङ्गं शुद्धमाल्यविभूषितम् ॥ २६ ॥

आहूय नववस्त्रेण नेत्रे बध्नीत वाग्यतः ।
गुरुः स्वदक्षिणे भागे प्राङ्मुखं चोपवेश्य तम् ॥ २७ ॥

अन्वारब्धस्तेन चैव घृतेन चरुणापि च ।
आहुतीर्द्वादश हुनेत् पृथक् पृथगनुक्रमात् ॥ २८ ॥

हुत्वा तिलैः सकुसुमैस्त्रिधा मूर्ध्न्यस्य चालभेत् ।
हुतभस्म समादाय सितमष्टाक्षरेण तु ॥ २९ ॥

ऊर्ध्वपुण्ड्रं च विन्यस्य बध्वा प्रतिसरं करे ।
दक्षिणे चास्त्रमन्त्रेण प्राशयेत् पञ्चगव्यकम् ॥ ३० ॥

प्रणवेन चरुं पश्चाद् भोजयेदात्मशुद्धये ।
दन्तकाष्ठेन दन्तांश्च शोधयित्वा क्षिपेच्च तत् ॥ ३१ ॥

तदग्रपतनस्थानं सम्यगालोकयेद्गुरुः ।
याम्यनैर्ऋत*वायव्यं*(व्ये?) यदग्रमशुभं हि तत् ॥ ३२ ॥

अन्यदिक्षु शुभं ब्रूयात् शान्तिहोमेन चाशुभम् ।
शमयेन्नारसिंहेन मनुनाष्टशताहुतीः ॥ ३३ ॥

---

25–(d) M नित्यं for शिष्यम्
27–(b) ABM नेत्रं for नेत्रे
29–(b) B त्रियं मूर्ध्नि चालभेत् ।
M सत्रयं मूर्ध्नि चालपेत् ।
31–(c) ABM दन्तकाष्ठे चन्दनेन
33–(c) M शामये° for शमये°
A नर° for नार°
–(d) My शतं for शता°

तिलानाचमयेच्छिष्यं देवस्यालोक्य पादयोः ।
गुरुश्च प्रणतो मूर्ध्ना देवं विज्ञापयेत् ततः ॥ ३४ ॥

संसारपाशबद्धानां पशूनां पाश*मोक्षणे*(चने?) ।
त्वमेव शरणं देव गतिरन्या न विद्यते ॥ ३५ ॥

पाश*मोक्षण*(चन?)हेतुर्यस्त्वत्समाराधनात्मकः ।
तेनेमान् जन्मपाशेन पाशितान् पशुजन्मनः ॥ ३६ ॥

विपाशयामि देवेश तदनुज्ञातुमर्हसि ।
इति विज्ञाप्य देवेशं शिष्यं सूत्रेण वेष्टयेत् ॥ ३७ ॥

कृत्वा दृढं कृष्णवर्णैस्त्रिसूत्रैस्त्रिगुणीकृतम् ।
पुनस्तत् त्रिगुणीकृत्य तं पादादि शिरोऽवधि ॥ ३८ ॥

पञ्चविंशतिवारांस्तु वेष्टयेच्छिष्यदेहके ।
तत्संस्पृष्टोऽथ जुहुयात् सर्पिषाष्टोत्तरं शतम् ॥ ३९ ॥

पूर्णाहुतिं विधायाथ स्वप्नदर्शनसिद्धये ।
स्वप्नाधिपतिमन्त्रेण तावत्संख्यं हुनेद्गुरुः ॥ ४० ॥

माषौदनबलिं दद्याद्भूतेभ्यश्च समाहितः ।
शिष्यस्य नेत्रबन्धं च विस्रस्य च शरीरगम् ॥ ४१ ॥

आदाय मायासूत्रं तच्छरावे निक्षिपेदथ ।
पिधाय तत्कुम्भपार्श्वे स्थापयित्वा द्विजोत्तम ॥ ४२ ॥

दर्भान् संस्तीर्य तेष्वेनं स्थापयेत् प्राक्छिरो यथा ।
कुम्भमण्डलगं देवं तदा नोद्वासयेद्गुरुः ॥ ४३ ॥

प्रातः पृच्छेच्च शिष्यं तं स्वप्नस्य च शुभाशुभम् ।
शुभं चेद्दीक्षयेदेनमशुभं चेन्न दीक्षयेत् ॥ ४४ ॥

---

38–(a) My त्रिवर्णैश्च for कृष्णवर्णैः
–(b) A °द्विगुणी° for °त्रिगुणी°
40–(c) My स्वप्नरूपेति for स्वप्नाधिपति
41–(a) ABM °दनैर्बलिं for °दनबलिम्
42–(c) BMy पिधाय दर्भैः ? पार्श्वे

शान्तिहोमेन तच्छान्तिं कृत्वा स्नात्वा शुचिस्ततः ।
सशिष्यः प्रविशेत्तत्र मण्डपे यागसंभृते ॥ ४५ ॥

ध्वजं च तोरणं चैव पूजयित्वा विधानतः ।
कुम्भमण्डलसंस्थं तं देवमभ्यर्च्य भक्तितः ॥ ४६ ॥

पायसादि निवेद्यान्नं प्रणम्यैव प्रदक्षिणम् ।
नेत्रबन्धं च शिष्यस्य कृत्वा पार्श्वे निवेश्य च ॥ ४७ ॥

देशिको मूलमन्त्रेण समिदाज्यतिलान् पृथक् ।
अष्टोत्तरशतं हुत्वा पूर्णान्तमवधानतः ॥ ४८ ॥

आदाय मायासूत्रं तत् छित्वा वै तत्त्वसंख्यया ।
संहारक्रमयोगेन *सामेषः(?)*पञ्चविंशतिः ॥ ४९ ॥

प्रकृत्यादीनि संस्मृत्य तत्त्वानि जुहुयाद्गुरुः ।
पृथगष्टशतं वारानष्टकृत्वोऽथवा हुनेत् ॥ ५० ॥

गुरुः स्वहृदयाम्भोजकर्णिकायां सुसंस्थितम् ।
ध्यात्वा नारायणं देवं परमात्मानमच्युतम् ॥ ५१ ॥

शिष्यस्य जीवं संस्मृत्य तस्मिन्नेव प्रवेशयेत् ।
शोषणादि विधायाथ शिष्यदेहस्य देशिकः ॥ ५२ ॥

पुनः स्वहृदयाब्जं च सजीवं संक्रमय्य च ।
सृष्टिक्रमेण तत्त्वानि प्रकृत्या विनियोजयेत् ॥ ५३ ॥

सृष्टिकाले च तत्त्वानां जुहुयाच्च यथाक्रमम् ।
स्पृष्ट्वा शिष्यशरीरं तु तन्मध्ये शिष्यसंयुतम् ॥ ५४ ॥

---

45–(a) My शान्ति तु for तच्छान्तिम्
–(d) M मण्डले for मण्डपे

52–(a) M संस्कृत्य for संस्मृत्य

53–(a) My पुनश्च for पुनः स्व ; °ब्जस्थं for °ब्जं च

54–(a) My चतुर्वरान् for च तत्त्वानां

ध्यात्वा तत्र स्थितं देवं वस्त्रेणामूलविद्यया ।
नेत्रबन्धं च *विन्य*(स्त?)स्य परिधायाम्बरान्तरम् ॥ ५५ ॥

पादौ प्रक्षालयित्वा तमाचमय्याथ चक्षुषी ।
वासोऽन्तरेण बध्वाथ स्वपार्श्वे संनिवेश्य च ॥ ५६ ॥

आसीनस्य प्राङ्मुखस्य शोधयेदध्वपद्धतिम् ।
कालाध्वानं पदाध्वानं भुवनाध्वानमन्वतः ॥ ५७ ॥

तत्त्वाध्वानं च तदनु मन्त्राध्वानमनन्तरम् ।
वर्णाध्वानं च मतिमान् शोधयित्वा स्वविद्यया ॥ ५८ ॥

महाव्याहृतिभिः पूर्वमाज्यहोमं विधाय तु ।
हुत्वावशिष्टेनाज्येन शिष्यपादौ स्पृशेद्गुरुः ॥ ५९ ॥

हुत्वा ततस्तिलैर्नाभिं स्पृशेत्तदविशेषतः ।
पद्महोमं विधायास्य हृदयं च समालभेत् ॥ ६० ॥

तत्र हुत्वा च चरुणा संस्पृशेदस्य मस्तकम् ।
पृथगष्टशतं होमो महाव्याहृतिभिर्भवेत् ॥ ६१ ॥

ततो गृहीत्वा शिष्यस्य करं दक्षिणमात्मनः ।
दक्षिणेन करेणैव कृत्वा चैव प्रदक्षिणम् ॥ ६२ ॥

कुम्भमण्डलगं देवं नारायणमनन्यधीः ।
स्थित्वैव तस्मिन् द्वार्भागे हेमरत्नादिकैस्ततः ॥ ६३ ॥

कुसुमैः केवलैर्वास्य पूरयेदञ्जलिं बुधः ।
प्रक्षेपयेन्मण्डले तं यत्र पुष्पाञ्जलिश्च सः ॥ ६४ ॥

भूभागे पतितस्तत्तन्मूर्तिनामास्य निर्दिशेत् ।
नाम्नोऽन्ते तस्य शिष्यस्य केशवादिपदं भवेत् ॥ ६५ ॥

यद्वा भागवतो वापि तथा भट्टारकोऽपि वा ।
विप्रस्य क्षत्रियस्यापि नाम्नोऽन्ते देवशब्दकः ॥ ६६ ॥

---

61–(a) My ततश्च हुत्वा for तत्र हुत्वा च

पालदासान्तमेवं स्यान्नाम वैश्यचतुर्थयोः ।
दिग्बन्धमो*क्षणं*(चनं ?) कृत्वा मण्डलं दर्शयेत्ततः ॥ ६७ ॥

स्थापितैः कलशैरेतं नवभिस्त्र्यधिकैस्तु वा ।
स्नापयित्वा नवं वासः परिधाप्य पदद्वयम् ॥ ६८ ॥

क्षालयित्वा ततश्चैनमाचमय्य द्विजोत्तम ।
गुरुः शिष्येण सहितो देवं ध्यायेत् समाहितः ॥ ६९ ॥

शिष्यस्य दक्षिणे कर्णे प्रणवाद्यङ्गसंयुतम् ।
ऋष्यादिसहितं मन्त्रं दद्यादष्टाक्षराह्वयम् ॥ ७० ॥

द्वादशार्णं च तदनु मूर्तिमन्त्रान् यथाक्रमम् ।
एकं यथा गुरुर्दद्यात् तन्मन्त्रस्य वशेन च (?) ॥ ७१ ॥

शूद्राणां च तथा स्त्रीणामनुलोमभुवामपि ।
नमःस्वाहाहुंफडादिरहितं प्रणवेन च ॥ ७२ ॥

वर्जितं विष्णुनामैव चतुर्थ्यन्तं च पाठयेत् ।
गायत्रीं जपहोमं च आदद्याद् ब्राह्मणो मनुम् ॥ ७३ ॥

ततः शिष्यः स्वयं देवं कुम्भमण्डलगं हरिम् ।
आराधयेद्गुरुं पश्चात् प्रणतस्योत्थितस्य च ॥ ७४ ॥

कृताञ्जलिपुटस्यास्य शिष्यस्य शिरसि स्वयम् ।
चक्राब्जमण्डलं ध्यात्वा स्वहस्ते विष्णुहस्तकम् ॥ ७५ ॥

निक्षिप्य देशिकः पश्चादाचारानथ शिक्षयेत् ।
मन्त्रो नान्यस्य वक्तव्यो न प्रदर्श्याक्षमालिका ॥ ७६ ॥

---

67–(a) My पादो for पाल
–(c) My कुम्भस्य प्रोक्षणं कृत्वा
70–(c) My लक्ष्म्यादि for ऋष्यादि
–(d) My °क्षरं द्वयम् for °क्षराह्वयम्
73–(c) My युक्तानां for होमं च
–(d) AB न दद्या for आदद्या.
My दद्याद्ब्राह्मयन् मनुम् ।
75–(ab) My Om;

मुद्रां न दर्शयेत् स्वस्य मन्त्रसिद्धिं वदेन्न च ।
गुरोर्नाम न वक्तव्यमस्यादेशं न लङ्घयेत् ॥ ७७ ॥

सदासन्नं च शैष्ट्यं च पादुकां नापि लङ्घयेत् ।
दूषणं न गुरोर्ब्रूयात् नाचरेत्तस्य चाप्रियम् ॥ ७८ ॥

गुरुपुत्रकलत्रादौ गुरुवद्भक्तिमाचरेत् ।
मन्त्रं गुरुं देवतां च समबुद्ध्याभिपूजयेत् ॥ ७९ ॥

नास्तिकान् न स्पृशेच्चैव नाभिभाषेत तैः समम् ।
गुरुदेवाग्निपुरतः पादौ नैव प्रसारयेत् ॥ ८० ॥

देवार्चनमकृत्वा तु न किंचिदपि भक्षयेत् ।
सन्ध्यासु तज्जपस्तोत्रप्रणामादीन् समाचरेत् ॥ ८१ ॥

वैष्णवांश्च यतीन् दृष्ट्वा प्रणमेद्दण्डवत् क्षितौ ।
गच्छँस्तिष्ठँस्तथासीनो *भुञ्जन्* (?) स्वप्नपरायणः ॥ ८२ ॥

देवं नारायणं ध्यायेत् तद्गतेनान्तरात्मना ।
एवमादिसमा(दा ? )चारं शिष्यायोपदिशेद्गुरुः ॥ ८३ ॥

शान्तिहोमं ततः कृत्वा पूर्णाहुतिमथाचरेत् ।
अग्नेर्विसर्जनं कृत्वा कुम्भमण्डलगं हरिम् ॥ ८४ ॥

उद्वास्य प्रणतं शिष्यमाशीर्भिर्वर्धयेद्गुरुः ।
शिष्यश्च दद्याद्गुरवे गां भूमिं भूषणानि च ॥ ८५ ॥

---

77–(d) My °मस्य देशं न कीर्तयेत् ॥
78–(a) A शौर्यं for शैष्ट्यम्
My तदासनहयय्या-
79–(b) My °मान् भवेत् for °माचरेत्
–(c) My देवतानां for देवतां च
81–(b) BMy °दभि for °दपि
82–(c) My स्थितासीनः for °स्तथासीनो
–(d) My भुञ्जन सन् स्वप्नमाचरन् ॥
84 My. Om.
85–(ab) My. Om.

गजमश्वं च शिबिकां दासीदासगणं बहु ।
वित्तशाठ्यमकुर्वाणः स्वात्मानं च निवेदयेत् ॥ ८६ ॥

स्वशक्त्या भोजयेद्विप्रान् वैष्णवान् प्रतितर्प्य च ।
भुक्त्वावशेषं तदनु तत्रैवासीत वाग्यतः ॥ ८७ ॥

आदित्यास्तमयात् पश्चात् स्वनुलिप्तः स्वलंकृतः ।
गुरोरनुज्ञया गेहं गच्छेद् बन्धुसमन्वितः ॥ ८८ ॥

दीक्षामेवं तु यः कुर्याच्चक्रमण्डलसंनिधौ ।
स एव ब्राह्मणो विद्वान् स एवाश्रमिणां वरः ॥ ८९ ॥

स एतैर्नामभिर्वाच्य एकान्ती पाञ्चरात्रिकः ।
सूरिर्भागवतश्चैव सात्त्वतः पाञ्चकालिकः ॥ ९० ॥

अन्याख्याभिर्न वाच्योऽयं यथैव प्राकृतो जनः ।
समयोऽथ समा(दा?)चारः स्वाध्यायद्रव्यसंग्रहौ ॥ ९१ ॥

शुद्धिः पूजा स्तुतिर्ध्यानं विधिरित्यष्टधा मतः ।
योऽनेन विधिना तिष्ठेत् स भागवत इष्यते ॥ ९२ ॥

ज्ञानादिषड्गुणगणो भग इत्युच्यते द्विज ।
स यस्मिन्नस्ति भगवान् स एव भगवान् हरिः ॥ ९३ ॥

तदीये यः सुनिरतः स भागवतनामभाक् ॥

**इति पञ्चरात्रे महोपनिषदि विश्वामित्रसंहितायां दीक्षाविधिर्नाम नवमोऽध्यायः ॥**

---

87–(b) My प्रीतितोऽपि for प्रतितर्प्य
–(c) My हविष्यं for °वशेषं
88–(c) ABM °रेवाथवा for °रनुज्ञया
91–(c) My योगः for योऽथ
92–(d) My उच्यते for इष्यते
93–(c) My यस्मिन्नास्ते स भगवान्
94–(a) ABM तदीयो for तदीये

# दशमोऽध्यायः

काश्यपः—

आराधनविधिं ब्रह्मन् मम वक्तुं त्वमर्हसि ।
येन सम्यक् कृतेनाहं तरामि भवसागरम् ॥ १ ॥

विश्वामित्रः—

आराधनविधिं वक्ष्ये शृणु कश्यपनन्दन ।
संसारपाशबद्धानां विमुक्तेर्हेतुमञ्जसा ॥ २ ॥

शुद्धेनैव हि कर्तव्या विष्णोराराधनक्रिया ।
स्नानेनापि भवेच्छुद्धिः शरीरस्य विचक्षण ॥ ३ ॥

तस्मात् स्नानं प्रवक्ष्यामि शृणुष्वैकाग्रमानसः ।
स्नानं सप्तविधं प्रोक्तं वायव्यं पार्थिवं तथा ॥ ४ ॥

दिव्यं वारुणमाग्नेयं मानसं मान्त्रमित्यपि ।
गच्छन्तीनां गवां पादैरुद्यतां वायुना हृताम् ॥ ५ ॥

धूलिं संधारयेन् मूर्ध्ना वायव्यं तत् प्रचक्षते ।
प्रशस्तवैष्णवक्षेत्रजातया श्वेतमृत्स्नया ॥ ६ ॥

मूर्तीनां केशवादीनां नामोच्चारणपूर्वकम् ।
ललाटादिषु यद्गात्रे ऊर्ध्वपुण्ड्रस्य धारणम् ॥ ७ ॥

तत्पार्थिवं भवेत् स्नानं योगिवर्यैर्निषेवितम् ।
निरभ्रपटलव्योम्नि वर्षे जाते च सातपे ॥ ८ ॥

तेन संप्लावनं यत्स्यात् तद्दिव्यं स्नानमुच्यते ।
नद्यादिषु तटाकेषु सर्वैर्यदवगाहनम् ॥ ९ ॥

---

3–(a) My शुचि for शुद्धे°
–(c) M °नाभि for °नापि
8–(c) ABM निरभ्र° for निरभ्र.
9–(c) My नदीषु च for नद्यादिषु

स्नानं तु विधिवद्यत्तद्वारुणं परिचक्षते ।
समिद्भिर्गोमयैः स्वस्य हवने विहिते सति ॥ १० ॥

तद्भस्म संगृह्य करे मन्त्रेणैवाभिमन्त्र्य च ।
यदूर्ध्वपुण्ड्रकरणमाग्नेयं स्नानमेव तत् ॥ ११ ॥

पादौ प्रक्षाल्य चाचम्य धौतवासोयुगं दधत् ।
आसीनश्चासने शुद्धे प्राणानायम्य वाग्यतः ॥ १२ ॥

हृत्पुण्डरीकसंस्थस्य हरेर्यत् स्मरणं पुनः ।
करोति मानसं तत्स्यात् स्नानं स्नानेषु पूजितम् ॥ १३ ॥

आपो हि ष्ठेति मन्त्राणामुच्चारणपुरस्सरम् ।
कुशाग्रैः शुचिभिस्तोयैः प्रोक्षणं यद्विधीयते ॥ १४ ॥

तन्मान्त्रं स्नानमित्युक्तं सप्तैतान्युदितानि ते ।
कृत्वापि वारुणं पूर्वमितरेषां विधिर्भवेत् ॥ १५ ॥

तस्मान्मयोच्यते स्नानं वारुणं तच्छृणु द्विज ।
नदीसरित्तटाकादि गत्वा दक्षिणतीरगः ॥ १६ ॥

उदकाञ्जलिभिः पूर्वं तीरं संशोध्य तत्र च ।
निधाय तत्र स्नानीयं धौतं वस्त्रयुगं ततः ॥ १७ ॥

शुचेर्देशात् समानीय मृत्तिकां विभजेद् द्विधा ।
कुर्यादेकेन भागेन शरीरपरिशोधनम् ॥ १८ ॥

स्नानीयादिभिरन्यैश्च शिरःप्रभृति शोधयेत् ।
स्नात्वाचम्य मृदो भागं स्थापितं विन्यसेत् त्रिधा ॥ १९ ॥

एकं वामकरे कृत्वा एकं दिग्बन्धमाचरेत् ।
भागेनान्यतरेणैव लिम्पेद्गात्रं स्वकं पुनः ॥ २० ॥

---

10–(a) My विधीयते यत्तत् for तु विधिवद्यत्तत्
14–(c) My द्विजा. for कुशा°
16–(d) A तीरकम् M तीरगम् for तीरगः
17–(b) ABM तीर्थं for तीरम्
19–(d) A तथा for त्रिधा

अवशिष्टेन वै पीठं तेन तीर्थस्य कल्पयेत् ।
तत्र गङ्गां स्मरेद्विष्णोर्वामपादाब्जनिःसृताम् ॥ २१ ॥

अर्घ्यादिकं निवेद्याथ समाहृत्य जलाञ्जलिम् ।
त्रीन् वारान् सप्त वा मन्त्रानुच्चार्य शिरसि क्षिपेत् ॥ २२ ॥

हृदि नारायणं देवं ध्यात्वा तत्पादपद्मयोः ।
अधो निवेश्य स्वशिरो यथाशक्ति जपेन्मनुम् ॥ २३ ॥

उत्तीर्य पश्चादाचम्य शुद्धवासोयुगं दधत् ।
कृतोर्ध्वपुण्ड्रकरणो देवर्षिपितृरूपिणम् ॥ २४ ॥

ध्यायेद्देवं तर्पयित्वा स्वसूत्रोक्तेन वर्त्मना ।
विधायाह्निकशेषं च कृत्वोपस्थानकं रवेः ॥ २५ ॥

आगत्य यागसदनं प्रक्षाल्य पदयोर्युगम् ।
आ जानु हस्तयुग्मं च प्रक्षाल्या मणिबन्धनात् ॥ २६ ॥

आचम्य द्वारमाश्रित्य अङ्गन्यासपुरस्सरम् ।
पाणिभ्यां ताडनं चैव कृत्वा द्वारस्य संमुखम् ॥ २७ ॥

विधाय चाग्निप्राकारं तर्जन्या चोर्ध्वसंस्थया ।
कवाटं वायुमन्त्रेण समुद्घाट्यान्तरं व्रजेत् ॥ २८ ॥

---

21–(ab) ABM पीठं तत् तीर्थस्य परि° for वै पीठं तेन तीर्थस्य

22–(a) ABM अस्यामर्घ्यं for अर्घ्यादिकं
(d) My मन्त्रमु° for मन्त्रानु°

23–(a) ABM मनो for हृदि

24–(c) ABM °करणं for °करणो
–(d) ABM तर्पणम् for रूपिणम्

25–(a) BM My ध्यायेदेवं for ध्यायेद्देवं
–(c) My होमं for शेषं

27–(ab) My गत्वा द्वाराग्रं भक्तिभावपुरस्सरः for द्वारमाश्रित्य अङ्गन्यासपुरस्सरम्
–(cd) ABM कृत्वा त्रिःकृत्वो द्वारसान्मुखम् for चैव कृत्वा द्वारस्य संमुखम्

देवव्रतं साम जपन् दक्षिणाङ्घ्रिपुरस्सरम् ।
गन्धादिसंभारयुतं जप्त्वा वरुणमन्त्रकम् ॥ २९ ॥

द्वाःस्थानामर्चनं कृत्वा सर्वेषां मण्डपं व्रजेत् ।
सर्वमङ्गलसंयुक्तं रत्नकुट्टिमसंयुतम् ॥ ३० ॥

सौवीरतोरणैश्चापि ध्वजैश्च समलंकृतम् ।
मणिकिङ्किणिमालाढ्यं मणिपीठविचित्रकम् ॥ ३१ ॥

माणिक्यमालिका*भिश्च* (युक्तं?)लम्बमालाविराजितम् ।
एवं कर्तुमशक्तश्चेत् मनसैवं स्मरेद्बुधः ॥ ३२ ॥

गत्वा च देवपुरतः पुण्डरीकाक्षविद्यया ।
प्रणम्य दण्डवद् भूमावुत्थाय रचिताञ्जलिः ॥ ३३ ॥

आरोप्य दीपनिकरं मालाद्यपि निरस्य च ।
पात्रप्रक्षालनं कृत्वा निर्गते परिचारके ॥ ३४ ॥

शुक्लाम्बरयुगं बिभ्रत् सर्वालंकारभूषितः ।
स्रग्भिर्विलेपनैः श्वेतैरलंकृतशरीरकः ॥ ३५ ॥

ऊर्ध्वपुण्ड्राणि विन्यस्य द्वादश श्वेतमृत्स्नया ।
देवस्य दक्षिणे पार्श्वे बृस्यादावासने शुभे ॥ ३६ ॥

अस्त्रमन्त्रेण संशुद्धे स्वयमासीत वाग्यतः ।
बध्वा पद्मासनं वाथ स्वस्तिकासनमेव वा ॥ ३७ ॥

शङ्खकाहलसंमिश्रं तूर्यघोषं प्रवर्त्य च ।
तिरस्करिण्या द्वारं च निच्छिद्रमपिधाय च ॥ ३८ ॥

---

29–(c) ABM गत्वा च तद्द्वारयुतम्

31–(a) ABM सौवर्णैस्तोरणैश्चित्रैः

32–(d) My नरः for बुधः

34–(a) ABM दीपं निरतं for दीपनिकरम्

38–(cd) My. Om.

संकल्प्य वह्निप्राकारं तन्मन्त्रेणात्मनो बहिः ।
चक्रमन्त्रेण चाबध्य चक्रमुद्रां स्वरक्षणम् ॥ ३९ ॥

विधायेत्थं ततः कुर्यात् प्राणायामत्रयं क्रमात् ।
इत्थं स्वरक्षणं कृत्वा योगमुद्रां विधाय च ॥ ४० ॥

नाभिकन्दे चतुष्कोणे मण्डले वायुसंज्ञिते ।
तद्बीजं मनसा ध्यात्वा तत्समुत्थेन वायुना ॥ ४१ ॥

धूम्रवर्णेन देहस्थं पाप्मानमपि शोष्य च ।
हृदब्जान्तस्त्रिकोणस्थं वह्निबीजं विचिन्त्य च ॥ ४२ ॥

रक्तवर्णं तदुत्थाग्निज्वालाभिः कल्मषं दहेत् ।
पीताभं कण्ठदेशे च माहेन्द्रं चतुरश्रकम् ॥ ४३ ॥

बीजं विधाय ज्वलनमुत्थितं वायुना सह ।
स्तम्भयेत् कुम्भकेनैव मूर्ध्नि स्फटिकसंनिभम् ॥ ४४ ॥

वर्तुलं मण्डलं ध्यात्वा वारुणं तस्य मध्यभाक् ।
तद्बीजनिःसृतेनैव क्षालयेदमृताम्भसा ॥ ४५ ॥

आ पादादा च मूर्ध्नश्च शरीरं सर्वतस्ततः ।
भूमिप्रभृतितत्त्वानि सावधानेन चेतसा ॥ ४६ ॥

संहारक्रमयोगेन कारणेषूपसंहरेत् ।
आ पादादा च जान्वन्तं पृथिवीस्थानमुच्यते ॥ ४७ ॥

तत्रस्थं पञ्चगुणितं पीताभं चतुरश्रकम् ।
घ्राणोपस्थसमायुक्तं तन्मात्रालक्ष्यते ततः ॥ ४८ ॥

गन्धे संहृत्य पश्चात्तमप्सु चैवोपसंहरेत् ।
आ जानोः *पायु*(नाभि?)पर्यन्तं *वायु*(अपां ?)स्थानं विदुर्बुधाः॥४९॥

---

42–(d) **My.** विमृज्य for विचिन्त्य

49–(c) **M** पाणि for *पायु*
–(d) **My** उपस्थानं for *वायु* (अपां ?) स्थानम्

तस्माच्चतुर्गुणा आपः श्वेताश्चन्द्रार्धसंस्थिताः ।
रसनां पायुसंयुक्तां गन्धतन्मात्रया सह ॥ ५० ॥

रसे संहृत्य पश्चात् तं संहरेत् तेजसि द्विज ।
नाभेर्हृदयपर्यन्तं वह्निस्थानं प्रकीर्त्यते ॥ ५१ ॥

तत्संस्थं त्रिगुणं त्र्यश्रं पाटलं वह्निमुज्ज्वलम् ।
सरसं दृष्टिपादाभ्यां रूपे संहृत्य तत्पुनः ॥ ५२ ॥

वायौ संहृत्य हृदयादा भ्रूमध्यं मरुत्स्थितिः ।
तत्स्थं वायुं धूम्रवर्णं द्विगुणं रूपसंज्ञितम् ॥ ५३ ॥

संहृत्य तत्स्पर्शगुणं खे चैव पुनराहरेत् ।
आ भ्रूमध्याच्छिरोऽन्तं च गगनस्थानमुच्यते ॥ ५४ ॥

तत्स्थं शब्दगुणं नीलं श्रुतिवाक्सहितं ततः ।
संहरेत् स्पर्शसंयुक्तं शब्दतन्मात्रमध्यतः ॥ ५५ ॥

संहृत्य शब्दतन्मात्रं स्वान्ते तच्चाप्यहंकृतौ ।
तां बुद्धौ प्रकृतौ तां च तां च जीवे सवासनाम् ॥ ५६ ॥

तं सूक्ष्मं नाभिचक्रस्थं सूर्यप्रतिमतेजसम् ।
पद्मसूत्रा*ह्व*(भ ? )या नाड्या सूक्ष्मया च सुषुम्नया ॥ ५७ ॥

---

50–(c) A रसानां for रसनां
My रसना पायुसंयुक्ता
51–(b) My तैजसं for तेजसि
–(c) My आपायो हृदान्तं च
52–(b) My मण्डलम् for मुज्ज्वलम्
53–(a) BMMy पायौ for वायौ
–(c) ABMy वृत्तं for वर्णम्
–(d) My संज्ञया for संज्ञितम्
54–(ab) My स्पर्शके वायुं तावच्च for तत्स्पर्शगुणं खे चैव
–(d) My गहन for गगन
55–(ab) A नीलश्रुत for नीलं श्रुति
–(b) BM श्रित for श्रुति
57–(c) My सूत्रोभया for सूत्रा*ह्व* (भ?)या

वायुना कुम्भकेनोर्ध्वं शनैरारोहयेत्ततः ।
निर्भिद्य ब्रह्मणो रन्ध्रं देहादूर्ध्वं विनिर्गतम् ॥ ५८ ॥

रविबिम्बं प्रविश्योर्ध्वमुत्थितं चाशरीरिणम् ।
परं ब्रह्म प्रविष्टं तं जीवं ध्यात्वा समाहितः ॥ ५९ ॥

वह्निबीजेन पादाग्रसंस्थितेनोज्ज्वलत्विषा ।
योनिजं स्वशरीरं तु दग्धं सर्वं विचिन्त्य च ॥ ६० ॥

ध्यायेन्निवृत्तिबीजं खे चन्द्रकोटिसमप्रभम् ।
तदुत्थे चामृतमये जलधौ श्वेतपङ्कजम् ॥ ६१ ॥

ध्यात्वा तु जीवं संभूतं परस्माद्ब्रह्मणो मुने ।
जीवाच्च प्रकृतिं तस्या बुद्धिं बुद्धेरहंकृतिम् ॥ ६२ ॥

*तस्मान्म*(स्या म ?) नः समुत्पन्नं शब्दतन्मात्रमप्यतः ।
तस्माज्जातं वाक्श्रुतिभ्यां सहाकाशं विचिन्तयेत् ॥ ६३ ॥

शब्दैकगुणकाकाशात् स्पर्शतन्मात्रमुत्थितम् ।
युक्तं शब्दस्पर्शरूपैश्चक्षुःपादसमन्वितम् ॥ ६४ ॥

अग्नेश्च रसतन्मात्रं तस्मादापश्चतुर्गुणाः ।
सपायुजिह्वाः संजातास्ताभ्यो वै गन्धमात्रकम् ॥ ६५ ॥

तस्माच्छब्दस्पर्शरूपरसगन्धगुणैर्यु*तम्*(ताम् ?) ।
घ्राणोपस्थयुतां भूमिं समुत्पन्नां विचिन्तयेत् ॥ ६६ ॥

इत्थं शरीरमापाद्य पञ्चभूतसमुद्भवम् ।
पूर्वोक्तात् पङ्कजात् तस्मादमृतौघैः समुत्थितैः ॥ ६७ ॥

---

58–(c) My विभिद्य for निर्भिद्य ; रन्ध्रे for रन्ध्रम्

59–(a) My प्रवेश्यो° for प्रविश्यो°
–(d) M दिवं for जीवं

60–(b) ABM °नोत्थित for °नोज्ज्वल

62–(a) M जीवसंभूतिं for जीवं संभूतम्

65–(c) My वायु for पायु

स्नापयित्वा निजं देहं शुद्धमप्राकृतं स्वकम् ।
समाराधनयोग्यं तद्धरेरिति विचिन्त्य च ॥ ६८ ॥

संस्मृत्याष्टाक्षरं मन्त्रं द्विषडक्षरमेव वा ।
त्रिषु न्यासेष्वेकतमं कृत्वाङ्गन्यासमादरात् ॥ ६९ ॥

ऋष्यादिप्रणवं कृत्वा नमःस्वाहान्तमेव वा ।
वर्णात्मानं वासुदेवं गन्धपुष्पादिभिः क्रमात् ॥ ७० ॥

अर्चयित्वा ततो देवं हृदयाम्भोजसंस्थितम् ।
मानसैरुपचारैश्च होमान्तैरर्चयेत् क्रमात् ॥ ७१ ॥

ततो विज्ञाप्य देवेशं बाह्ययागं समाचरेत् ।
समाराधनवस्तूनि क्षालनीं जलपूरिताम् ॥ ७२ ॥

दक्षिणे स्थापयित्वा तु वामे पार्श्वे गलन्तिकाम् ।
विष्णुगायत्रियार्घ्यादिपात्राणि क्षालयेत् सुधीः ॥ ७३ ॥

अग्रे देवस्य सौवर्णं स्थापयित्वासनं ततः ।
क्षालयित्वा तदुपरि पादानि स्थापयेत् पुनः ॥ ७४ ॥

क्रमशस्तेषु पादेषु पात्राण्यपि निवेशयेत् ।
अग्निकोणे न्यसेदर्घ्यपात्रं दक्षिणपश्चिमे ॥ ७५ ॥

पाद्यपात्रं च विन्यस्य पात्रमाचमनार्थकम् ।
विन्यसेद्वायुकोणे तु स्नानीयं शांकरे पुनः ॥ ७६ ॥

---

70–(a) My जपादि for ऋष्यादि.
–(b) ABM वह्निशालान्तमेव च ।
71–(b) M विष्टरे for संस्थितम्
73–(c) AB तानि for °र्घ्यादि
एतानि विष्णुगायत्र्या ।
74–(b) BM समन्ततः for °सनं ततः
–(d) BM पदानि for पादानि
75–(a) ABM पात्रेषु for पादेषु

प्रोक्षणार्घ्यस्य पात्रं च विन्यसेत् सर्वमध्यतः ।
सिद्धार्थमक्षतं चैव कुशाग्रं तिलमेव च ॥ ७७ ॥

यवं गन्धं फलं पुष्पमर्घ्यमष्टाङ्गमुच्यते ।
दूर्वा च विष्णुपर्णी च श्यामाकं पद्ममेव च ॥ ७८ ॥

पाद्ये द्रव्याणि चैतानि निक्षिप्य तदनन्तरम् ।
लवङ्गं जाति*त*(क?) क्कोलद्रव्याण्याचमनीयके ॥ ७९ ॥

सिद्धार्थकादि स्नानीये पूर्ववत् कल्पयेद् बुधः ।
पात्राण्येतानि सर्वाणि पूरयेद्गालितोदकैः ॥ ८० ॥

हस्ते वामेतरे चक्रं द्वादशारं ससूर्यकम् ।
ध्यात्वा तद्रश्मिपुञ्जेन दहेद् द्रव्याणि तानि च ॥ ८१ ॥

वामे हस्ते सिते पद्मे चन्द्रं ध्यात्वा सुभास्वरम् ।
तदुत्थैरमृताम्भोभिर्ध्यात्वा सिक्तानि तानि च ॥ ८२ ॥

उभयोर्हस्तयोर्ध्यात्वा देवं नारायणं प्रभुम् ।
ताभ्यां द्रव्याणि पात्रेषु स्पृष्ट्वा सर्वेष्वनन्यधीः ॥ ८३ ॥

उच्चार्य विष्णुगायत्रीमभिमन्त्र्य सकृत् सकृत् ।
संप्रदर्श्य ततो मुद्रां सौरभेयीं तदुत्थया ॥ ८४ ॥

दुग्धस्य धारया तानि पूरितानि विचिन्त्य च ।
ओमर्घ्यं कल्पयामीति पात्रमर्घ्यस्य संस्पृशेत् ॥ ८५ ॥

---

78–(b) A °मष्टक° for °मष्टाङ्ग°
M °मष्ट स° for °मष्टाङ्ग°

81–(a) M वामकरे for वामेतरे

82–(b) A ध्यात्वा शङ्ख for चन्द्रं ध्यात्वा
B ध्यात्वा - - सुभास्वरम् ।
M ध्यात्वा पात्रं for चन्द्रं ध्यात्वा

83–(b) ABM ध्यायेत् for देवम्
(c) ABM तानि for ताभ्याम्

V—9

एवमन्यान्यपि स्पृष्ट्वा कल्पयामीति चोच्चरेत् ।
पात्रान्तरेणार्घ्यपात्रात् किंचिदुद्धृत्य वारि च ॥ ८६ ॥

निवेश्य वामहस्ते च मूलमन्त्रेण मन्त्रयेत् ।
सप्तकृत्वः पठेत्तेन तदादाय जलं पुनः ॥ ८७ ॥

कूर्चेन तानि द्रव्याणि प्रोक्ष्य चात्मानमन्वतः ।
कल्पयेद्देवदेवस्य योगपीठं समाहितः ॥ ८८ ॥

आधारशक्तिं प्रथमं कालाग्निं कूर्ममन्वतः ।
अनन्तमुपरिष्टाच्च सहस्रफणसंयुतम् ॥ ८९ ॥

तस्योपरि भुवं देवीं चतुरश्रां विचिन्त्य च ।
तस्योपरिष्टाद्धर्मादीन् पादानष्टौ प्रकल्पयेत् ॥ ९० ॥

धर्मं ज्ञानं च वैराग्यमैश्वर्यं कोणदिक्षु च ।
नपूर्वांश्चतुरोऽप्येतान् पूर्वाद्यासु ककुप्सु च ॥ ९१ ॥

सिताः पूर्वे च चत्वारः पाश्चात्या रक्तवर्णकाः ।
पुरुषाकृतयः सर्वे सिंहवक्त्राश्चतुर्भुजाः ॥ ९२ ॥

ध्यातव्याश्चार्चनीयाश्च चतुर्थ्यन्तैर्नमोऽन्वितैः ।
नामभिः प्रणवाद्यैश्च मन्त्राः कल्प्या द्विजोत्तम ॥ ९३ ॥

एताश्चतस्रः पूर्वाद्यास्तासु देवचतुष्टयम् ।
अहंकारत्रयं पाशा गुणाः सत्त्वादयो गुणाः ॥ ९४ ॥

जीवात्मा पञ्चभूतात्मा तूलिका स्यात् तदूर्ध्वतः ।
विद्यादास्तरणं चाग्नेर्मण्डलं सोमसूर्ययोः ॥ ९५ ॥

---

87-(c) My फलं for पठेत्
-(d) My वपुः for पुनः
95-(b) My कुलिन्दः for तूलिका
-(c) A ब्रास्तरणं BM चास्तरणं for °दास्तरणम्

*मण्डलानि (लं च ?) क्रमाद् ध्येया(यं ?)*स्तदूर्ध्वे द्वादशच्छदम् ।
स्मेरकेसरसंपूर्ण मध्ये कर्णिकया युतम् ॥ ९६ ॥

*दलद्वादश वि (के ?) ज्ञेयाः* क्रमाद् द्वादशमूर्तयः ।
मोहिन्याद्याः पञ्चदश केसरेषु च शक्तयः ॥ ९७ ॥

कर्णिकायास्तु मूले स्यात् गुणयोनित्रयं मुने ।
गुणशक्तित्रयं मध्ये क्रमेणैवं विचिन्तयेत् ॥ ९८ ॥

भद्रासनं विधायैवं तस्मिन् देवं समर्चयेत् ।
पीठस्य दक्षिणे पार्श्वे ब्रह्मविष्णुशिवान् यजेत् ॥ ९९ ॥

गन्धपुष्पादिभिर्भोगैरिष्ट्वा पार्श्वे तथोत्तरे ।
सनत्कुमारसनकसनन्दानर्चयेदपि ॥ १०० ॥

यजेत् पश्चिमपार्श्वे च दुर्गाविघ्नेशनारदान् ।
आत्मनो गुरुपङ्क्तिं च पूजयित्वा विधानतः ॥ १०१ ॥

कस्मिंश्चित् क्षालिते पात्रे पूरिते चार्घ्यवारिणा ।
मूलमन्त्रेण हस्ताभ्यां ललाटे (ट ?)सममुद्धृते ॥ १०२ ॥

आवाह्य मूलबिम्बात्तु दीपादीपवदच्युतम् ।
आगच्छपदसंयुक्तं चतुष्कृत्वा समुच्चरेत् ॥ १०३ ॥

मूलमन्त्रं जलं तच्च कर्मार्चाशिरसि न्यसेत् ।
कूर्चेन तद्गतं देवं विचिन्त्य प्रणमेत् क्षितौ ॥ १०४ ॥

---

96–(a) My °लादि for °लानि
97–(a) AM दला for *दल
100–(d) My द्विजाः for दपि
101–(c) My पङ्क्तीश्च for पङ्क्तिं च
102–(a) ABM °श्चिदक्षये for °श्चित्क्षालिते
103–(d) My °कृत्वः for कृत्वा
ABM °द्धरेत् for °च्चरेत्
104–(a) AM ज्वलन्तं च for जलं तच्च
B मूलमन्त्रज्वलन्तश्च

उत्थाय स्वागतं ब्रूयात् पश्चान्मुद्रां च दर्शयेत् ।
सन्निधिं प्रार्थयेत्तत्र यावत्पूजावसानकम् ॥ १०५ ॥

आभिमुख्यं विधायास्य पुण्डरीकाक्षविद्यया ।
आसनं च विधायास्य मूलमन्त्रेण मन्त्रवित् ॥ १०६ ॥

अर्चायां *देह(अङ्ग ?)विन्यासं* मन्त्रस्य विदधीत च ।
विनैव तु करन्यासं शङ्खमुद्रां च दर्शयेत् ॥ १०७ ॥

सुरैः सिद्धैः सत्त्वनिष्ठैर्मुनिभिश्चैव कारिते ।
आवाहनं न कुर्वीत स्थापिते निश्चले हरौ ॥ १०८ ॥

आवाहनं भवेदस्य संमुखीकरणं द्विज ।
कुण्डस्थितं हव्यवाहं होमकाले समागते ॥ १०९ ॥

उत्थापयेत्तथा देवमिज्याकाले प्रबोधयेत् ।
योगपीठ*प्रक्लृप्तं* च (क्लृप्तिश्च ?) मन्त्रन्यासश्च काश्यप ॥ ११० ॥

इज्याकाले विधातव्ये स्थिरबिम्बे महामते ।
*दिक्षुर*(देवम ?)र्घ्याम्बराकल्पपुष्पगन्धानुलेपने ॥ १११ ॥

स्थितं ध्यायेत् तथासीनं पाद्याचमनयोः पुनः ।
आसीनमभिषेके तु पद्मासननिवेशितम् ॥ ११२ ॥

धूपप्रदीपनैवेद्येष्वासीनं स्वस्तिकासने ।
अन्येष्वप्युपचारेषु तत्कर्मानुगुणं स्थितम् ॥ ११३ ॥

देवमाराधको ध्यायन् तत्तत्कर्म समाचरेत् ।
अर्चयामीति साम्नादौ विकिरेत् पुष्पसंपुटम् ॥ ११४ ॥

---

107–(a) ABM देव for *देह

109–(a) ABM °त्तस्य for °दस्य

110–(c) M प्रवृत्तिः for *प्रक्लृप्तम्*

111–(b) AM मते तथा B मते for महामते
 –(c) My दिक्स्थिताभ्यां° for *दिक्षुर*(देवम?)र्घ्या°

114–(a) A ब्रह्मन् for ध्यायन्

विज्ञापयेज्जगन्नाथं *कृत्वा*(ता ?)ञ्जलिपुटः स्थितः ।
प्रभो सर्वामराधीश विष्णो जिष्णो श्रियः पते ॥ ११५ ॥

यजाम्यर्घ्यादिभिर्भोगैस्त्वां जुषस्व कृपां मयि ।
इति विज्ञाप्य शिरसा प्रणम्यार्घ्यं तु मूर्धनि ॥ ११६ ॥

दद्यात् पादाब्जयोः पाद्यं क्षिपेत् पाद्यप्रतिग्रहे ।
ध्यायेदाचमनस्याथ दाने देवं जलैर्हरिम् ॥ ११७ ॥

आचामन्तं पुनस्तच्च क्षिपेदम्भःपरिग्रहे ।
धूपं चागरुगन्धाढ्यं देवदेवस्य दर्शयेत् ॥ ११८ ॥

सकर्पूरदशं दीपं देवदेवस्य दर्शयेत् ।
आवाहनार्घ्यधूपेषु परिवारस्य भोजने ॥ ११९ ॥

घण्टां संचालयेद्दीपदर्शने नैव चालयेत् ।
पुष्पाञ्जलिं च विकिरेत् प्रतिभोगं पदाब्जयोः ॥ १२० ॥

मधुपर्कं दर्शयित्वा हस्ताभ्यां तत्पदाम्बुजे ।
गृहीत्वा शिरसा चैव प्रणमेद्भक्तिपूर्वकम् ॥ १२१ ॥

प्रणम्य दण्डवद् भूमौ देवं विज्ञापयेत्ततः ।
दासोऽहमस्मि ते देव सपुत्रः सपरिग्रहः ॥ १२२ ॥

नियुङ्क्ष्व मां यथाकामं कर्तव्येषु जगद्गुरो ।
इत्थं विज्ञाप्य तदनु परिवारान् प्रकल्पयेत् ॥ १२३ ॥

दलेष्वासनपद्मस्य प्राच्यादिषु यजेत् क्रमात् ।
श्रीवत्सं वनमालां च योगमायां च वैष्णवीम् ॥ १२४ ॥

---

115–(d) My. जगत् for श्रियः

117–(d) M ध्याते देवे जले हरिम् ।

118–(a) ABM °मनं for °मन्तं
–(b) ABM प्रति for परि

119–(d) M °वार्य° for °वार°

विमला सृष्टिशक्त्याह्वा तथा चोत्कर्षिणीति च ।
ज्ञानशक्तिः सत्यशक्तिरीशान्या ह्यनुकम्पका ॥ १२५ ॥

पितामही क्रमेणैताः स्मृता द्वादश शक्तयः ।
प्रथमावरणे दिक्षु प्रागादिषु यथाक्रमम् ॥ १२६ ॥

व्याप्तिः कान्तिश्च तृप्तिश्च श्रद्धाविद्ये दया क्षमा ।
अष्टैताः शक्तिपर्यन्ताः शक्तिचामरधारिणीः ॥ १२७ ॥

इष्ट्वा द्वितीयावरणे शङ्खचक्रादिधारिणः ।
प्राच्याद्यासु चतुर्दिक्षु पूजयेत् पुरुषानिमान् ॥ १२८ ॥

श्रीवाराहं नारसिंहं श्रीधरं च हयाननम् ।
आग्नेयादिषु कोणेषु रामौ भार्गवराघवौ ॥ १२९ ॥

वामनं वासुदेवं च क्रमादष्टाविमे स्मृताः ।
आवृतौ च तृतीयायां पूजयेदायुधाष्टकम् ॥ १३० ॥

पाञ्चजन्यं च मुसलं चक्रं नन्दकमेव च ।
गदां शार्ङ्गं च पद्मं च वनमालां क्रमाद्यजेत् ॥ १३१ ॥

चतुर्थ्यामावृतौ पश्चात् कुमुदादीन् यजेत् क्रमात् ।
पञ्चमावरणे चैव दिक्पालानिन्द्रपूर्वकान् ॥ १३२ ॥

एवं विधाय गरुडं देवस्याभिमुखं स्थितम् ।
कृताञ्जलिकरद्वन्द्वं भोगैरर्घ्यादिभिर्यजेत् ॥ १३३ ॥

देवस्य दक्षिणे पार्श्वे श्रियं देवीं समर्चयेत् ।
वामे भूमिं यथादेवमिह चार्घ्यादिभिर्यजेत् ॥ १३४ ॥

---

125-(ab) ABM °लोत्कर्षिणी ज्ञाना सत्येशाना अनुक्रमात् for °ला सृष्टिशक्त्याह्वा तथा चोत्कर्षिणीति च ।

-(cd) ABM. अनुकम्पापितामह्यौ शक्तिरेतास्तु द्वादश ॥

126-(ab) ABM. Om.

127-(b) My. जया for दया

बहिर्द्वितीयावरणात् सोमेशानदिगन्तरे ।
विष्वक्सेनं चतुर्बाहुं शङ्खचक्रधरं यजेत् ॥ १३५ ॥

पश्चाद्विज्ञापयेद् देवं गन्तुं स्नानासनं प्रति ।
उत्थितस्य प्रभोः पश्चात् पादुके प्रणिधापयेत् ॥ १३६ ॥

इदं विष्णुरिति द्वाभ्यामृग्भ्यामारोपयेत्तयोः ।
उत्तिष्ठ ब्रह्मण इति प्रापयेत् स्नानवेदिकाम् ॥ १३७ ॥

भद्रं कर्णेभिरिति च वेदिकायां निवेशयेत् ।
विष्णुगायत्रियार्घ्यं स्यात् पाद्यं विष्णु (त्रीणि ?) पदेति च ॥ १३८ ॥

आचामयेज्जगन्नाथं पश्चादापः पुनन्त्विति ।
शालिमात्राः प्रदर्श्याथ विष्णुगायत्रिया पुनः ॥ १३९ ॥

मधुपर्कं च दातव्यं जितं त इति मन्त्रतः ।
निवेदयेच्च ताम्बूलं मुखवासं च दापयेत् ॥ १४० ॥

दन्तधावनकं दद्यात् तद्विष्णोरिति विष्णवे ।
जिह्वानिर्लेहनं दद्यात् तद्विप्रास इति प्रभोः ॥ १४१ ॥

मुखप्रक्षालनं दद्याद् विष्णुगायत्रिया पुनः ।
निवेदयित्वा ताम्बूलं जितं त इति मन्त्रतः ॥ १४२ ॥

विकिरेत् पादपुष्पाणि पश्चादभ्यञ्जयेद्विभुम् ।
वामदेव्येन मन्त्रेण स्रजं तेनैव दापयेत् ॥ १४३ ॥

आदर्शनं दर्शयित्वा कुर्यादुद्वर्तनं ततः ।
माषचूर्णेन च ततो विष्णोर्नुकमिति प्रभोः ॥ १४४ ॥

---

135–(d) My. °क्रादिकं for °क्रधरम्

137–(ab) My. Om.

139–(ab) My. Om.

140–(ab) ABM. Om.

140–(c) ABM °यित्वा for °येच्च

141–(a) ABM दन्तानां धावनं for दन्तधावनकम्

142–(c) ABM मधुपर्कं च दातव्यम्

न ते विष्णो इति ददेत्(?) शुद्धामलकवारि च ।
संक्षालनं गन्धतोयैरापो हि ष्ठादिमुच्चरेत् ॥ १४५ ॥

धान्यराशिस्थितैः सप्तदशकुम्भैश्च सेचयेत् ।
हिरण्यवर्णां हरिणीमित्यालेपो हरिद्रया ॥ १४६ ॥

विलिप्य कुङ्कुमेनैव पुष्पस्रग्भिर्विभूष्य च ।
नीराज्य कलशाम्भोभिः क्षालयेत् पावमानिभिः ॥ १४७ ॥

परिधाप्याम्बरयुगं चन्दनेन विलिप्य च ।
ब्रह्म जज्ञानमिति च कया नश्चित्र आभुवत् ॥ १४८ ॥

स्रग्भिर्विभूष्य चार्घ्याद्यैर्यजेत परमेश्वरम् ।
सहस्रधारया स्नानं पुंसूक्तेन विधाय च ॥ १४९ ॥

अग्निर्मूर्धेति मन्त्रेण प्लोतेनाङ्गानि *अर्ह*(मार्ज ? )येत् ।
विधाय धौते द्वे वस्त्रे निर्मले परिधाप्य च ॥ १५० ॥

प्रणवेन ब्रह्मसूत्रमुत्तरीयं प्रकल्प्य च ।
दत्वा चाचमनं तस्माद्गमनं प्रार्थयेदनु ॥ १५१ ॥

प्रदाय पादुके देवमलंकारासनं नयेत् ।
तस्मिन् देवे सुखासीने यजेदर्घ्यादिना पुनः ॥ १५२ ॥

केशानगरुजैर्धूपैर्मूर्धानं दिव इत्यृचा ।
शोषयित्वाथ शुचिना चन्दनेन सुगन्धिना ॥ १५३ ॥

सकर्पूरेण तुहिनजलसंद्रावितेन च ।
इदं विष्णु पठन् मन्त्रं विलि*प्य*(प्या ? )विरलं तनौ ॥ १५४ ॥

इरावतीतिमन्त्रेण पादयोरक्षतं क्षिपेत् ।
जितं त इति मन्त्रेण मकुटादिविभूषणैः ॥ १५५ ॥

---

150–(b) My. °नाङ्गम्बुनिर्वृतिम् for °नाङ्गानि *अर्ह*(मार्जं?) येत्
151–(cd) My. दत्वाचमनमस्माच्च निर्गमं प्रार्थयेऽपि च ।
154–(b) My. मुद्रान्वितेन for संद्रावितेन

विभूष्य धारयित्वा च विचित्राः सुमनस्रजः ।
तद्विष्णोरिति मन्त्रेण विष्णुगायत्रियाञ्जनम् ॥ १५६ ॥

निधाय चक्षुषोः पश्चादादर्शमपि दर्शयेत् ।
व्याहृतीभिर्जितं तेन धूपयेदगरूत्थितैः ॥ १५७ ॥

धूपैः सुरभिगन्धैश्च दीपान् संदर्शयेत् पुनः ।
उद्दीप्यस्वेति मन्त्रेण तिलान् वै तण्डुलानपि ॥ १५८ ॥

वस्त्रं स्वर्णं च ताम्बूलं रत्नानि विविधानि च ।
फलानि गाश्च धान्यानि सघृतानि यथावसु ॥ १५९ ॥

गोग्रासं चैव पुरतो देवदेवस्य देशिकः ।
वैष्णवेभ्यः कृते त्वस्मिन् दाने राष्ट्रस्य भूपतेः ॥ १६० ॥

सुखहेतुर्भवेच्चैव प्राणिनां राष्ट्रवर्तिनाम् ।
तिरस्करिण्यपनयं कृत्वा भक्तानुकम्पया ॥ १६१ ॥

वादयेत् सर्ववाद्यानि शङ्खकाहलनिःस्वनैः ।
शृङ्गैरपि च सौवर्णैः श्रवणानां सुखावहैः ॥ १६२ ॥

गापयेद्गायकैश्चैव नर्तकीभिश्च नर्तनम् ।
कारयेद्रथमातङ्गतुरङ्गशिबिकादिकान् ॥ १६३ ॥

दर्शयेद्वाहनवरान् गरुडं च ध्वजोपरि ।
निवेश्य दर्शयित्वा तु छत्रं मुक्तामयं ततः ॥ १६४ ॥

*श्वेते च(तैश्च ?) वालव्यजने(नैः?) मायूरव्यजने* (नैः?) तथा ।
तालवृन्तैरपि क्षौमैर्वीजयेदभितो विभुम् ॥ १६५ ॥

ब्राह्मणैश्चतुरो वेदान् श्रावयेत् सषडङ्गकान् ।
कारयेत् स्तोत्रपठनं ब्राह्मणैर्वेदवित्तमैः ॥ १६६ ॥

सौवर्णपात्रनिक्षिप्तैर्गव्याज्यपरिदीपितैः ।
आहृतैर्द्विजवर्यैश्च देवं नीराजयेदपि ॥ १६७ ॥

---

162–(d) My. श्रवणानि सुखापयेत् ।
165–(b) M मयूर for मायूर ; व्यजनं for व्यजने

भोजनासनयानाय देवं विज्ञापयेत् ततः ।
प्रदाय पादुके पश्चात् भोजनासनमानयेत् ॥ १६८ ॥

तत्रासीनाय देवाय दद्यादर्घ्यं सपाद्यकम् ।
पश्चादाचमनीयं च मधुपर्कं निवेदयेत् ॥ १६९ ॥

प्रणवेन ततो दद्यात् ताम्बूलीवीटिकां ततः ।
धेनुं सवत्सां सौवर्णखुरशृङ्गविभूषिताम् ॥ १७० ॥

पात्रस्थैरष्टभिर्धान्यैः सह मात्रां प्रदर्शयेत् ।
आचार्याय च तां दद्यात् पूजासंपूरणाय च ॥ १७१ ॥

अन्नं निवेदयेत् सिद्धं पायसाद्यं चतुष्टयम् ।
अपक्वैरतिपक्वैश्च यथायोगं प्रकल्पितैः ॥ १७२ ॥

फलैः सर्वर्तुसंभूतैर्मधुरादिसमन्वितैः ।
संप्रोक्ष्य चास्त्रमन्त्रेण परिषिच्य च वर्मणा ॥ १७३ ॥

प्रणवेनार्हणं दत्वा दहनाप्यायनादिकम् ।
हविषो दोषशान्त्यर्थं कारयित्वा प्रदक्षिणम् ॥ १७४ ॥

मुद्रां च सौरभीं कृत्वा दर्शयित्वा च भक्तितः ।
अर्घ्यपात्रस्थितं पुष्पं विन्यस्य च यथाक्रमम् ॥ १७५ ॥

विष्णुहस्तसमाख्यं च कृत्वा वामकरेण च ।
अन्वारब्धं दक्षिणेन ग्रासमुद्रायुतेन च ॥ १७६ ॥

देवस्य त्वेतिमन्त्रेण करे देवस्य दक्षिणे ।
निर्वपेत् सावधानेन भक्तियुक्तेन चेतसा ॥ १७७ ॥

अर्घ्ये धूपे च नैवेद्ये त्रिषु घण्टां निनादयेत् ।
दत्वा च पावनं भक्तं पानीयं च सुसंस्कृतम् ॥ १७८ ॥

---

168-(b) My. विभुं for देवम्
176-(d) My. °न्वितेन for युतेन
178-(b) M My. °वेदयेत् for °नादयेत्
-(c) ABM शस्तं for भक्तम्

दद्यादाचमनीयं च मृजेत् पाण्योश्च चन्दनम् ।
निवेदयेच्च ताम्बूलं कर्पूरेण समन्वितम् ॥ १७९ ॥

सरत्नतिलमात्रं च ह्याचार्याय प्रदापयेत् ।
कर्मार्चायां यदुदितं क्रियाजातं द्विजोत्तम ॥ १८० ॥

तत्सर्वं ध्रुवबेरादौ विदधीत विचक्षणः ।
क्षमापयित्वा देवेशं भक्तिनम्रेण चेतसा ॥ १८१ ॥

परिवारांश्च गन्धाद्यैश्चतुर्भिः पूजयेद् द्विज ।
स्तोत्राणि विज्ञाप्य पुनर्मूलमन्त्रं जपेद् बुधः ॥ १८२ ॥

अष्टोत्तरशतं वापि तदर्धं वा तदर्धकम् ।
अर्घ्यपात्रकरः पश्चात् विनिर्गत्याग्निमण्डपम् ॥ १८३ ॥

तथा होमं विधायाथ गत्वा देवस्य संनिधौ ।
निवेद्य *तत्कर्म—न* (जातं ?) देवपादाम्बुजद्वये ॥ १८४ ॥

महोत्सवविधानेन परिवारबलिं चरेत् ।
देवभुक्तोज्झितैर्भोगैर्विष्वक्सेनं च पूजयेत् ॥ १८५ ॥

विज्ञाप्य देवदेवाय प्रणमेद्दण्डवत् क्षितौ ।
आदाय चावशिष्टानि पूजावस्तूनि कृत्स्नशः ॥ १८६ ॥

गृहं गत्वा च तैर्द्रव्यैर्हृदयाम्बुजसंस्थितम् ।
अर्चयित्वा जगन्नाथं कृतकृत्यः सदा भवेत् ॥ १८७ ॥

**इति पञ्चरात्रे महोपनिषदि विश्वामित्रसंहितायां**
**[नित्याराधनक्रमविधिर्नाम] दशमोऽध्यायः ॥**

---

179–(b) ABM मुख for मृजेत्

180–(a) A रथमुज्वल B रसन्नतिज्वल M रसन्नुज्वल for सरत्नतिल°

182–(cd) ABM. Om.

183 ABM. Om.

184 ABM. Om.

Colophon :–My. नित्याराधनक्रमो नाम for [नित्याराधनक्रमविधिर्नाम].

# एकादशोऽध्यायः

**काश्यपः—**

होमं कृत्वेति भगवान् भवता विहितं मम ।
तत्प्रकारो न संदिष्टः संक्षेपेणापि तं वद ॥ १ ॥

**विश्वामित्रः—**

प्रकारमग्निकार्यस्य शृणुष्वावहितो मुने ।
दीक्षाविधौ प्रोक्षणे च प्रतिष्ठोत्सवयोरपि ॥ २ ॥

प्रायश्चित्तेषु सर्वेषु स्नपनेषु विशेषतः ।
एवमादिषु चान्येषु सर्वेष्वपि च कर्मसु ॥ ३ ॥

सामान्येन वदाम्यद्य हवनं शृणु सुव्रत ।
पचनालयमासाद्य प्रक्षाल्य चरणावुभौ ॥ ४ ॥

आचान्तस्तस्य याम्यांशे कुण्डं कुर्यात् सलक्षणम् ।
एकहस्तसमायामं चतुरश्रं त्रिमेखलम् ॥ ५ ॥

ओष्ठनाभिसमायुक्तं विस्तारसदृशावटम् ।
मूर्धा तु पूर्वदिग्भागे त्वीशानाग्नेयकोणगौ ॥ ६ ॥

बाहू नैर्ऋतवायव्यकोणगं पदयोर्युगम् ।
जठरं कुण्डमध्यं स्याद्योनिर्योनिर्विधीयते ॥ ७ ॥

कुण्डपश्चिमदिक्संस्थमध्यास्यासनमुत्तमम् ।
सोत्तरीयः सोर्ध्वपुण्ड्रः प्राङ्मुखो होममाचरेत् ॥ ८ ॥

कुण्डं संमार्ज्य चालिप्य गोमयेन सहाम्भसा ।
कुशैः संमार्ज्य तैरेव प्रोक्षयेन्मूलविद्यया ॥ ९ ॥

केवले स्थण्डिले वापि हवनं विधिवच्चरेत् ।
आत्मनो दक्षिणे पार्श्वे विन्यसेत् पुष्पभाजनम् ॥ १० ॥

---

4-(b) M सर्वदा for सुव्रत.

होमद्रव्याणि चान्यानि वामपार्श्वे निधापयेत् ।
सकुशाः समिधः स्थालीं चरोः पात्रं घृतस्य च ॥ ११ ॥

स्रुक्स्रुवौ परिधींस्तोयमक्षतानि च मेक्षणम् ।
व्यजनानि च दर्वीं च शुष्ककाष्ठसमुच्चयम् ॥ १२ ॥

अग्नेर्विहरणं चैव गन्धद्रव्यं सचूर्णकम् ।
न्यस्य द्वन्द्वानि चैतानि प्रयुञ्ज्यात् सति संभवे ॥ १३ ॥

लिखेत् प्रागायतास्तिस्रो रेखाः कुण्डस्य मध्यमे ।
उदीच्यश्च तथा तिस्रो लिखित्वा मूलविद्यया ॥ १४ ॥

दर्भद्वयं तद्विसृज्य पाणिं प्रक्षाल्य चाम्भसा ।
मथितं लौकिकं वापि पावकं तत्र निक्षिपेत् ॥ १५ ॥

प्रणवेन विधृत्याग्निं समूह्य च परिस्तरेत् ।
त्रिभिस्त्रिभिर्दर्भखण्डैः प्रागुदङ्मूर्धभिस्ततः ॥ १६ ॥

द्रव्याग्निमध्ये विन्यस्य प्रणीतामक्षतार्चिताम् ।
अपां पूर्णां ततः कूर्चं दर्भाभ्यां प्रपिधाय च ॥ १७ ॥

प्रादेशमात्रनिर्मेयं छेदनं तस्य च त्रिभिः ।
दर्भैः पवित्रैस्तैरेव प्रणीताञ्जलिमर्पयेत् ॥ १८ ॥

प्रोक्षणीमात्मनश्चाग्रे सकूर्चां तां च निक्षिपेत् ।
कूर्चं तत् करयोर्धृत्वा साङ्गुष्ठानामिकाग्रतः ॥ १९ ॥

त्रिरुत्पूय च कूर्चेन पुनराधारसंयुतम् ।
होमद्रव्याणि सर्वाणि प्रोक्षयेत् तज्जलेन च ॥ २० ॥

स्पृशेच्च तानि द्रव्याणि स्वस्वनाम्नाभिधाय च ।
प्रदक्षिणं स्रावयेच्च प्रोक्षणीवारि सर्वतः ॥ २१ ॥

---

12–(a) M पचतीं° for परिधीं°
–(c) M द्रव्यं for दर्वीम्
16–(a) My. °हृत्या° for °धृत्या°
17–(c) My. सक्तुं च for कूर्चम्

प्रणीतामम्भसापूर्य देवं तत्र सभाजयेत् ।
अग्नेर्दक्षिणदिग्भागे दर्भैरास्तीर्य चासनम् ॥ २२ ॥

कूर्चे ब्रह्माणमावाह्य तदग्रे विनिवेद्य च ।
इष्ट्वा गन्धादिभिर्द्रव्यैर्विष्णुगायत्रिया पुनः ॥ २३ ॥

तण्डुलानाढकमितान् स्थाल्यां निक्षिप्य शोध्य च ।
अग्नावधिश्रित्य च तां पाचयेच्चरुमञ्जसा ॥ २४ ॥

गालितं द्रावितं त्वाज्यमाज्यस्थाल्यां निरुप्य च ।
मूलमन्त्रेण दर्भाग्रयुगं विन्यस्य तत्र च ॥ २५ ॥

उत्तरेणाग्निमङ्गारेष्वारोप्याथ सवह्निना ।
दर्भेण कृत्वा पर्यग्निं त्रीन् वारानवतार्य च ॥ २६ ॥

दर्भमग्नौ विनिक्षिप्य घृतं स्वपुरतो न्यसेत् ।
त्रिरुत्पूयाथ कूर्चं तमद्भिः स्पृष्ट्वा च पावके ॥ २७ ॥

प्रहरेदमृतीकुर्यादाज्यं सुरभिमुद्रया ।
सभाजयेदिन्द्रमुख्यान् दिक्पालान् क्रमशस्ततः ॥ २८ ॥

स्रुक्स्रुवावुष्णपयसा संक्षाल्य कुशकूर्चकम् ।
तेन तौ स्रुक्स्रुवौ मूले मध्ये मूर्ध्नि च संमृजेत् ॥ २९ ॥

कूर्चस्य मूलमध्याग्रैः क्रमेण मुनिपुंगव ।
अग्नौ निष्टप्य चोदीच्यामात्मनस्तौ निधाय च ॥ ३० ॥

घृतं स्रुवेण चादाय सेचयेद्धोमवस्तुषु ।
संसिच्य चरुमाज्येन पात्रे चाप्यवरोप्य तम् ॥ ३१ ॥

पायसान्नं गुडान्नं च मौद्गं केवलमेव च ।
चरुं चतुर्विधं कुर्यात् चुल्यां वापि पचेच्चरुम् ॥ ३२ ॥

---

31–(c) A °सृज्य for °सिच्य
ABM सर्वं for चरु
–(d) ABM च for तम्

बिम्बे निवेद्यते यद्यत् तत्सर्वं जुहुयादपि ।
प्रत्यगारभ्य परिधीन् उदक्संस्थान् निधापयेत् ॥ ३३ ॥

परिषिच्याथ परितः शिखीशानदिशि न्यसेत् ।
समिधं पुनरप्येकां प्रणीतोपरि विन्यसेत् ॥ ३४ ॥

निधाय मनसा ध्यायन् साक्षाल्लक्ष्मीपतिं प्रभुम् ।
आज्याक्तानेकसंस्थाग्रान् जुहुयात् सकृदेव च ॥ ३५ ॥

कुशकूर्चास्तृते वामे पाणावाज्यं निधाय च ।
प्राजापत्यमथैन्द्रं चाप्याघाराहुतिमाचरेत् ॥ ३६ ॥

आज्यभागं च जुहुयादाग्नेय्यां दक्षिणार्धके ।
सौम्यमुत्तरभागे च मध्ये व्याहृतिभिर्हुनेत् ॥ ३७ ॥

होमकाले स्मरेदग्निं सप्तहस्तं द्विशीर्षकम् ।
पादत्रयेण संयुक्तं जिह्वासप्तकसंयुतम् ॥ ३८ ॥

वरदं शक्तिहस्तं च दधानं स्रुक्स्रुवावपि ।
अभीतिदं चर्मधरं वामे चाज्यधरं करे ॥ ३९ ॥

काल्याख्या*यां तु* (यास्तु ?)जिह्वा*यां* (या ?)मध्यमं स्थानमुच्यते ।
कृष्णवर्णा च सा ज्ञेया कराली रक्तवर्णिका ॥ ४० ॥

तत्स्थानं पूर्वदिग्भागे पीतवर्णा मनोजवा ।
सा दक्षिणदिशि ज्ञेया लोहिता वह्निवर्णिका ॥ ४१ ॥

---

34–(c) ABM °धौ for °धम्

37–(a) AB My. भागौ for भागम्
 –(b) My. °णोर्ध्वके for °णार्धके

38–(c) My. त्रयसमायुक्तं for त्रयेण संयुक्तम्

39–(c) A साहुतिं चरुहस्तं च
 B चरु for चर्म
 M. साभूतिं चारुहस्तं च

41–(d) My. ह्यग्नि for वह्नि

सा स्यात् पश्चिमदिक्संस्था धूम्रा चान्वर्थनामिका ।
सोमदिक्संस्थिता सा स्यात् श्वेतवर्णा स्फुलिङ्गिनी ॥ ४२ ॥

वह्निकोणगता सा स्यात् विश्वरूपाथ सप्तमी ।
बिम्बीफलरुचिः सा स्यादीशाननिलया च सा ॥ ४३ ॥

काल्यां शान्तिकहोमः स्यात् कराल्यां विजयो भवेत् ।
मनोजवा पुष्टिकरी लोहितायां वशीकृतिः ॥ ४४ ॥

धूम्रायां मारणं कुर्यात् स्फुलिङ्गिन्यां समृद्धयः ।
विश्वरूपाह्वयायां स्यादणिमादिमहाफलम् ॥ ४५ ॥

तिलानाघारसंमिश्रान् जुहुयाज्जलशान्तये ।
द्विषडर्णेन मन्त्रेण हुनेदष्टशताहुतीः ॥ ४६ ॥

पूर्णाहुत्यवसाने तु वैष्णवाग्निं प्रकल्पयेत् ।
गर्भाधानादि कर्तव्यमग्नेः कर्म च वैदिकम् ॥ ४७ ॥

कुण्डे लक्ष्मीमृतुस्नातां सर्वाभरणभूषिताम् ।
देवं नारायणमपि ध्यात्वा सर्वाङ्गसुन्दरम् ॥ ४८ ॥

प्रथमेन तु बीजेन गर्भाधानं विधाय च ।
द्वितीयेन तु बीजेन कुर्यात् पुंसवनं ततः ॥ ४९ ॥

सीमन्तोन्नयनं कुर्यात् तृतीयेनैव साधकः ।
जातकर्म चतुर्थेन नामकर्म परेण तु ॥ ५० ॥

षष्ठेनान्नाशनं चौलं सप्तमेनोपनायनम् ।
अष्टमेन विधातव्यमष्टाक्षरमनोरयम् ॥ ५१ ॥

विधिः क्रमाद्विधातव्यो द्विषडर्णविधिं शृणु ।
चतुर्भिर्नवमाद्यैस्तु बीजैः कुर्याद्यथाविधि ॥ ५२ ॥

प्राजापत्यं च सौम्यं च तथाग्नेयमनन्तरम् ।
वैश्वदेवक्रमे तानि चत्वारि च यथाक्रमम् ॥ ५३ ॥

---

52-(cd) My. Om.
53 My. Om.

वृतिबीजं च जुहुयाद् द्वादशाक्षरविद्यया ।
साङ्गेन सकलेनाथ मन्त्रेणाष्टोत्तरं शतम् ॥ ५४ ॥

हुत्वा गन्धादिभिर्द्रव्यैः सकलैरग्निमर्चयेत् ।
तन्मध्ये देवदेवस्य योगपीठं प्रकल्पयेत् ॥ ५५ ॥

सकृत्सकृच्च तन्मन्त्रैर्गव्येनाज्येन वै हुनेत् ।
तन्मध्ये हृदयाम्भोजादवतार्य श्रियः पतिम् ॥ ५६ ॥

मन्त्रन्यासादि सकलं यथाविधि विधाय च ।
अर्घ्यादीनां षोडशानां भोगानां षोडशाहुतीः ॥ ५७ ॥

क्रमेण परिवाराणामेवं हुत्वा सकृत् सकृत् ।
एवं कुर्याद्भगवतः सप्तार्चिषि सभाजनम् ॥ ५८ ॥

अनन्तरं च बिम्बादावाराधनविधिर्यदि ।
वक्ष्यमाणेन जुहुयात् पालाशैः समिधादिकैः ॥ ५९ ॥

समिधस्तालमानाः स्युः कनिष्ठानहना अपि ।
स्थूलोद्वेगकरी ह्रस्वा वृष्ट्यभावाय वै समित् ॥ ६० ॥

अतिवृष्टिकरी दीर्घा चर्महीनार्थनाशकृत् ।
भिन्ना कुलक्षयकरी क्षता भार्याविनाशनी ॥ ६१ ॥

क्षोभकृच्च सशाखा स्यात् पुराणा पुत्रनाशनी ।
बन्धुनाशकरी चार्द्रा सजन्तुः सर्वनाशकृत् ॥ ६२ ॥

निर्दोषाश्च घृताक्ताश्च होतव्याः समिधो मुने ।
चरुं सद्घृतसंमिश्रं ग्रासमुद्राप्रमाणतः ॥ ६३ ॥

---

54–(ab) My. Om.

55–(d) BM यज्ञ for योग

56–(ab) My. Om.

58–(b) ABM. कृत्वा for हुत्वा

60–(d) M. पुष्ट्य° for वृष्ट्य°

आज्यं स्रुवेण जुहुयात् करेण समिधो हुनेत् ।
पलाशपर्णेन चरुं केवलेन करेण वा ॥ ६४ ॥

अखण्डितानि पुष्पाणि फलान्यपि हुनेद् द्विज ।
धान्यानां च तिलानां च तण्डुलानां च काश्यप ॥ ६५ ॥

प्रमाणमङ्गुल्यग्रैस्तु यावत् सूद्धारमञ्जसा ।
तावत्प्रमाणं जुहुयाद् घृतेनाभ्यज्य मन्त्रवित् ॥ ६६ ॥

एवं यथोक्तविधिना हुत्वाथो देशिकोत्तमः ।
पञ्चोपनिषदा कुर्यात् प्रायश्चित्तं घृतेन तु ॥ ६७ ॥

सदर्भसमिधं चैव स्रुचमाज्याभिपूरितम् (ताम् ?) ।
स्रुवेण पिहितां तावन्नासिकाग्रान्तमुद्धरेत् ॥ ६८ ॥

मूलमन्त्रेण जुहुयात् पूर्णाहुतिरियं भवेत् ।
दर्भान् सर्वान् समादाय विनियुक्तान् यथाक्रमम् ॥ ६९ ॥

*अद्यप्रभृति(?)सकलं* दग्ध्वा निरवशेषतः ।
अनुयाजं तथाघारसमिधौ परिधीनपि ॥ ७० ॥

ऊर्ध्वं हुत्वा प्रणीतां तु स्थापयेदात्मनः पुनः(रः?) ।
प्रोक्षणीजलमादाय प्रणीतामवसिच्य च ॥ ७१ ॥

पूर्वादि सोमपर्यन्तं जलं संसेचयेत् क्षितौ ।
पश्चिमेन तु निक्षिप्य तनुं संप्रोक्ष्य चात्मनः ॥ ७२ ॥

ब्रह्माणमपि चोद्वास्य परिषेकं विधाय च ।
अग्निमध्यगतं देवं स्वहृदब्जे समर्प्य च ॥ ७३ ॥

---

66-(b) ABM स्याद्धार्य° for सूद्धार°
70-(a) AB. प्रभूति for प्रभृति
-(c) M. आप्रयाजान् for अनुयाजम्
-(cd) My. Om.
71 My. OM.
72-(ab) My, Om.
73-(d) ABM हृन्मध्ये for हृदब्जे

स्रुवं (चं?) जलेन संपूर्य बहिः कुण्डात्प्रदक्षिणम् ।
सेचयित्वाथ शेषेण प्रोक्ष्य चात्मानमेव च ॥ ७४ ॥

भस्मना तिलकं कृत्वा गृहीतार्घ्यः प्रविश्य च ।
धाम्नि देवस्य पादाब्जे हवनं तत् समर्प्य च ॥ ७५ ॥

यथाशक्ति मया देव यदग्नौकरणं तव ।
आराधनं तद्यथावद्गृहाण परमेश्वर ॥ ७६ ॥

इति विज्ञाप्य देवेशं दण्डवत्तं तं प्रणम्य च ।
कृतकृत्यो भवेदुक्तमग्निकार्यं मया तव ॥ ७७ ॥

इति पञ्चरात्रे महोपनिषदि विश्वामित्रसंहितायाम्
[अग्निकार्यविधिर्नाम] एकादशोऽध्यायः ॥

## द्वादशोऽध्यायः ॥

विश्वामित्रः—

नित्योत्सवविधिं ब्रह्मन् प्रवक्ष्यामि शृणुष्व(?)तम् ।
उत्सवं(वः?) त्रिविधं (धः?) प्रोक्तं (क्तः?) तन्त्रेऽस्मिन् ब्रह्मणा पुरा ॥१॥

पात्रस्थे तण्डुले प्रातरावाह्य परमेश्वरम् ।
परिक्रमेद् द्वादशभिः शक्तिभिः सहितो मुने ॥ २ ॥

अह्नो(न्ने?)मध्याह्नसमये सायं कुसुमसंचये ।
अथवा त्रिषु कालेषु बल्यर्थं चारयेद् द्विज ॥ ३ ॥

बलिप्रदानस्य कृते सर्वेष्वावरणेष्वपि ।
ध्रुवादावाह्य देवेशं बलिबिम्बे निवेश्य च ॥ ४ ॥

---

74-(b) My कुंडान् for कुण्डात्

76-(b) My. विहितं for करणम्

77-(cd.) M. Adds कृतकृत्यो भवेदुक्तं भगवन्तं प्रणम्य च after 77-ab and before 77-cd.

अर्चयेदर्घ्यपूर्वाभिः सपर्याभिर्द्विजोत्तम ।
ततः शुचिं द्विजवरं श्वेतवस्त्रोपधारिणम् ॥ ५ ॥

सोत्तरीयं च सोष्णीषं धृतद्वादशपुण्ड्रकम् ।
वैष्णवं सुमुखं दान्तं युवानं जपतत्परम् ॥ ६ ॥

गरुत्मन्तं भावयित्वा *तन्मूर्ध्नि विनिवेशयेत्* (बलिं तन्मूर्ध्नि विन्यसेत् ?) ।
शङ्खकाहलनादाढ्यं तूर्यघोषपुरःसरम् ॥ ७ ॥

अन्येन स्वर्णभृङ्गारं धारयेद्घण्टया सह ।
अपरो धारयेत् पात्रं बलिद्रव्येण संयुतम् ॥ ८ ॥

गर्भगेहद्वारपार्श्वमासाद्याथ उदुम्बरे ।
दक्षिणे वास्तुनाथस्तु द्विभुजो रक्तपात्रधृक् ॥ ९ ॥

श्वेतवस्त्रधरो हस्ते दक्षिणे सुरसंश्रयः ।
गदोद्यतकरो वास्तुनाथो ध्येयो द्विजोत्तम ॥ १० ॥

क्षेत्रनाथं दण्डहस्तं नीलजीमूतसंनिभम् ।
समुष्टिकं वामहस्तं दधानं वामपार्श्वगम् ॥ ११ ॥

वीक्षमाणं विभोर्वक्त्रं ध्यात्वा द्वौ पूजयेद् द्विज ।
ऊर्ध्वोदुम्बरमध्यस्थां सर्वाभरणभूषिताम् ॥ १२ ॥

तप्तकार्तस्वरनिभां विद्रुमप्रतिमाम्बराम् ।
पद्मकुम्भकरां पद्मसंस्थां द्वारश्रियं यजेत् ॥ १३ ॥

बाह्ये गर्भगृहद्वारशाखामूले तु दक्षिणे ।
बद्धोष्णीषं सोर्ध्वपुण्ड्रं शुक्लाम्बरधरं द्विज ॥ १४ ॥

हारकेयूरकटककुण्डलादिविभूषितम् ।
तरुणादित्यवर्णाभं चतुर्बाहुं च दक्षिणे ॥ १५ ॥

भुज(हस्त ?)द्वये चक्रधरमूर्ध्वहस्ते(?)गदामपि ।
श्रोणीतटनिषण्णां च विश्रान्ताग्रां भुवस्तले ॥ १६ ॥

---

9-(d) My. नूत्न for रक्त
11-(c) M. Adds समुष्टिकं वामहस्तं नीलजीमूतसंनिभम् before it.

ज्वलन्तं दधतं वामे शङ्खमूर्ध्वेऽक्षसूत्रकम् ।
अधश्च चण्डं ध्यात्वैवं पूजयेद् द्विजसत्तम ॥ १७ ॥

व्यत्यस्तभुजयुग्मं च प्रचण्डमपि पूजयेत् ।
गरुडं काञ्चननिभं कुटिलभ्रूयुगोज्ज्वलम् ॥ १८ ॥

लम्बोदरं च वृत्ताक्षं सर्वाभरणभूषितम् ।
नीलाम्बरं पक्षयुग्ममण्डलेन विराजितम् ॥ १९ ॥

कृताञ्जलिं देवदेवसुमुखं(संमुखे ?) सम्यगर्चयेत् ।
अथाग्रमण्डपद्वारशाखाद्वयसुसंस्थितौ ॥ २० ॥

पद्मगर्भनिभौ चण्डप्रचण्डसदृशौ भुजे ।
रक्ताम्बरादिसहितौ पूजयेद् गणनायकौ ॥ २१ ॥

उभौ धातृविधातारौ प्रथमावरणे तथा ।
कुमुदं पूर्वदिग्भागे नानावस्त्रादिभूषितम् ॥ २२ ॥

चतुर्भुजं दक्षिणकरद्वन्द्वे श्वेतं च चामरम् ।
मुद्रामभयसंज्ञां च सव्ये हारस्रजं तथा ॥ २३ ॥

तूष्णीं *मानस*संज्ञां च दधानं च सभाजयेत् ।
कुमुदाक्षं वह्निकोणे व्यत्यस्तभुजयुग्मकम् ॥ २४ ॥

दक्षिणे पुण्डरीकं च वह्न्याभं गरुडध्वजम् ।
दधानं नैर्ऋते चैव वामनं तद्वदर्चयेत् ॥ २५ ॥

पश्चिमे शङ्कुकर्णं च पद्मरागशरीरकम् ।
मायूरपिञ्छव्यजनधारिणं वायुकोणगम् ॥ २६ ॥

---

23–(a) My. दक्षिणाङ्कं for दक्षिणकर
–(b) My. द्वे द्वे for द्वन्द्वे

24–(a) A तूष्णीममान° for तूष्णीं *मानस°*

25–(b) M. वर्ण° for वह्न्या°

सर्पनेत्रं च विधिवदर्चयेद् द्विजपुंगव ।
सोमे सुमुखसंज्ञं च श्यामं छत्रधरं भजेत् ॥ २७ ॥

सुप्रतिष्ठं तथेशाने ध्यात्वैवं च सभाजयेत् ।
अनुक्तं शेषमेतेषां कुमुदस्येव काश्यप ॥ २८ ॥

ऊर्ध्वपुण्ड्रेण सर्वेऽपि ललाटस्थेन शोभिताः ।
तद्बाह्यद्वारपार्श्वस्थं जयं सविजयं यजेत् ॥ २९ ॥

चण्डप्रचण्डसदृशावुभावेतौ चतुर्भुजौ ।
पीतमाल्याम्बरधरौ *पीतोष्णीषशिरौ* (धरौ?) मुने ॥ ३० ॥

पश्चादुपेन्द्रं प्राग्भागे वह्निकोणे च सत्तम ।
तेजोधरं दक्षिणे च दुरतिक्रमसंज्ञितम् ॥ ३१ ॥

नैर्ऋते पश्चिमे चैव महाकर्ममहाह्रदौ ।
अगृह्यं वायुकोणे च वसुरेतसमुत्तरे ॥ ३२ ॥

वर्धमानं तथेशाने साक्षिणं गगनोपरि ।
अधोभागे च सर्वस्य आधारनिलयं क्रमात् ॥ ३३ ॥

एतान् स्फटिकवर्णाभान् वराभयकरान् यजेत् ।
अथवाक्षस्रजं चक्रं शङ्खं च गदया सह ॥ ३४ ॥

करैश्चतुर्भिर्दधतो मकुटादिविभूषितान् ।
ततस्तृतीयावरणद्वारपार्श्वस्थितावुभौ ॥ ३५ ॥

यजेद्भद्रं सुभद्रं च यथा चण्डप्रचण्डकौ ।
इन्द्रं यजेत तदनु श्यामवर्णं चतुर्भुजम् ॥ ३६ ॥

सितद्विपस्थं कुलिशं बिभ्रतं तीक्ष्णधारकम् ।
*अजारुसं* (अजारूढं ?) रक्तवर्णं हुताशं शक्तिहस्तकम् ॥ ३७ ॥

---

27–(a) A. सर्व° for सर्प°
–(d) M हरेः for भजेत्
32–(c) My °ग्राह्यं for °गृह्यं
36–(d) M पूर्वे श्यामं for श्यामवर्णम्
37–(c) ABM आरूढं रक्तवर्णभम्

यमं महिषसंस्थं तु कृष्णं दण्डकरं यजेत् ।
प्रेतासनं खड्गधरं निर्ऋतिं चासितद्युतिम् ॥ ३८ ॥

वरुणं मकरारूढं मुक्ताभं पाशधारिणम् ।
वायुं हरिणमारूढं कृष्णध्वजपदाङ्कितम् ॥ ३९ ॥

शशिनं शशकारूढं श्वेतं शिशिरपर्वतम् ।
वृषारूढं प्रवालाभं शूलिनं त्र्यम्बकं यजेत् ॥ ४० ॥

कूर्मारूढं हलधरमधस्तान्नागराजकम् ।
ब्रह्माणं हंससंस्थं च चतुर्वक्त्रं स्मरन् यजेत् ॥ ४१ ॥

चतुर्भुजाः सर्व एते साक्षमालाः परं विभुम् ।
ध्यायन्त इति संस्मृत्य वराभयकरान् यजेत् ॥ ४२ ॥

अमरेशविरूपाक्षौ तथा गोपुरपार्श्वगौ ।
इष्ट्वा चतुर्थावरणे चक्राद्यायुधसंहतिम् ॥ ४३ ॥

वज्रं शक्तिं च दण्डं च खड्गं पाशं ध्वजं तथा ।
शिशिरास्त्रं त्रिशूलं च क्रमेणैतानि पूजयेत् ॥ ४४ ॥

महागोपुरपार्श्वस्थौ शङ्खपद्मनिधी उभौ ।
शङ्खपद्मसमानाभौ शुक्लमाल्याम्बरावृतौ ॥ ४५ ॥

निधिभाण्डसमारूढौ ह्रस्वपाणिपदौ यजेत् ।
शङ्खपद्मधरावेतौ निधिहस्तावथापि वा ॥ ४६ ॥

इष्ट्वा भगवतो हेतीरष्टदिक्ष्वभिपूजयेत् ।
शङ्खं समुसलं चैव चक्रं नन्दकमेव च ॥ ४७ ॥

---

39–(d) My. धूम्राभं शिशिरास्त्रणम् (?) ।

40–(ab) My. Om.

(c) ABM. दधानं वृषभारूढम्

47–(ab) ABM हेतिमष्टदिक्षु च काश्यप ।

–(d) My. चेद्दण्ड° for नन्दक°

गदां शार्ङ्गं च पद्मं च वनमालां क्रमाद्यजेत् ।
देवमारोप्य शिबिकां बलिदानाय नाथयेत् ॥ ४८ ॥

बलिप्रदानसमये तत्तद्रागांश्च गायकैः ।
गापयित्वा नर्तकीभिस्तत्तन्नृत्तं च दर्शयेत् ॥ ४९ ॥

शङ्खकाहलभेरीभिस्तूर्यघोषेण सर्वतः ।
बधिरीकृत्य ककुभो बलिदानविधिं चरेत् ॥ ५० ॥

ध्वजैश्छत्रैश्च विविधैस्तालवृन्तगणैरपि ।
चामरैर्धार्यमाणैश्च संछादितदिगन्तरम् ॥ ५१ ॥

कन्यकाभिर्विचित्राभिर्भूषिताभिश्च सर्वतः ।
वसानाभिश्च वासांसि पट्टांशुकमयान्यपि ॥ ५२ ॥

गन्धर्वराजसंकाशैर्गायकानां गणैरपि ।
पुरतः पृष्ठतश्चैव सेव्यमानो द्विजोत्तमैः ॥ ५३ ॥

पठद्भिश्चतुरो वेदान् संघशः सेवितः पृथक् ।
स्थाने स्थाने तु ताम्बूलं भक्ष्याणि विविधानि च ॥ ५४ ॥

फलानि च सुपक्वानि सापूपानि निवेद्य च ।
वेदविद्भ्यो गायकेभ्यो नर्तकीभ्यः प्रसाद्य च ॥ ५५ ॥

एवं सर्वत्र संचार्य गोपुरद्वारनिर्गमे ।
निवार्य तूर्यघोषादि शङ्खमेव निनादयेत् ॥ ५६ ॥

निर्गत्य च महापीठसमीपे धामसंमुखः ।
वाद्यवादिविशेषेण घोषयित्वा समन्ततः ॥ ५७ ॥

संक्षाल्य पीठमूर्धानं शुचिना गन्धवारिणा ।
आराधयित्वा तत्रापि विष्णुपारिषदेश्वरान् ॥ ५८ ॥

क्षिप्त्वा च पीठशिरसि बलिशेषमशेषयेत् ।
गायकैर्गापयित्वा च रागान् बहुविधानपि ॥ ५९ ॥

---

50–(a) AB My. वंशी for भेरी

उपनृत्य समन्ताच्च नर्तकीभिः प्रदक्षिणम् ।
परीत्य वारत्रितयं धामान्तः प्रविशेत् पुनः ॥ ६० ॥

मुखमण्डपमासाद्य शिबिकामवरोप्य च ।
दत्वा च पादुके देवमासने चोपवेश्य तम् ॥ ६१ ॥

अर्घ्यादिभिश्च सकलैर्भोगैराराधयेत् पुनः ।
उपहारान् बहुविधान् निवेद्यावसरोचितम् ॥ ६२ ॥

धामान्तर्देवदेवं तं शाकुनं सूक्तमुच्चरन् ।
प्रवेश्य च यथापूर्वमासने विनिवेश्य च ॥ ६३ ॥

अर्घ्यादि संप्रदायाथ बहिर्देवस्य संमुखम् (खे?) ।
गेयं नृत्तं बहुविधं दर्शयेत् पूजकोत्तमः ॥ ६४ ॥

अतिवृष्टिमहावातप्रभृतिक्षोभसंभवे ।
नित्योत्सवो न कर्तव्यो बलिमात्रं प्रदापयेत् ॥ ६५ ॥

चण्डप्रचण्डयोर्वापि केवलं निक्षिपेद्बलिम् ।
तयोर्द्वयोर्वा पुरतो मूलमन्त्रपुरस्सरम् ॥ ६६ ॥

नमो भूतेभ्य इत्युक्त्वा सोदकं प्रक्षिपेद्बलिम् ।
बलिप्रदानकाले च संज्ञाभिः स्वाभिरेव च ॥ ६७ ॥

चतुर्थ्यन्तनमोऽन्ताभिः प्रणवाद्याभिरुत्सृजेत् ।
स्वस्वमुद्रां प्रदर्श्यैव नान्यथा विहितो विधिः ॥ ६८ ॥

इति पञ्चरात्रे महोपनिषदि विश्वामित्रसंहितायां
नित्योत्सवविधिर्नाम द्वादशोऽध्यायः ॥

---

62-(d) ABM. Om.

63 ABM. Om.

64-(abc) ABM. Om.

# त्रयोदशोऽध्यायः

काश्यपः—

भगवन् मन्त्रमुद्राणां प्रभेदं *विनिबोध मे* (विनियोजनम्?) ।
वक्तुमर्हसि सर्वज्ञ दया चेन्मयि वर्तते ॥ १ ॥

विश्वामित्रः—

अङ्गुलीनां समावेशभेदो मुद्रेति कथ्यते ।
मुदं द्रावयते यस्माद् दुष्टानां दर्शनात् क्षणात् ॥ २ ॥

ततो मुद्रेति कथिता मन्त्रतन्त्रविशारदैः ।
हिंसकानां निरसनं देवानां प्रीणनं भवेत् ॥ ३ ॥

कर्मादौ दर्शनादासां तस्मादेताः प्रदर्शयेत् ।
मन्त्रजातस्य संख्यानं यथागुप्तं विधीयते ॥ ४ ॥

तथैव मुद्रां रहसि दर्शयेन्न जनाग्रतः ।
करावुभौ च संक्षाल्य पञ्चगव्यैर्विशोध्य च ॥ ५ ॥

विलिप्य च शुभैर्गन्धैर्मुद्रां पश्चात् प्रदर्शयेत् ।
मध्यमानामिकाङ्गुल्योर्मध्येऽङ्गुष्ठं समायतम् ॥ ६ ॥

प्रवेश्य हृदये मुष्टिं विधाय स्थापयेच्च ताम् ।
हृन्मुद्रैषा विधातव्या मन्त्राङ्गन्यासकर्मणि ॥ ७ ॥

अधोमुखीं विधायैनां मस्तके विनिवेश्य च ।
हन्यादङ्गुष्ठशिरसा तर्जनीं शीर्षमुद्रिका ॥ ८ ॥

मुष्टिं कृत्वोर्ध्वगाङ्गुष्ठामङ्गुष्ठाग्रं शिखोपरि ।
स्पर्शयेदियमाख्याता शिखामुद्रेति सूरिभिः ॥ ९ ॥

अङ्गुष्ठमुद्धृतं कृत्वा बध्वा मुष्टिं समुन्नताम् ।
प्रदेशिनीं किंचिदग्रं नतां मुष्ट्यानया पुनः ॥ १० ॥

वर्मबन्धं हृदा ध्यायेन्मुद्रैषा कवचात्मिका ।
अङ्गुष्ठं तर्जनी *पङ्क्ति(?)तिसृभिर्मुष्टिबन्धनम्* ॥ ११ ॥



हृन्मुद्रा
१३.६, ७



शिखामुद्रा
१३.९



चक्षुर्मुद्रा
१३.१३

विधाय तर्जन्यङ्गुष्ठे मूर्ध्ना (र्ध्नो ?) मण्डलवद्बहिः ।
स्फोटयेद्दिक्षु सर्वासु सैषा मुद्रास्त्रसंज्ञिता ॥ १२ ॥

अधोमुखीं शिखामुद्रां भ्रुवोर्मध्ये निवेशयेत् ।
चक्षुर्मुद्रेयमुद्दिष्टा कुर्यादङ्गेष्विमाः क्रमात् ॥ १३ ॥

दक्षिणेन करेणैता विदध्यात् क्रमशो मुने ।
तर्जनीमुन्नतां कृत्वा तिसृणां मध्यसंगतम् ॥ १४ ॥

विधायाङ्गुष्ठमेतेन स्वदेहं भ्रामयेद्बहिः ।
प्रदक्षिणं समाख्याता साग्निप्राकारमुद्रिका ॥ १५ ॥

स्वदेहरक्षणं कुर्यादनया मुद्रया बुधः ।
कृत्वा सव्यकरं नाभेरधस्तात् प्रसृतं पुनः ॥ १६ ॥

उत्तानीकृत्य विन्यस्येत् तस्योपरि च दक्षिणम् ।
योगमुद्रेति विख्याता सव्यं करतलं पुनः ॥ १७ ॥

नाभेरधोर्ध्वविधिभिरन्तरं च करं पुनः ।
समाङ्गुष्ठं तदुपरि स्थापयेद्द्विजपुंगव ॥ १८ ॥

योगसंपुटमुद्रा स्यादियं मुद्रायुगं त्विदम् ।
योगिनां तत्त्वसंहारे समुत्पादनकर्मणि ॥ १९ ॥

योगाभ्यासविधौ शस्तं कुर्यात्तत्रैव कर्मणि ।
कुम्भमुद्रेति कथिता योगसंपुटमुद्रिका ॥ २० ॥

छिद्रिता घटसंस्थाना तथैवोर्ध्वमुखस्थिता ।
तया समाचरेत् स्नानं तर्जन्यानामिकाशिरः ॥ २१ ॥

संवेश्य क्रमशः कुर्यात् तथाङ्गुष्ठकनिष्ठिके ।
इयं संहारमुद्रा स्यात् तत्त्वसंहृतिकर्मणि ॥ २२ ॥

---

14–(d) ABM संज्ञितम् for संगतम्
15–(a) M. पिधाया° for विधाया°
19–(c) ABM योगा° for योगि°
–(d) ABM °त्पादन for °त्पादन

उद्वासने देवतानामेतां मुद्रां प्रदर्शयेत् ।
अङ्गुलीभिश्चतसृभिः संहृताभिश्च संहृतिः ॥ २३ ॥

तर्जन्यां तु विमुक्तायां सृष्टिमुद्रेति तां विदुः ।
आवाहने देवतानां तत्त्वसृष्टौ च सा मता ॥ २४ ॥

ज्ञानमुद्रा समाख्याता तर्जन्यङ्गुष्ठसंहतिः ।
तत्त्वमुद्रेति च विदुरिमां पूर्वे तु सूरयः ॥ २५ ॥

*उत्तानयोर्ध्व(?)गतयो*र्हस्तयोरुभयोरपि ।
मध्यमाभ्यां स्पृशेन्मध्यमेषा सा न्यासमुद्रिका ॥ २६ ॥

मन्त्रन्यासे तु मुद्रेयं ख्याता देवात्मिका ययोः ।
जपमुद्रां शृणु ब्रह्मन् अङ्गुष्ठाभ्यां करद्वये ॥ २७ ॥

तर्जन्योः संस्पृशेन्मध्यं विस्तृताः स्युस्तथेतराः ।
जपकालेषु सर्वेषु जपमुद्रां प्रदर्शयेत् ॥ २८ ॥

करद्वये समस्ताभिरङ्गुलीभिर्द्विजोत्तम ।
सेयं पुटाकृतिः प्रोक्ता मुद्रा ब्राह्मी द्विजोत्तमैः ॥ २९ ॥

करद्वयेऽङ्गुष्ठयुगं कनिष्ठातर्जनीयुगम् ।
संयोज्य श्लेषयेदग्रं विष्णुमुद्रामिमां विदुः ॥ ३० ॥

रुद्रमुद्रेति कथिताप्यङ्गुष्ठान्योऽन्यसंयुता ।
उभयाङ्गुष्ठमुद्रा सा कथिता तव सुव्रत ॥ ३१ ॥

करद्वयाभ्यां(येन ?) श्रवसी पिधायैकं प्रसारयेत् ।
दक्षिणं सा भवेन्मुद्रा पितॄणामभिवादने ॥ ३२ ॥

विन्यस्य वामश्रवणे वामहस्ताङ्गुलीस्तथा ।
प्रसारयेत् करं चान्यं विघ्नराजस्य मुद्रिका ॥ ३३ ॥

---

26–(c) My मध्ये for मध्यम्
–(d) My. सैषा संन्यास for एषा सा न्यास



आवाहनमुद्रा

१३.४१, २



प्रणाममुद्रा (उपक्रमदशा)

१३.४३



प्रणाममुद्रा (उपसंहारदशा)

१३.४३

अङ्गुष्ठयुगलं मध्ये तर्जन्योः संहरेद् द्वयोः ।
एषा भागवती मुद्रा कथिता द्विजपुंगव ॥ ३४ ॥

वाराहमुद्रा कथिता करयोः संपुटे कृते ।
स्पृष्ट्वा (स्मृत्वा ?) तु दक्षिणकरे रक्तं सरसिजं पुनः ॥ ३५ ॥

त्रिकोणं मध्यतस्तस्य बीजमग्नेः समुज्ज्वलम् ।
अवाचितं निधायैतं निक्षिपेद् द्रव्यमूर्धनि ॥ ३६ ॥

अग्नेरेषा भवेन्मुद्रा सर्वद्रव्यविशोधिनी ।
करे वामे सितं पद्मं स्मृत्वा षोडशपङ्कजम् ॥ ३७ ॥

तन्मध्ये शशिनं ध्यायेत् कलाषोडशकान्वितम् ।
तस्मात् स्रवन्तममृतं स्मृत्वा *तद्रस सेचयेत् *(?) ॥ ३८ ॥

पुनस्तदुत्थितं ध्यायेन्मुद्रैषाप्यायनी स्मृता ।
*अङ्गुष्ठतर्जनीयुग्मे कनिष्ठायुगलं तथा* ॥ ३९ ॥

श्लिष्टं प्रसार्य संहृत्य मध्यमं दक्षिणे करे ।
अनामिकां चेतरस्मिन् शेषं चैव प्रसारयेत् ॥ ४० ॥

मुद्रैषा सौरभेयी स्याच्छोधनी सर्ववस्तुनः ।
अञ्जलिं करयुग्मेन विधायेषद्विकासयेत् ॥ ४१ ॥

मुद्रैषावाहनकरी दृष्ट्वैतां देवतागणः ।
संनिधिं याति विप्रेन्द्र तस्मादेतां प्रदर्शयेत् ॥ ४२ ॥

विकाससहिता सैषा हृदये शिरसि स्थिता ।
ख्याता प्रणाममुद्रेति क्षिप्रं देवप्रसादिनी ॥ ४३ ॥

वासुदेवादिमूर्तीनां विष्णवादीनां च काश्यप ।
सत्यादीनां तथा मीनप्रभृतीनां च सत्तम ॥ ४४ ॥

प्रसादनकरी मुद्रा सर्वेषामियमेव हि ।
मणिबन्धौ संगमय्य संप्रसार्य तथाङ्गुलीः ॥ ४५ ॥

---

38-(b) ABM लाञ्छितम् for °कान्वितम्

मध्ये तु कुञ्चितं कृत्वा तथा चाङ्गुष्ठयुग्मकम् ।
पातयित्वा ततः पृष्ठं स्पर्शयित्वा प्रसारयेत् ॥ ४६ ॥

पद्ममुद्रा भवेदेषा लक्ष्म्यादीन् संनिधापयेत् ।
सव्यहस्तस्य *मुष्टिस्तम*(मुष्टौ तु अ?)ङ्गुष्ठमितरस्य च ॥ ४७ ॥

निधायाङ्गुष्ठतर्जन्योः(न्यौ?) संयोज्य प्रसृते समे ।
अपसव्यस्य तिसृभिरन्याभिर्मुष्टिबन्धनात् (नम्?) ॥ ४८ ॥

कारयेच्छङ्खमुद्रैषा ज्ञानमोक्षप्रदायिनी ।
तिर्यक् करद्वयं कृत्वा मणिबन्धावसानकम् ॥ ४९ ॥

अन्योन्यं स्यादभिमुखं मण्डलीकृत्य काश्यप ।
भ्रामयेचक्रमुद्रैषा सर्वदुष्टनिबर्हिणी ॥ ५० ॥

करद्वयेन मुष्टिं तु कृत्वाङ्गुष्ठौ विनाम्य च ।
प्रसारयेदूर्ध्वमृजुं मध्यमायुगमञ्जसा ॥ ५१ ॥

अन्योऽन्यबन्धनं कुर्यादितराङ्गुल्योरपि ।
श्लेषयेत् कूर्परयुगं गदामुद्रा प्रकीर्तिता ॥ ५२ ॥

स्पृशेन्मध्यमया तर्जन्यग्रं सा धनुमुद्रिका(धनुषो मता ?) ।
वामाङ्गुष्ठमृजूकृत्य मुष्टिं बध्वेतराङ्गुलीः ॥ ५३ ॥

बन्धयेच्च तदङ्गुष्ठमितरेण क्रमेण च ।
प्रसार्य च तदङ्गुष्ठं मुद्रा सा मुसलाह्वया ॥ ५४ ॥

अङ्गुष्ठतर्जनीवर्जं तिसृभिर्मुष्टिबन्धनः(नम् ?) ।
नताग्रां तर्जनीं भूयस्तदङ्गुष्ठेन बन्धयेत् ॥ ५५ ॥

खड्गमुद्रा भवेत् सा तु दुष्टवर्गनिबर्हिणी ।
लम्बयित्वा करयुगमन्योऽन्यस्यामलात्मकैः ॥ ५६ ॥

---

46–(a) My. कर्णिकाम् for कुञ्चितम्
53–(b) ABKM° धेनु° for धनु°
54–(cd) My. om.
56–(c) My. बन्ध° for लम्ब°.



शङ्खमुद्रा
१३.४७–९



गदामुद्रा
१३.५१, २



मुसलमुद्रा
१३.५३, ४



गरुडमुद्रा
१३.५९–६१

निबध्याङ्गुष्ठयुग्मं तु संहरेद्वनमालिका ।
अपसव्यकरं स्पृ(स्प ?)ष्टमात्मनस्तु पराङ्मुखम् ॥ ५७ ॥

पराङ्मुखं सव्यकरं लम्बमानं प्रकल्पयेत् ।
वरदाभयदाख्यं तु मुद्राद्वयमिदं द्विज ॥ ५८ ॥

इन्द्रादीशानपर्यन्तमेतन्मुद्राद्वयं भवेत् ।
करद्वये पृष्ठयुगं संश्लिष्य च कनिष्ठिके ॥ ५९ ॥

बध्वा प्रसारयेद्युग्मं तर्जन्यो (न्यौ?) स्तुण्डसंनिभम् ।
अङ्गुष्ठयुगलं पादयुगवल्लम्बयेदधः ॥ ६० ॥

इतराङ्गुलियुग्मं तु चालयेत् पक्षसंनिभम् ।
एषा गरुडमुद्रा स्याद्विषसंहारकर्मणि ॥ ६१ ॥

अङ्गुष्ठेन कनिष्ठादित्रयं संहृत्य तर्जनीम् ।
दर्शयेन्मुद्रिका ह्येषा विष्वक्सेनप्रसादिनी ॥ ६२ ॥

सर्वाङ्गुलीः संप्रसार्य नताग्रा विरलाश्च ताः ।
कृत्वोर्ध्वगामिनीः कुर्यादेषानन्तस्य मुद्रिका ॥ ६३ ॥

वामेन तर्जनीमूर्ध्वं संस्थाप्याङ्गुष्ठकं पुनः ।
कनिष्ठादित्रयस्याग्रे स्थापयेच्चण्डमुद्रिका ॥ ६४ ॥

तथेतरकरे कुर्यात् प्रचण्डस्य च मुद्रिका ।
उत्थापयेद्वामहस्तमध्यमां जयमुद्रिका ॥ ६५ ॥

तथेतरकरे कुर्यान्मुद्रिका विजयाह्वया ।
अनामिकां तथा वामात्कुर्याद्वाङ्गस्य मुद्रिका ॥ ६६ ॥

इतरस्मान्मुनिस्तस्य(द्यामुनस्य?) मुद्रैषा परिकीर्तिता ।
शङ्खस्य निधिनाथस्य वामहस्तकनिष्ठिका ॥ ६७ ॥

---

57-(c) My: ऊर्ध्वाङ्गुलं सव्यकर°
58-(a) My. चापसव्यम् for सव्यकरम्
61-(a) My. उत्तरा° for इतरा°
65-(ab) ABKM. om.
66-(d) My. om.
67- My. om.

*पद्मं स्वेन रहस्वस्थो कनिष्ठोर्ध्वीकृता भवेत्* ।
तथैवानामिकाङ्गुष्ठे कुर्याद्वस्त्रस्य मुद्रिका ॥ ६८ ॥

मुष्टिमुद्रा भवे न्मुष्टिर्वेष्टिताङ्गुष्ठिका भवेत् ।
स्नानमुद्रा विनिर्मुक्तानिष्ठान्ता (क्तकनिष्ठा?)ङ्गुष्ठमूर्धनि ॥ ६९ ॥

विमुक्तानामिकां तां च गन्धमुद्रां विदुर्बुधाः ।
विमुक्तमध्यमा सैव पुष्पमुद्रेति कीर्तिता ॥ ७० ॥

यज्ञोपवीतमुद्रा स्यान्मध्यमाङ्गुष्ठमूर्धनि ।
अग्रपर्वसमायोगः कनिष्ठाङ्गुष्ठमूर्धनि ॥ ७१ ॥

विधानं पूर्वविन्यासात् सैषाकल्पस्य मुद्रिका ।
करावूर्ध्वीकृताङ्गुष्ठौ विधायान्याङ्गुलीगणम् ॥ ७२ ॥

कृतव्यतिकराग्रं तु कुर्यात् सा धूपमुद्रिका ।
संहृत्य वामहस्तस्य कनिष्ठामूर्ध्वसंस्थिताम् ॥ ७३ ॥

विधाय मध्यमां पश्चादङ्गुष्ठं संहरेत्तथा ।
अनामिकातर्जनीभ्यां संहरेच्च कनिष्ठिकाम् ॥ ७४ ॥

करेण दक्षिणेनापि विहितायां तथैव च ।
दीपमुद्रां विदुः प्राज्ञा देवस्य प्रियकारिणीम् ॥ ७५ ॥

उपचारान्तराणां तु मुद्रैषा स्यात्कृताञ्जलिः ।
अङ्गुष्ठमूर्ध्वगं स्थाप्य शेषाभिः कृतमुष्टिका ॥ ७६ ॥

प्रतिमामुद्रिका चैव ज्ञेया देवप्रियावहा ।
हस्तमुत्तानितं कृत्वा क्रमाद्वति(क्री? )कृताञ्जलिः ॥ ७७ ॥

पृथक् कुर्यात् तथाङ्गुष्ठं सैषा स्वागतमुद्रिका ।
प्रार्थनामुद्रिका सेयं ध्यानमुद्रापि सा भवेत् ॥ ७८ ॥

---

68-(abc) My. om.

अपसव्यकरस्याग्रमङ्गुलीपञ्चकस्य च ।
अन्वारब्धेनेतरेण परमान्ननिवेदनम् ॥ ७९ ॥

ग्रासमुद्रां विदुः प्राज्ञाः सदा देवप्रसादनी(नीम् ?) ।
दीर्घीकृत्य कनिष्ठां च तर्जनीं चाप्युभे इमे ॥ ८० ॥

अङ्गुष्ठं मध्यमानाममूर्ध्नि संयोजयेदपि ।
मुद्रैषा व्रीहिमुख्यानां धान्यानां हवने बुधैः ॥ ८१ ॥

आधारशक्तिपूर्वाणां मुद्रागणमथोच्यते ।
करद्वये मुष्टियुगं विधायाङ्गुष्ठमध्यतः ॥ ८२ ॥

क्षेपयेद्वाममुष्टेः स्यादितरा दक्षिणोपरि ।
अस्पृष्टा स्यादियं मुद्रा संप्रोक्ताधारशक्तिजा ॥ ८३ ॥

व्यत्यस्ता कूर्मकालाग्नेर्मुद्रैषात् स्या प्रियंकरी ।
विधायाधोमुखं वाममध्यमापृष्ठगे उभे ॥ ८४ ॥

तर्जन्यनामिके कुर्यात् कुञ्चितो(ते ?)मध्यमामृजूम् ।
विधाय प्रसृतं कुर्यात् कनिष्ठाङ्गुष्ठिके अपि ॥ ८५ ॥

अनन्तासनमुद्रैषा नास्यां योजयते यतः ।
कराभ्यां मुष्टियुग्मं तु लग्नं कृत्वाङ्गुलित्रयैः ॥ ८६ ॥

तर्जन्यङ्गुष्ठयुगलं प्राप्तलग्नं च मीलयेत् ।
पृथिवीमुद्रिकैषा स्याच्छृणु क्षीराब्धिमुद्रिकाम् ॥ ८७ ॥

संश्लेष्य मणिबन्धौ च ह्यङ्गुष्ठं चाङ्गुलीगणम् ।
अन्योन्यसंमुखं कुर्यान्नखाग्रैः सुषिरं मुने ॥ ८८ ॥

तन्मध्येऽङ्गुष्ठयुगलं निराधारं प्रचालयेत् ।
एषा सा मुद्रिका प्रोक्ता पङ्कजस्य पुरोदिता ॥ ८९ ॥

---

80–(b) ABM. सा देवप्रियवाहिनी ।

89–(ab) My. om.

संयोज्य हस्तयुगलं तर्जनीभ्यां मुखे मुखे ।
*अमध्यके मस्तकं चेद्बद्धं कुर्यादितीदृशम्* ॥ ९० ॥

*तत्त्यक्तानामिकायुग्मं ततस्तं चोपसंहरेत्* ।
नियोजयेत् कनिष्ठे द्वे बद्धे चैकैकशस्तथा ॥ ९१ ॥

अङ्गुष्ठयुगलं लग्नं कुर्याद्धर्मादिमुद्रिका ।
क्रमेणैता विजानीहि निर्व्यासिङ्गेन चेतसा ॥ ९२ ॥

तर्जन्यङ्गुष्ठयुगलं मेलयेद्दक्षिणे करे ।
पश्चाच्छनैः शनैः कुर्यात् तद्बन्धस्य विकासनम् ॥ ९३ ॥

शाखाशङ्ख(संघ?)स्य च पुनः समुत्थानात् पृथग्भवेत् ।
धाम्नां त्रयाणां मुद्राः स्युरेता हंसस्य कथ्यते ॥ ९४ ॥

हस्तौ प्रसारितौ स्पृष्टौ विदध्यादञ्जलिर्यथा ।
एषा भावासनस्य स्यान्मुद्रा शुद्धा परात्मनः ॥ ९५ ॥

*सर्वा हस्तादयो वक्त्राद्गृहीत्वा मध्यमाङ्गुलिम्* ।
दक्षिणस्य कनिष्ठस्य शेषाभिस्तिसृभिर्मुने ॥ ९६ ॥

मुष्टिं विधाय चाङ्गुष्ठमुन्नतं कारयेद्बुधः ।
एषा मुद्रा जयानाम्ना निरुक्ता मन्त्रवित्तमैः ॥ ९७ ॥

अधोमुखे स्थिते वामे करे तत्पृष्ठसंस्थिते ।
दक्षिणे बद्धमुष्टिस्ते (ष्टौ तु ?) विष्णुं ध्यायेच्छ्रियः पतिम् ॥ ९८ ॥

---

90–(d) A वन्धम् for बद्धम्

91–(d) A बन्धे for बद्धे

92–(b) ABM. धर्मस्य for धर्मादि°

94–(a) ABKM शाखस्य for शङ्ख(संघ?)स्य
(b) ABM समर्थनाम् for समुत्थानात्

95–(a) BM कुर्यात् for स्पृष्टौ

96–(a) M. सर्वे for सर्वा

98–(b) संस्पृष्ट° for तत्पृष्ठ°

सर्वार्थसाधनी मुद्रा जयेत्येषापि कीर्तिता ।
गरुडोपरिसंस्थस्य देवस्यैषा प्रियंकरी ॥ ९९ ॥

शक्तियुक्तस्य देवस्य मुद्रां शक्त्यात्मिकां शृणु ।
उत्तानवामहस्तं तु प्रसार्य विरलाङ्गुली: ॥ १०० ॥

कुर्यादाकुञ्चितप्रान्ता: तच्छाखा: सेतुवद्भवेत् ।
अङ्गुष्ठसंमुखं तासु लग्नाश्चाङ्गुलिमध्यत: ॥ १०१ ॥

हृदयाभिमुखीमेनां बध्नीयादियमेव सा ।
अन्यासामप्यनुक्तानां मुद्राणां द्विजपुंगव ॥ १०२ ॥

पद्ममुद्रां विदध्याद्वा यद्वा कुर्यादथाञ्जलिम् ॥

**इति पञ्चरात्रे महोपनिषदि विश्वामित्र—**
**संहितायां [मुद्रालक्षणविधिर्नाम]त्रयोदशोऽध्यायः ॥**

---

## चतुर्दशोऽध्यायः

विश्वामित्र:—

प्रतिष्ठां शृणु विप्रर्षे देवदेवस्य शार्ङ्गिण: ।
सर्वलोकेषु यद्वस्तु स्थावरं जङ्गमं तथा ॥ १ ॥

द्रष्टुं यच्छक्यते सर्वै: श्रोतुं वा द्विजसत्तम ।
तेषामन्तर्बहिरपि(?) व्यापकत्वेन सं(य:?)स्थित: ॥ २ ॥

तस्य विष्णोर्भगवत: प्रतिष्ठा कीदृशी भवेत् ।
तथा हि मन्दबुद्धीनां विश्वासायाभिधीयते ॥ ३ ॥

धाम्नस्तु पूर्वदिग्भागे दक्षिणे चोत्तरेऽथवा ।
पश्चिमे वापि कर्तव्यं मण्डपं(?) कोणदिक्ष्वपि ॥ ४ ॥

---

**101–(a)** ABM °दकुञ्चितत्राता: for °दाकुञ्चितप्रान्ता:
**(c)** ABM संमुखान्तासु for संमुखं तासु
**Colophon :–My.** मुद्रालक्षणं नाम for [मुद्रालक्षणविधिर्नाम]
**1–(a) My.** विप्रेन्द्र for विप्रर्षे

वर्जयेदन्तरालेषु मण्डपस्य विनिर्मितिम् ।
षट्त्रिंशद्भिर्युतं स्तम्भैर्यद्वा षोडशभिर्द्विज ॥ ५ ॥

द्वारैश्चतुर्भिः सहितं दर्भमालाभिवेष्टितम् ।
क्षौमपट्टवितानाढ्यं लम्बमुक्ताफलस्रजम् ॥ ६ ॥

द्वारपार्श्वयुगन्यस्ततोयपूर्णघटै(टः?) द्विज ।
लेपितं गोमयाम्भोभिः सुधारेखाविचित्रितम् ॥ ७ ॥

दीपमालापरिवृतं पुष्पमालाभिलम्बितम् ।
विभाजयेच्च तन्मध्यमेकाशीतिपदैः समैः ॥ ८ ॥

तन्मध्ये नवभिः कुर्यात् पदैर्वेदिं विधानतः ।
वेदिं च परितः कुर्यात् कुण्डानि द्विजसत्तम ॥ ९ ॥

चतुरश्रं तथा चापं वृत्तं पद्मं चतुर्दिशम् ।
मङ्गलान्यष्ट याज्ञीयैर्द्रुमैः कृत्वा च विन्यसेत् ॥ १० ॥

भेरी च वृषभो नागश्चामरं केसरी तथा ।
पताका ध्वजदीपांश्च (दीपौ च?) मङ्गलान्यष्ट काश्यप ॥ ११ ॥

प्रतिष्ठादिवसात् पूर्वं नवमे सप्तमेऽपि वा ।
पञ्चमे वापि दिवसे मङ्गलाङ्कुररोपणम् ॥ १२ ॥

कुर्वीत विधिवद्रात्रिमुखे द्विजवरोत्तम ।
अधिवासदिनात् पूर्वे दिने मुनिवरोत्तम ॥ १३ ॥

बिम्बस्य शुद्धये कुर्यात् जलाधिवसनं द्विज ।
आचार्यो यजमानश्च मूर्तिपैः सहितस्तदा ॥ १४ ॥

स्नातः शुक्लाम्बरधरः स्वनुलिप्तः स्वलंकृतः ।
यजमानानुकूलर्क्षे मुहूर्ते शोभने सति ॥ १५ ॥

पुण्याहवाचनं कुर्यात् ब्राह्मणैर्वेदपारगैः ।
प्रोक्षणं पञ्चगव्येन कृत्वा स्थानस्य शुद्धये ॥ १६ ॥

प्रविश्य कर्मशालायां प्रतिमामवलोक्य च ।
अस्त्रोदकेन संक्षाल्य पीठं रत्नशिलामपि ॥ १७ ॥

रथमारोप्य बिम्बं तत् सर्वमङ्गलसंयुतम् ।
तीर्थदेशं समासाद्य नदीं वा पार्श्ववर्तिनीम् ॥ १८ ॥

पवित्रमन्त्रं प्रजपेत् त्रीन् वाराँस्तस्य शुद्धये ।
क्षीरार्णवं जले तस्मिन् ध्यात्वा दारुमयं ततः ॥ १९ ॥

पर्यङ्कं नववस्त्रेण संछन्नं विन्यसेत्ततः ।
तस्मिन् प्राङ्मस्तकं देवं शाययेन्मूर्तिपैर्द्विजैः ॥ २० ॥

प्रागादौ शयनाद्बाह्ये कलशानष्ट विन्यसेत् ।
तेष्विन्द्रादीन् समभ्यर्च्य बलिं च विकिरेत्ततः ॥ २१ ॥

कारयित्वा प्रपां तत्र तीरे वेदादि पाठयेत् ।
गीतनृत्तादिभिश्चैव दिनशेषं नयेद्द्विज ॥ २२ ॥

रात्रौ च दीपान् प्रज्वाल्य रक्षां तत्र विधाय च ।
गत्वा च मण्डलं तत्र विन्यसेद्द्विजपुंगव ॥ २३ ॥

चक्राब्जं स्वस्तिकं वापि तस्य प्रागुत्तरे द्विज ।
शालीनां दशभिर्भारैस्तण्डुलैश्च तदर्धकैः ॥ २४ ॥

तिलैस्तदर्धसंख्यैश्च मध्ये मध्ये पटास्तृतैः ।
विधाय राशिं तस्योर्ध्वे विन्यसेत् कुम्भमुत्तमम् ॥ २५ ॥

तन्तुजालेन संवेष्ट्य क्षौमाभ्यामभिवेष्ट्य च ।
निधाय कूर्चं रत्नानि नव हे(है?)मं तथाम्बुजम् ॥ २६ ॥

विन्यस्य पल्लवाँश्चास्ये तद्वक्त्रमपिधाय च ।
कुम्भे च मण्डले चैव देवमावाह्य पूजयेत् ॥ २७ ॥

---

17–(c) Ks. अष्टो° for अस्त्रो°

21–(cd) My. om.

22&23 My. om.

23–(d) B. om. द्विजपुंगव ।

25–(b) ABM. पदास्थितः My. पदं स्थितैः for पटास्तृतैः

द्वारतोरणपूजां च पूर्ववत् सम्यगर्च्य(र्च्ये?) च ।
कुम्भमण्डलगे देवे पायसादि निवेद्य च ॥ २८ ॥

कुण्डे वह्निं प्रतिष्ठाप्य हुत्वा चाष्टसहस्रकम् ।
समिच्चरुघृतैश्चैव पूर्णामपि विधाय च ॥ २९ ॥

प्रतिष्ठितं(?) द्रव्यगणमशेषमधिवास्य च ।
गत्वा जलाशयं पश्चात् सर्वमङ्गलसंयुतम् ॥ ३० ॥

पाठयित्वा चतुर्वेदान् गापयित्वा च गीतकान् ।
नर्तयित्वा च सरितो(गणिका?) जागरेण नयेन्निशाम् ॥ ३१ ॥

ततः प्रभातसमये गुरुर्मूर्तिपसंयुतः ।
स्नातः श्वेताम्बरधरः कृतपौर्वाह्णिकक्रियः ॥ ३२ ॥

अलंकृतो यथापूर्वं मण्डपं संप्रविश्य च ।
द्वारतोरणकुम्भादीनभ्यर्च्य विधिना ततः ॥ ३३ ॥

कुम्भस्थं विष्णुमभ्यर्च्य करकस्थं सुदर्शनम् ।
कुम्भाष्टके च परितः शक्रादीनभिपूज्य च ॥ ३४ ॥

मण्डलस्थं च देवेशं साङ्गं सपरिवारकम् ।
आराधयित्वा नैवेद्यपश्चिमैर्भोगसंचयैः ॥ ३५ ॥

वह्निमध्यस्थितं देवं समिद्भिः सप्तभिः क्रमात् ।
इष्ट्वा विकीर्य पुरतो बलिं द(ग?)त्वा जलाशयम् ॥ ३६ ॥

प्राप्तेऽपराह्णे तद्बिम्बं रथमारोप्य देशिकम् ।
अलंकृत्य च दिक्संस्थैर्वेदानध्याप्य च द्विजैः ॥ ३७ ॥

एकायनीं पुरः(नः?) शाखां पाठयित्वा च तां द्विजैः ।
श्रीसूक्तं भद्रसूक्तं च शाकुनं सूक्तमप्यथ ॥ ३८ ॥

---

29 Ks. & My. om.
30–(a) Ks. प्राति° for प्रति
My. प्रातिष्ठिकम् for प्रतिष्ठितम्
38–(b) ABM My. तद् for ताम्

पुंसूक्तं विष्णुसूक्तं च भगवत्प्रतिपादकान् ।
मन्त्रानपि पठद्भिश्च वैष्णवैर्भगवन्मयैः ॥ ३९ ॥

शङ्खकाहलसंमिश्रतूर्यघोषपुरस्सरम् ।
सिद्धार्थानस्त्रसंजप्तानाचार्यो मूर्तिपैः सह ॥ ४० ॥

विकिरन्नग्रतो यायात् सर्वविघ्नोपशान्तये ।
ग्रामं प्रदक्षिणं कुर्वन्नालयं संप्रवेशयेत् ॥ ४१ ॥

अवतार्य शनैर्बिम्बं रथमण्डलसंनिधिम् ।
जपन् नृसिंहस्य मनुं स्थापयित्वा तदग्रतः ॥ ४२ ॥

विज्ञापयेन्मण्डलस्थं देवं तद्गतमानसः ।
त्वत्समाराधनार्थाय देवदेव श्रियः पते ॥ ४३ ॥

प्रकल्पितमिदं बिम्बं त्वद्भक्तहितकाम्यया ।
प्रतिष्ठां कर्तुमिच्छामि प्रसीद परमेश्वर ॥ ४४ ॥

विज्ञापनमिदं कृत्वा प्रणम्याष्टाङ्गसंयुतम् ।
प्राप्यानुज्ञां च पीठोर्ध्वे बिम्बं तदुपवेश्य च ॥ ४५ ॥

पुण्याहवाचनं कृत्वा द्वाःस्थानभ्यर्च्य पूर्ववत् ।
कुम्भादिष्वपि चाराध्य हुत्वाग्नौ च गुरूत्तमः ॥ ४६ ॥

कुण्डेषु मूर्तिपान् होतुं नियुज्य च समन्ततः ।
आसाद्य बिम्बनिकटं सर्वदुष्टनिवारणम् ॥ ४७ ॥

ज्वलत्प्रभं सहस्रारं ध्यात्वा तन्मन्त्रमन्त्रितान् ।
सिद्धार्थान् प्रतिमामूर्ध्नि तन्मन्त्रेण विनिक्षिपेत् ॥ ४८ ॥

शिल्पिशालोत्थदोषाणां शान्त्यै स्नपनमाचरेत् ।
बिम्बस्य परितः कुम्भानष्टौ संस्थापयेद्गुरुः ॥ ४९ ॥

---

47–(a) My. कुम्भेऽष्ट° for कुण्डेषु
–(d) ABM दृष्टि for दुष्ट

49–(a) ABM जालो° for शालो°

आवेष्ट्य तन्तुभिर्वस्त्रयुग्मेनावेष्ट्य तान् बहिः ।
क्षीरं शुद्धजलं रत्नतोयं हेमाम्बु गन्धकम् ॥ ५० ॥

फलपुष्पजले बीजतोयं पूर्वादि विन्यसेत् ।
हेतिराजेन कलशान् साङ्गानष्टाभिमन्त्रितान् ॥ ५१ ॥

तन्मन्त्रेणाभिषिञ्चेत् तं पूर्वादीशदिगष्टकम् (के?) ।
अनेन स्नपनेनैव शिल्पिदोषो विनश्यति ॥ ५२ ॥

ततश्च नववस्त्राभ्यां सदशाभ्यां च कौतुकम् ।
संवेष्टयित्वा दृग्दानशयनं परिकल्पयेत् ॥ ५३ ॥

वेदिकोपरि शालीनां दशभारान् विकीर्य च ।
तस्योपरि पटं न्यस्य तण्डुलांस्तत्प्रमाणकान् ॥ ५४ ॥

तस्योपरिष्टाच्च तिलान् विकीर्य च पटोपरि ।
सोपधानं कुशान् न्यस्य तस्योपरि च कौतुकम् ॥ ५५ ॥

शाययित्वा प्राक्छिरसं स्वर्णसूच्या द्विजोत्तमः ।
अस्त्राभिजप्तया नेत्रे प्रणवेनोल्लिखेन्मुने ॥ ५६ ॥

सनेत्रं मनसा ध्यायन् परमात्मानमात्मनि ।
ततः शिल्पिवरः स्नातः सिताम्बरधरः शुचिः ॥ ५७ ॥

नेत्रमन्त्रितशस्त्रेण नेत्रे प्रकटयेत् सुधीः ।
साम चान्द्रं वारुणं च सामगैः पाठयेद् द्विजैः ॥ ५८ ॥

हेमपात्रस्थितं पश्चाद् घृतं मधु च दर्शयेत् ।
नेत्रं प्रपूरयेत् ताभ्यां द्वादशाक्षरविद्यया ॥ ५९ ॥

वौषट्कारान्तयोर्ध्वस्थहृन्मन्त्रेणामृतद्रवम् ।
ध्यात्वा चान्द्रमसं बिम्बं मस्तकोपरि च स्रुताम् ॥ ६० ॥

---

50-(d) A होमा° for हेमा°
53-(c) ABM दिग् for दृग्
54-(c) ABM न्यस्योपरि तया शुद्ध°
57-(a) My. °नेत्रमनुना for °नेत्र मनसा

ध्यात्वामृतस्य धारां च धेनुयुग्मं सवत्सकम् ।
सौवर्णखुरशृङ्गाढ्यं दर्शयेत् प्रतिमापुरः(?) ॥ ६१ ॥

ततस्तु कलशैर्देवं नवभिः स्नापयेद्द्विज ।
ततोऽलंकृत्य देवेशं मात्रान्तं परिपूज्य च ॥ ६२ ॥

निवेद्य पायसादीनि ताम्बूलं च निवेद्य च ।
रथमारोप्य तद्बिम्बं प्रासादं परितो नयेत् ॥ ६३ ॥

*सर्वमङ्गलसव्याघ्रत्वचं* विन्यस्य चोपरि ।
क्षौमवस्त्रं तथास्तीर्य हृन्मन्त्रोच्चारणादिकम् ॥ ६४ ॥

शेषरूपं च शयनं ध्यात्वा चैकाग्रमानसः ।
अर्घ्याद्यैः पूजयित्वा च शिरःपार्श्वे घटं न्यसेत् ॥ ६५ ॥

सुसूत्रं क्षौमवसितं शालिपीठोपरि स्थितम् ।
अर्घ्येण प्रोक्ष्य शयनं निद्राणं श्रीयुतं तथा ॥ ६६ ॥

नतिप्रणवयुक्तेन स्वनाम्ना धूपपश्चिमम् ।
सभाज्य बिम्बं शयने प्राङ्मूर्धानं च शाययेत् ॥ ६७ ॥

अर्घ्यपूर्वैश्च धूपान्तैराराध्य प्रणिपत्य च ।
पीठं ब्रह्मशिलां चैव शालिपीठे पटास्तृते ॥ ६८ ॥

शाययित्वा यथापूर्वं प्रणवेन सभाज्य च ।
वाससा वर्मजप्तेन धूपितेनावगुण्ठ्य च ॥ ६९ ॥

अर्चामिन्येन वस्त्रेण छादयेत् पीठिकामपि ।
प्रतिमापादपार्श्वस्थान् लाञ्छनान्(?)स्वस्वमन्त्रकैः ॥ ७० ॥

स्वस्थानसंस्थितान्(?)बुध्वा मूर्ध्नि द्वादशवाचकम् ।
दामोदरात् केशवान्तमापादं द्वादशस्थले ॥ ७१ ॥

---

62–(d) KKs. My. मन्त्रा° for मात्रा°

विन्यस्य तच्छक्तिचयं तद्वद् व्यापकवत् पुनः ।
द्विषट्कार्णं च मूर्धान्तमप्ययाख्येन भावयेत् ॥ ७२ ॥

निश्चलं ज्ञानरूपं तत्कौतुकं प्रतिभाव्य च ।
प्रणिपत्य च तद्बिम्बं तदा कुण्डसमीपतः ॥ ७३ ॥

आज्यान्नतिलहोमं च प्रत्येकं पञ्चविंशतिः ।
कृत्वा पूर्णाहुतिं दद्याद्देशिको नियतात्मवान् ॥ ७४ ॥

एकायनाश्चतुर्दिक्षु जुहुयुर्व्यूहमन्त्रकैः ।
कोणेषु वैष्णवा होमं कुर्युर्मन्त्रैश्च वैष्णवैः ॥ ७५ ॥

स्वशाखोक्तैस्तथा चाग्निकोणादिषु समाहितः ।
परं ब्रह्म स्वशक्त्यैव सर्वशक्तिशरीरकैः ॥ ७६ ॥

अभीष्टं चिन्तयित्वाथ हृदये द्वादशाक्षरम् ।
हृदयाङ्गसमायुक्तं ज्वलद्रूपं विभाव्य च ॥ ७७ ॥

भूतशुद्धिविधानेन संहारान्तं च कौतुकम् ।
विचिन्त्य परमां मूर्तिमापाद्य स्वयमेव च ॥ ७८ ॥

कुमुदादिगणेशांश्च रक्षार्थं तेष्वनुक्रमात् ।
आवाह्याभ्यर्चयित्वा च स्वैः स्वैर्मन्त्रैर्द्विजोत्तम ॥ ७९ ॥

ततो मूर्तिपसंयुक्तो गत्वा प्रासादमध्यतः ।
सर्वदुष्टोपशान्त्यर्थं प्रोक्षयेत् पञ्चगव्यकैः ॥ ८० ॥

हेतीशं क्षेत्रनाथं च पूजयेद्रूपपश्चिमैः ।
आधारप्रमुखैर्मन्त्रैर्योगपीठान्तमर्चयेत् ॥ ८१ ॥

---

72–(ab.) Ks, विन्यस्यास्य च शक्ती च यत्नात् पावकवत्पुनः ।
–(d) ABM कथ्यांखन for °मप्ययाख्येन

74–(a) Ks. My. आज्यं च for आज्यान्न°

77–(c) ABM हृदयंगमसंयुक्तम्

78–(b) ABKs.M संहारं तच्च for संहारान्त च

परितः पूर्ववत्कुण्डानष्टौ संकल्प्य देशिकः ।
शान्त्यर्थं चक्रमन्त्रेण क्षिपडर्णेन वा हुनेत् ॥ ८२ ॥

मूर्तिपाः स्वस्वमन्त्रेण जुहुयुः पूर्ववत् क्रमात् ।
प्रशमय्य ततो दोषान् प्रासादं चाधिवासयेत् ॥ ८३ ॥

प्रासादं(दो ?) देवदेवस्य प्रोच्यते तात्त्विकी तनुः ।
तत्त्वानि विन्यसेत्पीठे यथा तत्त्वाधिवासकः(के ?) ॥ ८४ ॥

प्रकृत्यन्तानि पुरुषे बिम्बे त्वेवं प्रकीर्तितम् ।
अध्वषट्कं तथा ध्यात्वा वर्णं शिखरसंस्थितम् ॥ ८५ ॥

चातुरात्म्येन मन्त्रेण प्रणवाद्येन देशिकः ।
कृत्वा च व्यापकन्यासं तच्छिरोऽन्तं मुनीश्वर ॥ ८६ ॥

समभ्यर्च्याथ हुत्वा च प्रोक्ष्य शान्त्युदकेन च ।
आपोहिष्ठादिभिर्मन्त्रैः पवित्रमनुनापि च ॥ ८७ ॥

गर्भगेहं प्राङ्गणानि प्रोक्षयेयुश्च मूर्तिपाः ।
शयनस्थानमासाद्य साष्टाङ्गं प्रणिपत्य च ॥ ८८ ॥

प्रतिमामूर्ध्नि दत्वार्घ्यं धूपान्तमभिपूज्य च ।
बिम्बस्य पादपार्श्वे तु बध्वा पद्मासनं गुरुः ॥ ८९ ॥

ध्यानाधिवासं कुर्वीत यथा तदवधारय ।
मूलाधारानुबद्धाभिर्नाडीभिर्दशभिर्युतम् ॥ ९० ॥

अन्याभिस्तु शरीरस्थं व्याप्तं द्विजवरात्मज ।
प्रतिमायां तथा देवीं व्याप्तामेव विभाव्य च ॥ ९१ ॥

श्रोत्रादीन् स्वस्वविषयादात्मन्येवोपसंहरेत् ।
स्वहृत्पङ्कजमध्यस्थं ज्योतीरूपं विभाव्य च ॥ ९२ ॥

---

90–(a) Ks. धान्या° for ध्याना°
My. नाडीन्यासं प्र° for ध्यानाधिवासम्

92–(d) ABM ऊन° for °ज्योती°

आवेष्ट्य तन्तुभिर्वस्त्रयुग्मेनावेष्ट्य तान् बहिः ।
क्षीरं शुद्धजलं रत्नतोयं हेमाम्बु गन्धकम् ॥ ५० ॥

फलपुष्पजले बीजतोयं पूर्वादि विन्यसेत् ।
हेतिराजेन कलशान् साङ्गानष्टाभिमन्त्रितान् ॥ ५१ ॥

तन्मन्त्रेणाभिषिञ्चेत् तं पूर्वादीशदिगष्टकम् (के?) ।
अनेन स्नपनेनैव शिल्पिदोषो विनश्यति ॥ ५२ ॥

ततश्च नववस्त्राभ्यां सदशाभ्यां च कौतुकम् ।
संवेष्टयित्वा दृग्दानशयनं परिकल्पयेत् ॥ ५३ ॥

वेदिकोपरि शालीनां दशभारान् विकीर्य च ।
तस्योपरि पटं न्यस्य तण्डुलांस्तत्प्रमाणकान् ॥ ५४ ॥

तस्योपरिष्टाच्च तिलान् विकीर्य च पटोपरि ।
सोपधानं कुशान् न्यस्य तस्योपरि च कौतुकम् ॥ ५५ ॥

शाययित्वा प्राक्छिरसं स्वर्णसूच्या द्विजोत्तमः ।
अस्त्राभिजप्तया नेत्रे प्रणवेनोल्लिखेन्मुने ॥ ५६ ॥

सनेत्रं मनसा ध्यायन् परमात्मानमात्मनि ।
ततः शिल्पिवरः स्नातः सिताम्बरधरः शुचिः ॥ ५७ ॥

नेत्रमन्त्रितशस्त्रेण नेत्रे प्रकटयेत् सुधीः ।
साम चान्द्रं वारुणं च सामगैः पाठयेद् द्विजैः ॥ ५८ ॥

हेमपात्रस्थितं पश्चाद् घृतं मधु च दर्शयेत् ।
नेत्रं प्रपूरयेत् ताभ्यां द्वादशाक्षरविद्यया ॥ ५९ ॥

वौषट्कारान्तयोर्ध्वस्थहृन्मन्त्रेणामृतद्रवम् ।
ध्यात्वा चान्द्रमसं बिम्बं मस्तकोपरि च स्रुताम् ॥ ६० ॥

---

50-(d) A होमा° for हेमा°
53-(c) ABM दिग् for दृग्
54-(c) ABM न्यस्योपरि तया शुद्ध°
57-(a) My. °नेत्रमनुना for °नेत्र मनसा

ध्यात्वामृतस्य धारां च धेनुयुग्मं सवत्सकम् ।
सौवर्णखुरशृङ्गाढ्यं दर्शयेत् प्रतिमापुरः(?) ॥ ६१ ॥

ततस्तु कलशैर्देवं नवभिः स्नापयेद्द्विज ।
ततोऽलंकृत्य देवेशं मात्रान्तं परिपूज्य च ॥ ६२ ॥

निवेद्य पायसादीनि ताम्बूलं च निवेद्य च ।
रथमारोप्य तद्बिम्बं प्रासादं परितो नयेत् ॥ ६३ ॥

*सर्वमङ्गलसव्याघ्रत्वचं* विन्यस्य चोपरि ।
क्षौमवस्त्रं तथास्तीर्य हृन्मन्त्रोच्चारणादिकम् ॥ ६४ ॥

शेषरूपं च शयनं ध्यात्वा चैकाग्रमानसः ।
अर्घ्याद्यैः पूजयित्वा च शिरःपार्श्वे घटं न्यसेत् ॥ ६५ ॥

सुसूत्रं क्षौमवसितं शालिपीठोपरि स्थितम् ।
अर्घ्येण प्रोक्ष्य शयनं निद्राणं श्रीयुतं तथा ॥ ६६ ॥

नतिप्रणवयुक्तेन स्वनाम्ना धूपपश्चिमम् ।
सभाज्य बिम्बं शयने प्राङ्मूर्धानं च शाययेत् ॥ ६७ ॥

अर्घ्यपूर्वैश्च धूपान्तैराराध्य प्रणिपत्य च ।
पीठं ब्रह्मशिलां चैव शालिपीठे पटास्तृते ॥ ६८ ॥

शाययित्वा यथापूर्वं प्रणवेन सभाज्य च ।
वाससा वर्मजप्तेन धूपितेनावगुण्ठ्य च ॥ ६९ ॥

अर्चामिन्येन वस्त्रेण छादयेत् पीठिकामपि ।
प्रतिमापादपार्श्वस्थान् लाञ्छनान्(?)स्वस्वमन्त्रकैः ॥ ७० ॥

स्वस्थानसंस्थितान्(?)बुध्वा मूर्ध्नि द्वादशवाचकम् ।
दामोदरात् केशवान्तमापादं द्वादशस्थले ॥ ७१ ॥

---

62-(d) KKs. My. मन्त्रा° for मात्रा°

विन्यस्य तच्छक्तिचयं तद्वद् व्यापकवत् पुनः ।
द्विषट्कार्णं च मूर्धान्तमप्ययाख्येन भावयेत् ॥ ७२ ॥

निश्चलं ज्ञानरूपं तत्कौतुकं प्रतिभाव्य च ।
प्रणिपत्य च तद्बिम्बं तदा कुण्डसमीपतः ॥ ७३ ॥

आज्यान्नतिलहोमं च प्रत्येकं पञ्चविंशतिः ।
कृत्वा पूर्णाहुतिं दद्याद्देशिको नियतात्मवान् ॥ ७४ ॥

एकायनाश्चतुर्दिक्षु जुहुयुर्व्यूहमन्त्रकैः ।
कोणेषु वैष्णवा होमं कुर्युर्मन्त्रैश्च वैष्णवैः ॥ ७५ ॥

स्वशाखोक्तैस्तथा चाग्निकोणादिषु समाहितः ।
परं ब्रह्म स्वशक्त्यैव सर्वशक्तिशरीरकैः ॥ ७६ ॥

अभीष्टं चिन्तयित्वाथ हृदये द्वादशाक्षरम् ।
हृदयाङ्गसमायुक्तं ज्वलद्रूपं विभाव्य च ॥ ७७ ॥

भूतशुद्धिविधानेन संहारान्तं च कौतुकम् ।
विचिन्त्य परमां मूर्तिमापाद्य स्वयमेव च ॥ ७८ ॥

कुमुदादिगणेशांश्च रक्षार्थं तेष्वनुक्रमात् ।
आवाह्याभ्यर्चयित्वा च स्वैः स्वैर्मन्त्रैर्द्विजोत्तम ॥ ७९ ॥

ततो मूर्तिपसंयुक्तो गत्वा प्रासादमध्यतः ।
सर्वदुष्टोपशान्त्यर्थं प्रोक्षयेत् पञ्चगव्यकैः ॥ ८० ॥

हेतीशं क्षेत्रनाथं च पूजयेद्धूपपश्चिमैः ।
आधारप्रमुखैर्मन्त्रैर्योगपीठान्तमर्चयेत् ॥ ८१ ॥

---

72–(ab.) Ks, विन्यस्यास्य च शक्ती च यत्नात् पावकवत्पुनः ।
–(d) ABM कव्यांखन for °मप्ययाख्येन
74–(a) Ks. My. आज्यं च for आज्यान्न°
77–(c) ABM हृदयंगमसंयुक्तम्
78–(b) ABKs.M संहारं तच्च for संहारान्त च

परितः पूर्ववत्कुण्डानष्टौ संकल्प्य देशिकः ।
शान्त्यर्थं चक्रमन्त्रेण द्विषडर्णेन वा हुनेत् ॥ ८२ ॥

मूर्तिपाः स्वस्वमन्त्रेण जुहुयुः पूर्ववत् क्रमात् ।
प्रशमय्य ततो दोषान् प्रासादं चाधिवासयेत् ॥ ८३ ॥

प्रासादं(दो ?) देवदेवस्य प्रोच्यते तात्त्विकी तनुः ।
तत्त्वानि विन्यसेत्पीठे यथा तत्त्वाधिवासकः(के ?) ॥ ८४ ॥

प्रकृत्यन्तानि पुरुषे बिम्बे त्वेवं प्रकीर्तितम् ।
अध्वषट्कं तथा ध्यात्वा वर्णं शिखरसंस्थितम् ॥ ८५ ॥

चातुरात्म्येन मन्त्रेण प्रणवाद्येन देशिकः ।
कृत्वा च व्यापकन्यासं तच्छिरोऽन्तं मुनीश्वर ॥ ८६ ॥

समभ्यर्च्याथ हुत्वा च प्रोक्ष्य शान्त्युदकेन च ।
आपोहिष्ठादिभिर्मन्त्रैः पवित्रमनुनापि च ॥ ८७ ॥

गर्भगेहं प्राङ्गणानि प्रोक्षयेयुश्च मूर्तिपाः ।
शयनस्थानमासाद्य साष्टाङ्गं प्रणिपत्य च ॥ ८८ ॥

प्रतिमामूर्ध्नि दत्वार्घ्यं धूपान्तमभिपूज्य च ।
बिम्बस्य पादपार्श्वे तु बध्वा पद्मासनं गुरुः ॥ ८९ ॥

ध्यानाधिवासं कुर्वीत यथा तदवधारय ।
मूलाधारानुबद्धाभिर्नाडीभिर्दशभिर्युतम् ॥ ९० ॥

अन्याभिस्तु शरीरस्थं व्याप्तं द्विजवरात्मज ।
प्रतिमायां तथा देवीं व्याप्तामेव विभाव्य च ॥ ९१ ॥

श्रोत्रादीन् स्वस्वविषयादात्मन्येवोपसंहरेत् ।
स्वहृत्पङ्कजमध्यस्थं ज्योतीरूपं विभाव्य च ॥ ९२ ॥

---

90–(a) Ks. धान्या° for ध्याना°
My. नाडीन्यासं प्र° for ध्यानाधिवासम्

92–(d) ABM ऊन° for °ज्योती°

स्वहृत्पद्मोदरे देवं बिम्बस्थं परिभाव्य च ।
सूर्येन्द्वग्निप्रभां सूक्ष्मां सुषुम्नां स्वान्तरस्थिताम् ॥ ९३ ॥

बिम्बे चात्मनि च ध्यात्वा दक्षिणेन स्वदेहतः ।
बिम्बस्य वामपार्श्वेन प्रविश्य हृदयाम्बुजम् ॥ ९४ ॥

योगकाले यथा देवः स्वशरीरेऽनुभूयते ।
समाधिना निश्चलेन तथा तं परिभावयेत् ॥ ९५ ॥

कार्या तदेकता पश्चाद्यावद्भिन्दति वै ततः ।
द्वैधं कृत्वा ततो यावत् बिम्बं वामेन चात्मनः ॥ ९६ ॥

दक्षिणेनाथ हृदयं प्रविशेद् द्विजसत्तम ।
ततो हृत्पद्ममध्यस्थं ध्यात्वैवात्मानमात्मना ॥ ९७ ॥

ज्ञानस्वरूपममलं यावन्नाड्याश्च मध्यतः ।
स्वमन्त्रोच्चारणेनैव द्वादशान्तं द्विजोत्तम ॥ ९८ ॥

तत्संस्थितेन विभुना भूत्वा सामरसः(?) स्वयम् ।
निष्पन्दस्पन्दतां गत्वा व्रजेत् स्वहृदयान्तरम् ॥ ९९ ॥

ततश्च बिम्बहृदयं यथापूर्वं तथा व्रजेत् ।
कृत्वा तदैक्यं तत्रापि द्वादशान्तं ततो व्रजेत् ॥ १०० ॥

तत्रापि पूर्ववद् बुध्वा हृदयं संप्रविश्य च ।
तस्मान्निर्गत्य हृदयात् प्रविशेत्पूर्ववर्त्मना ॥ १०१ ॥

आत्महृन्मण्डलान्तःस्थमात्मानमनुभाव्य च ।
इत्थं कौतुकमध्यस्थं चैतन्यं परिभाव्य च ॥ १०२ ॥

इतरेतरेन्द्रवत्तेजःसंबन्धमनुचिन्तयेत् ।
ब्रह्मानुसंधानमिदं कथितं द्विजसत्तम ॥ १०३ ॥

शब्दब्रह्मानुसंधानं शृणुष्वा(?)तः परं द्विज ।
परं सूक्ष्मं तथा स्थूलमतिस्थूलं चतुर्विधम् ॥ १०४ ॥

94-(b) My. तु for स्व

विद्धि बिम्बं चतुःशब्दो (ब्दैः?) यथा देहोऽव्ययस्तथा ।
शब्द एव स्वदेहं च बिम्बं च मुनिसत्तम ॥ १०५ ॥

विधिनाप्ययसंज्ञेन वैखर्यामुपसंहरेत् ।
शब्दं तद्भवं पूर्वं परस्मिन् ब्रह्मणि द्विज ॥ १०६ ॥

निस्तरङ्गदशापन्नस्पृष्ट(सृष्टि?) मार्गेण तत्त्वयम् ।
परं ब्रह्म शब्दबिम्बं पूर्ववच्चिन्तयेन्मुने ॥ १०७ ॥

इत्थं शाब्दं स्वदेहं च कृत्वा तत्रैव विश्रमेत् ।
सांनिध्यार्थं ततो मन्त्रसंयोगं विदधीत च ॥ १०८ ॥

सूर्यचन्द्रसहस्राभं स्वहृत्पङ्कजमध्यगम् ।
स्वमन्त्रतन्त्रसंनादरूपेणाग्निस्फुलिंगवत् ॥ १०९ ॥

ब्रह्मरन्ध्रेणोर्ध्वगेन निर्गत्य च तनोः पुनः ।
प्रविशन्तं पुनस्तेन वर्त्मना स्वतनुं पुनः ॥ ११० ॥

ध्यात्वा च तत्स्थचैतन्ये देवतां संविभाव्य च ।
अर्चारूपं च सकलमेवं व्याप्तं विभावयेत् ॥ १११ ॥

पृथ्वीमन्त्रानुविद्धं च पीठं रत्नशिलामयम् ।
आधारशक्तिमन्त्रेण बिम्बेनैक्यं विभावयेत् ॥ ११२ ॥

विभाव्येत्थं ततो विप्र मन्त्रन्यासं समाचरेत् ।
न्यासेन रहितं वापि मन्त्रन्यासन(सं स?) माचरेत् ॥ ११३ ॥

---

105-(a) A शुद्धिं चतुर्विधः BM शुद्धिश्चतुर्विधः for विद्धि बिम्बं चतुः°
My. तद्धि for विद्धि
-(b) ABM देहेऽप्ययम् for देहोऽव्यय
106-(a) KMMy. व्यय for °°प्यय°
108-(c) Ks. नमोमन्त्रम् for ततो मन्त्र°
110-(d) My. मनुम् for तनुम्
111-(b) ABM. °नैव तां संविभज्य च ।
-(d) ABM. व्याप्तिम् for व्याप्तम्
113-(c) Ks. बिम्बम् M. मन्त्रम् for वापि
-(cd) A मन्त्रममन्त्रन्यास° for वापि मन्त्रन्यासन°

प्रणम्य दण्डवत् पश्चादात्मायनसमर्पणम् ।
विधायार्घ्यादिभिर्भोगैर्नैवेद्यान्तैः क्रमाद्यजेत् ॥ ११४ ॥

ततश्च वेद्याः परितो विप्रानेकायनादिकान् ।
दिग्विदिक्संस्थितान् कृत्वा मन्त्रानुद्घोषयेत्क्रमात् ॥ ११५ ॥

इतिहासपुराणानां स्तोत्राणामपि पाठकान् ।
वैष्णवान् परितः स्थाप्य तत्तद्घोषणमाचरेत् ॥ ११६ ॥

चतुर्दिक्षु चतुर्वेदपठनं कारयेद् द्विजैः ।
वीणावेणुरवैर्मिश्रान् गीतशब्दांश्च घोषयेत् ॥ ११७ ॥

नृत्तानां दर्शनं चैव कारयेत् परितः स्थितैः ।
यथाक्रमं मूर्तिधरैर्हवनं कारयेत्तथा ॥ ११८ ॥

प्रत्येकं शतसंख्याकं कृतानां कर्मणां द्विज ।
तत्त्वानां चैव शुद्ध्यर्थं हवनं कारयेन्मतम् ॥ ११९ ॥

आधारशक्तिमन्त्रेण रत्नाधारशिलाहुतिम् ।
भूतमन्त्रेण पीठस्य हवनं विधिवच्चरेत् ॥ १२० ॥

पूर्णाहुतिं विधायान्ते शान्तितोयेन चोक्षणम् ।
बिम्बादीनां तथा कृत्वा विष्णुगायत्रिया पुनः ॥ १२१ ॥

अर्घ्यादिभोगैर्यजनं कृत्वा तत्पादगौ करौ ।
त्वत्सभाजनसिद्ध्यर्थं त्वद्रूपं कल्पितं विभो ॥ १२२ ॥

संनिधायात्र देवेश यावदाभूतसंप्लवम् ।
त्वद्भक्तैर्विहितां पूजां गृहाण परमेश्वर ॥ १२३ ॥

गतिस्त्वमेव परमा मज्जतां भवसागरे ।
विज्ञापनमिदं कृत्वा प्रणमेद्दण्डवत्क्षितौ ॥ १२४ ॥

कुम्भमण्डलगं देवमभ्यर्च्य तदनु द्विज ।
मन्त्राणां चैव च तथा न्यस्तानां तु विशेषतः ॥ १२५ ॥

---

114–(b) My. °दाम्नायन for °दात्मायन

अर्चागतस्यापि विभोरेकसंधानकारणात् ।
घृतेन दध्ना पयसा मधुना च क्रमाद् द्विज ॥ १२६ ॥

अङ्घ्रिनाभीश्च हृदयं स्पृष्ट्वा मूर्धानमेव च ।
अनिरुद्धादिभिर्मन्त्रैर्हुत्वान्ते प्रोक्षयेत्क्रमात् ॥ १२७ ॥

स्पृष्ट्वाङ्गानि समस्तेन तत्तदङ्गानि सर्वतः ।
संप्रोक्ष्य सर्वगात्राणि द्विषडर्णेन होमयेत् ॥ १२८ ॥

पूर्णाहुतिं ततो दद्यादाज्ये(?)नामाभिधाय च ।
प्रासाददिक्षु जुहुयुस्तन्मन्त्रेण बलिं हरेत् ॥ १२९ ॥

मूर्तिपाः कुमुदादींश्च पूजयेयुः समन्ततः ।
स्नात्वा प्रभाते ह्याचार्यो गत्वा यागनिकेतनम् ॥ १३० ॥

प्रविश्याराध्य देवं च विज्ञाप्य तदनुज्ञया ।
अर्घ्यादिपात्रसहितो गत्वा च भगवद्गृहम् ॥ १३१ ॥

क्षेत्रेशयजनं कृत्वा स्वमन्त्रेण द्विजोत्तम ।
हुत्वाग्निमाज्येन ततः पूर्णामपि विधाय च ॥ १३२ ॥

प्रासाददिक्षु जुहुयुस्तन्मन्त्रेणैव मूर्तिपाः ।
पश्चाद्गर्भगृहं गत्वा सप्तभागं समं द्विज ॥ १३३ ॥

मध्यं *ग्राह्यं* (ब्राह्मं ?)तु तद्ग्राह्यं दैवमानुषमन्वतः ।
पैशाचं बाह्यगं स्थानं पैशाचादिपदत्रयम् ॥ १३४ ॥

परित्यज्याग्रतो विप्र पूजने चैकबेरके ।
न्यसेद्रत्नशिलां ब्राह्मे यद्वा ब्रह्मसुरान्तरे ॥ १३५ ॥

बहुबेरे तत्र कुर्यात् शृणु स्थापनमुत्तमम् ।
तत्र संस्थापने देवो भक्तानामपि वाञ्छितम् ॥ १३६ ॥

प्रददाति द्विजश्रेष्ठ संपदः सकलास्तथा ।
दैवे वा मानुषे वापि संधौ वाथ तयोर्मुने ॥ १३७ ॥

बहुबेरप्रतिष्ठानं यद्वा स्याच्छयनासनम् ।
कृत्वावटं ब्रह्मशिलामानात् किंचिदिवाधिकम् ॥ १३८ ॥

मध्ये तस्य द्विजवर द्वादशाङ्गुलविस्तृतम् ।
कृत्वा मानं च तन्मात्रं तस्मिन् हेमादिनिर्मितम् ॥ १३९ ॥

अङ्गुलीभिश्चतसृभिरुन्नतं विततं तथा ।
हेमरत्नादिसंपूर्णं हेमपात्रं प्रजप्य च ॥ १४० ॥

प्रणवाद्यन्तसंस्थेन विन्यसेद्विष्णुपूर्वया ।
गायत्र्या पूरयेद्गर्तं सुधया कारयेद् दृढम् ॥ १४१ ॥

*ब्राह्मादितरसंज्ञेन(?)* शिलां तस्योपरि न्यसेत् ।
मध्ये नवाम्बुजं कुर्यात् कर्णिकास्ववटं खनेत् ॥ १४२ ॥

रत्नानि विन्यसेत् तेषु वज्रमैन्द्रे न्यसेद् बुधः ।
याम्येऽम्बुजे गारुडं च मुक्तां वारुणपङ्कजे ॥ १४३ ॥

पद्मरागं न्यसेत् सौम्ये स्फटिकं वह्निकोणके ।
सूर्यकान्तं नैर्ऋते च नीलं वायव्यपङ्कजे ॥ १४४ ॥

ऐशान्ये पुष्यरागं च मध्ये पद्मे च काश्यप ।
समस्तलोहरचितं पद्मं न्यस्य तदूर्ध्वतः ॥ १४५ ॥

*सौवर्णमग्निवसुधासूर्यकान्तं(?)च वह्निके* ।
नैर्ऋते चेन्द्रनीलं च वायव्ये पुष्यरागकम् ॥ १४६ ॥

ऐशान्यपद्मे वैडूर्यं स्फटिकं मध्यपङ्कजे ।
रूप्यमैन्द्रे तथा याम्ये त्रपुं पश्चिमपङ्कजे ॥ १४७ ॥

कृष्णसीसमयःसारं या(सौ?)म्ये ताम्रं तु निक्षिपेत् ।
वह्नौ नैर्ऋत *एवं कं(?)कृष्णं यो(?)*वायुपङ्कजे ॥ १४८ ॥

---

140–(a) A My. श्च तिसृभि° for श्चतसृभि°
–(d) BKs. My. मेदा M देव° for हेम°
ABKs. M. My. °जल्प्य for ° जप्य

कांस्यमीशानपद्मे स्यात् स्वर्णं मध्यमपङ्कजे ।
सर्वलोहमयं पद्मं मध्यमाम्भोजमध्यतः ॥ १४९ ॥

विन्यस्य तस्योपरि च कच्छपं स्वर्णनिर्मितम् ।
देवीं च वसुधां न्यस्य नागराजं च रूप्यजम् ॥ १५० ॥

प्रणवेनैव विन्यस्य सकलं वस्तुजालकम् ।
हरितालं छिन्नपिष्टमञ्जनं च सुराष्ट्रजम् ॥ १५१ ॥

ऐन्द्रादिदिक्षु हृदये मांसीं द्विजवरात्मज ।
वचां बिल्वं च विन्यस्य कोणेषु रजनीं पुनः ॥ १५२ ॥

सहदेवीं विष्णुपूर्वां क्रान्तामैन्द्रद्यां क्रमान्न्यसेत् ।
मध्यमे शङ्खपुष्पं च मूलमेषां च विन्यसेत् ॥ १५३ ॥

वासुदेवादिमन्त्रैस्तु दिक्षु कोणेषु निक्षिपेत् ।
कोणेष्वध्यक्षपूर्वेषु सर्वद्रव्याणि विन्यसेत् ॥ १५४ ॥

रत्नादीनामलाभे तु मौक्तिकं स्वर्णमेव वा ।
रजतं वाथ विन्यस्य हुत्वाज्यपयसा द्विज ॥ १५५ ॥

गृहीत्वा प्रणवेनैव प्रागाद्यं मध्यपश्चिमम् ।
संछाद्य नववस्त्रेण सुधयालिप्य देशिकः ॥ १५६ ॥

अभ्यर्च्य गन्धपुष्पाद्यैः पीठं तस्योर्ध्वतो न्यसेत् ।
कारयित्वा च सुश्लिष्टं गर्ते पद्मं हिरण्मयम् ॥ १५७ ॥

तदूर्ध्वे गरुडं हैमं लघुरूपं निवेश्य च ।
पञ्चगव्यं फलं पुष्पमोषधीरपि विन्यसेत् ॥ १५८ ॥

मन्त्रेण द्वादशार्णेन पुनः पैठीयदेवताः ।
कालकूर्मादयः पूज्यास्तत्तन्मन्त्रैरनुक्रमात् ॥ १५९ ॥

तैरेव हुत्वा गत्वा च समीपं कौतुकस्य च ।
नत्वा हृदयमन्त्रेण निरस्याच्छादितं पटम् ॥ १६० ॥

---

150-(b) ABM स्ववेशम् for कच्छपम्

भावयित्वा प्रबुद्धं च विभुं विज्ञापयेत्ततः ।
पुण्डरीकाक्ष भगवन् सर्वलोकहिताय च ॥ १६१ ॥

त्वद्भक्तानां विशेषेण विप्रादीनां महात्मनाम् ।
प्रासादे स्थापयामि त्वां बिम्बरूपिणमव्ययम् ॥ १६२ ॥

संनिधत्स्वात्र देवेश क्षमस्व च दयां कुरु ।
इत्थं विज्ञाप्य देवेशमुत्तिष्ठेत्यादिकं मनुम् ॥ १६३ ॥

पठन् बिम्बं समुत्थाप्य शयानं मूर्तिपैः सह ।
यानमारोप्य पुरतः शिवसंकल्पमुच्चरन् ॥ १६४ ॥

प्रदक्षिणं परिभ्राम्य वेदघोषादिभिः सह ।
अतो देवेतिमन्त्रेण प्रविश्याभ्यन्तरं द्विज ॥ १६५ ॥

पुण्याहवाचनं कृत्वा पौरुषं सूक्तमुच्चरन् ।
प्रणवद्वयमध्यस्थद्वादशाक्षरविद्यया ॥ १६६ ॥

मुहूर्ते सुशुभे प्राप्ते कुम्भीकृत्य हृदन्तरे ।
ध्यायन् विष्णुं परतरं परस्माच्छ्रीनिकेतनम् ॥ १६७ ॥

श्वभ्र(श्रे ?)पीठस्य तां मूर्तिमचलां संनिवेश्य च ।
समसूत्रेण संस्थाप्य नतोन्नतविशेषवित् ॥ १६८ ॥

वायुं विरेचयेत्पश्चाद्वाङ्मन्त्रेणैव मन्त्रवित् ।
द्विषडर्णेन दत्वार्घ्यमस्त्रेण हृदयेन च ॥ १६९ ॥

वज्रलेपितबिम्बं तद् दृढं निश्चलतां नयेत् ।
ततः स्वमन्त्रगगनात् पूर्णचन्द्रमसाकृतिम् ॥ १७० ॥

ध्यात्वा तत्स्थसुधौघेन प्रतिमामभिषिच्य च ।
ततस्तु नवभिः कुम्भैः स्नापयेत् परमेश्वरम् ॥ १७१ ॥

ततो निरुदकीकृत्य गर्भगेहं समन्ततः ।
वस्त्रद्वयेन तद्बिम्बमधरोत्तरगेन च ॥ १७२ ॥

दृढं संवेष्टयित्वा च यथाशोभं च काश्यप ।
हृदयस्थं तु तद्बिम्बं तत्सूर्यशतदीधितिम् ॥ १७३ ॥

विचिन्तयेत् परं रूपं व्याप्तं तेनैव चिन्तयेत् ।
गर्भादिशिखरान्तं च बहिरन्तश्च तं(?)मुने ॥ १७४ ॥

अङ्गानां त्रिविधं षट्कं न्यसेद्ब्रह्मशिलादिषु ।
मन्त्ररूपं तु यत्स्थूलं तत्राधारशिलाभवम् ॥ १७५ ॥

सूक्ष्मं ज्ञानादिगुणकं पीठयुक्तं तु तं स्मरेत् ।
*गुरूणां भागसंस्थं(?)* तत्परं बिम्बं च संस्मरेत् ॥ १७६ ॥

पीठदेशे पीठमन्त्रान् सर्वानेव निवेशयेत् ।
प्रतिमादेहसंस्थांश्च सर्वमन्त्रान् द्विजोत्तम ॥ १७७ ॥

तत्त्वन्यासदिकान् सर्वान् स्फुरत्तारकरूपवत् ।
विभाव्याथ लयायोक्तं विधाय च जगद्गुरुम् ॥ १७८ ॥

तत्पादाब्जयुगं पश्चात्कराभ्यामवलम्ब्य च ।
शिरो निवेश्य तत्रापि गुरुर्विज्ञापयेत् प्रभुम् ॥ १७९ ॥

भगवन् पुण्डरीकाक्ष शरणागतवत्सल ।
मया दत्तां मन्त्रमूर्तिप्रतिष्ठां स्वीकुरु प्रभो ॥ १८० ॥

सांनिध्यं कुरु देवेश त्वमत्र जगतः पते ।
ज्ञानतोऽज्ञानतो वापि प्रभो कृतमिदं मया ॥ १८१ ॥

क्षमस्व कृपया देव कृपया परया मयि ।
वैष्णवाः पार्श्वगा ब्रूयुः करतालं विधाय च ॥ १८२ ॥

एवं स्तुतिवचःस्तोत्रैः स्तुवीत द्विजवरो(स?)त्तम ।
लक्ष्म्यादिशक्तिसहितं स्थापनं यदि काश्यप ॥ १८३ ॥

---

175-(d) My. तद्दृढाधारशैलगम् ।

176-(c) Ks. My. गुणविभाग M गुरुणा भाग for गुरूणां भाग*

बिम्बेन सहितेनैव सर्वं कर्म समाचरेत् ।
परिवारप्रतिष्ठानं यथास्थानं च कारयेत् ॥ १८४ ॥

मासेषु चैत्रवैशाखज्येष्ठेष्वपि च फाल्गुने ।
पौष्करे तु विधातव्या प्रतिष्ठा मधुविद्विषः ॥ १४५ ॥

यजमानानुकूलेषु दिनेषु सुशुभेष्वपि ।
पुनर्वस्वोरुत्तरेषु रोहिण्यां श्रवणे तथा ॥ १८६ ॥

रेवतीपुष्यहस्तेषु तथाश्विन्यां द्विजोत्तम ।
सिते पक्षे तु पञ्चम्यां दशम्यामपि वा द्विज ॥ १८७ ॥

त्रयोदश्यां पौर्णमास्यां तिथिष्वेतासु कारयेत् ।
सोमसौम्यगुरूणां च वाराः शुक्रस्य च द्विज ॥ १८८ ॥

प्रशस्ताः स्थापनविधौ श्रियो भर्तुर्मुनीश्वर ।
गुरौ शुक्रे च मतिमान(?)नस्तंगतयोर्द्वयोः ॥ १८९ ॥

स्थिरराशिषु चैव स्यात् प्रतिष्ठा मधुविद्विषः ॥

**इति पञ्चरात्रे महोपनिषदि विश्वामित्रसंहितायां**
**प्रतिष्ठाविधिर्नाम चतुर्दशोऽध्यायः ॥**

---

187-(b) ABKs. M विश्वा for श्विन्याम्

# पञ्चदशोऽध्यायः

काश्यपः—

मण्डलस्य विधानं मे वक्तुमर्हसि सांप्रतम् ।
सर्वकर्मसु देवस्य पूजनं यत्र कथ्यते ॥ १ ॥

विश्वामित्रः—

यज्ञवृक्षोत्थितैः काष्ठैः षडङ्गुलघनान्वितैः ।
द्वादशाङ्गुलविस्तारैश्चतुर्भिश्चतुरश्रकम् ॥ २ ॥

कल्पयेन्मण्डलायामं विस्तारद्विगुणं मुने ।
कोणेष्वेतस्य चतुरो वृत्तांस्तालाष्टकायतान्(?) ॥ ३ ॥

संस्थापयेत्तदूर्ध्वे तु तेषां दारुचतुष्टयम् ।
संनिवेश्य चतुष्कोणं तच्छुभे भूतले न्यसेत् ॥ ४ ॥

तन्मध्ये(ध्यं ?) पूरयेच्छुद्धमृदा मध्यं यथोन्नतम् ।
सुसमं कारयेत्तच्च दर्पणोदरवन्मुने ॥ ५ ॥

गोमयाम्भोभिरालिप्य मण्डलं तत्र विन्यसेत् ।
सूत्राणि सप्तदश च प्राग्च्युदक्चि निपातयेत् ॥ ६ ॥

मेट्पञ्चाशत्समधिकमेवं कोष्ठशतद्वयम् ।
षट्त्रिंशत्स्वेव कोष्ठेषु मध्ये शङ्कुं निधाय च ॥ ७ ॥

सूत्रेण पञ्चवृत्तानि भ्रामयेत्तेषु मध्यतः ।
क्षेत्रं तु कर्णिकायाः स्याद्बहिर्बिम्बं च सूत्रतः ॥ ८ ॥

विभाजयेत् त्रिधा तेषां प्रथमा केसरावनी ।
दलक्षेत्रं द्वितीयं स्यान्नाभिक्षेत्रं तृतीयकम् ॥ ९ ॥

तत्सूत्रवर्त्मना कुर्याद् द्विविधं त्रिविधं तु वा ।
बहिर्मण्डलयुग्मं स्यान्नाभिक्षेत्राद्बहिर्द्विज ॥ १० ॥

अरस्थानं बहिर्नेमिभूरेकं मण्डलं भवेत् ।
अष्टाविंशतिकोष्ठैः स्यादासनं परितो बहिः ॥ ११ ॥

संभवेच्चतुरश्रं तु वीथि: कोष्टैरशीतिभि: ।
बहि: पङ्क्तियुगेन स्याच्चतुरश्रं च तद्बहि: ॥ १२ ॥

कोष्ठद्वादशकं चोर्ध्वे शतं पङ्क्त्योर्द्वयोर्भवेत् ।
प्रतिदिक्केषु(?)कोष्ठेषु कुर्याद् द्वारचतुष्टयम् ॥ १३ ॥

पृथक् कोष्ठचतुष्केण पङ्क्तियुग्मेन काश्यप ।
प्रत्येकं शङ्खविध्यर्थं पुन: कोणचतुष्टये ॥ १४ ॥

मार्जयेत् कोष्ठयुग्मं तु पङ्क्तियुग्मे च काश्यप ।
प्रतिद्वारं तत्समीपे पार्श्वयुग्मे महामते ॥ १५ ॥

अर्धशोभाविधानाय बाह्यानन्तररथ्ययो: ।
कोष्ठद्वयं बहि:पङ्क्त्यामेकैकं तदनन्तरे ॥ १६ ॥

मार्जनीयं तु शोभार्थमेकैकं चान्यतो बहि: ।
कोष्ठत्रयं मार्जनीयं प्रत्येकं द्विजसत्तम ॥ १७ ॥

व्यत्यासेनोपशोभार्थमन्तरेकं बहिर्द्व(स्त्र ?)यम् ।
संमार्जनीयं कोष्ठानां विनियोग: प्रदर्शित: ॥ १८ ॥

यद्वा समन्ता — — — (त्पीठादि ?)करणं च विना मृजेत् ।
विंशाधिकेन कोष्ठानां शतयुग्मेन काश्यप ॥ १९ ॥

आदिपङ्कजमानेन विधायावरणत्रयम् ।
चतुर्दिक्षु चतुर्द्वारं कल्पयेत् कश्यपात्मज ॥ २० ॥

यद्वा यथेष्टककुभि द्वारमेकं प्रकल्पयेत् ।
प्रत्यावरणमेवं च कुर्याद् द्वादशपङ्कजम् ॥ २१ ॥

---

16–(a) ABKM अथ for अर्ध
17–(a) My. शेषाणाम् for शोभार्थम्
–(b) My. बहिरन्यत: for चान्यतो बहि:
–(c) A द्वयम् for त्रयम्
18 & 19 ABKM. om.
21–(a) ABKM. तदभीष्टदशभि: for यथेष्टककुभि

एकैकं कोणदेशेषु द्वाराणां पार्श्वयोर्द्वयम् ।
दलद्वादशकोपेतं कर्णिकाकेसरान्वितम् ॥ २२ ॥

अर्धेनाद्यस्य पद्मस्य पद्मान्यन्यानि कल्पयेत् ।
पद्मे तु मध्यमे कुर्याद्बिन्दून् द्वादश काश्यप ॥ २३ ॥

कर्णिकायां केसरोर्व्यां शतं नवतिसंयुतम् (?) ।
रेखाणां च विधायाथ दलभूमौ चतुष्टय(र्दिश?)म् ॥ २४ ॥

कोणेषु च चतुर्विंशद्रेखायुग्मं दले भवेत् ।
तत्सूच्याग्रं चितं(?) मध्ये कुर्यादुपदलान्यपि ॥ २५ ॥

अरक्षेत्रे प्रतिदिशमरे द्वे द्वे विदिक्षु च ।
तस्यैकैकमराणां स्याद् द्वादशैव द्विजोत्तम ॥ २६ ॥

पद्मपत्रसमानानि तुल्यानीन्दीवरच्छदैः ।
यद्वा यवोदराभानि मातुलुङ्गाकृतीनि वा ॥ २७ ॥

पिपीलिकोदराभानि यथान्योऽन्यसदृंशि च ।
एतेषामपि मध्यानि तुल्यानि स्युः परस्परम् ॥ २८ ॥

एवंविधं प्रशस्तं स्याद्वासुदेवसमर्चने ।
नारायणार्चने पूर्वं बिम्बाद्याः कथिता मया ॥ २९ ॥

*अष्टावष्टौ तु कार्याणां सबीजनावनिर्भवेत्* (?) ।
षट्त्रिंशत्तन्तुकोष्ठानि मार्जनीयानि काश्यप ॥ ३० ॥

---

23–(a) BKM ° नाद्येन for °नाद्यस्य
–(b) ABKM पञ्चन्यासं प्र. for पद्मान्यन्यानि
24–(d) My. चतुर्दश for चतुष्टय (र्दिश ?)म्
25–(cd) ABM तत्सूर्याग्रं च तन्मध्ये कुर्याद्दलयुतान्यपि ।
29–(b) My, °भाजने for °मर्चने
30–(ab) My. अष्टौ कार्या केसराणां सषका ? नवतिर्भवेत् ।
–(b) AB. बीजा° for बीज़°

ऋते नाभ्यादिना कार्यं पङ्कजं द्विजसत्तम ।
निधाय शङ्कुं सूत्रेण समं द्वेधा प्रकल्पयेत् ॥ ३१ ॥

आद्यं स्यात् कर्णिकाभूमिर्द्वितीयं कल्पयेत् त्रिधा ।
तेष्वाद्यं केसरक्षेत्रं दलभूमिर्द्वितीयकम् ॥ ३२ ॥

अन्तरालं तृतीयं स्याद् द्वयोश्च दलपीठयोः ।
बिन्द्वादीन् द्वादशाष्टौ वा कुर्यात् कश्यपनन्दन ॥ ३३ ॥

एतत् स्यान्मण्डलं नाम्ना भद्रकं सर्वकामदम् ।
स्वस्तिकस्य चिकीर्षा चेन्मण्डलस्य द्विजोत्तम ॥ ३४ ॥

षट्त्रिंशत्कोण(ष्ठ?)कान् मध्ये मार्जयित्वा निपातयेत् ।
एकादश च सूत्राणि प्राच्यु(च्चु?)दक्षि च काश्यप ॥ ३५ ॥

तेषु द्वे द्वे च संमृज्य मध्ये वीथिं प्रकल्पयेत् ।
प्राच्यामुदीच्यामपि च पश्चात्कुर्याद्विनिर्गमम् ॥ ३६ ॥

प्राच्यां यः(?) कोष्ठयुग्मेन बाह्यपङ्क्तावुदङ्मुखम् ।
प्राच्यां पश्चिमतश्चापि कल्पयेद्दक्षिणामुखम् ॥ ३७ ॥

उदीच्यायां (च्यां च?) तथोदक् स्यात्प्रत्यङ्मुखमपि द्विज ।
प्राच्यां च दक्षिणाग्रं स्यादित्थं स्वस्तिकमण्डलम् ॥ ३८ ॥

षट्त्रिं*शः कोष्ठकः*(शत्कोष्ठकं?) क्षेत्रं पूर्वोक्तं काश्यप द्विधम् (द्विधा?) ।
मध्यतः पङ्कजं कुर्याच्छिष्टं कुर्यात् त्रिधा समम् ॥ ३९ ॥

---

31-(d) ABM द्विविधं सं० for समं द्वेधा

33-(c) B. वीथ्यादि for बिन्द्वादीन्

34-(c) MMy. जिहीर्षा for चिकीर्षा

35-(a) ABM कोष्ठके for कोण(ष्ठ?)कान्

-(c) ABM °दशैक for °दश च

36-(d) BM °र्गतम् for °र्गमम्

38-(cd) ABM. om.

39-(ab) ABM. om.

तेषु द्वाभ्यां तु भागाभ्यां वृतं सूर्यस्य मण्डलम् ।
शिष्टैनैकेन भागेन बहिः स्यादन्तरालकम् ॥ ४० ॥

एतत्स्यान्मण्डलं सौरं सौम्यमेव तदेव हि ।
मण्डलानां च सर्वेषां बाह्यपीठाद्यथापुरम् ॥ ४१ ॥

यद्वा विदध्यात् पीठादीन् विना चक्राम्बुजं द्विज ।
अथवा चक्ररहितं पद्मं स्यात् केवलं द्विज ॥ ४२ ॥

शोभयेन्मण्डलं पञ्चवर्णै रत्नैः(क्तः?)सितादिभिः ।
अथवा चूर्णितै रत्नैर्लोहैर्वा धातुभिस्तथा ॥ ४३ ॥

यद्वा चन्दनकाश्मीरकोष्ठकादिभिरेव वा ।
अथवा पुटकैर्गन्धैः क्षुण्णैर्यज्ञतनूद्भवैः ॥ ४४ ॥

कृष्णैः शुक्लैरपि श्यामैः क्षुण्णैः कौसुम्भपाटलैः ।
चूर्णिताभिर्हरिद्राभिः पुष्पैर्वा पञ्चवर्णकैः ॥ ४५ ॥

शाल्यादीनां तण्डुलैर्वा पिष्टैर्व्रीहिभिरेव वा ।
यद्वर्णा कर्णिका विप्र तद्वस्तूद्भववर्णकैः ॥ ४६ ॥

सर्वत्राकारशोभां च कुर्यान्मुनिवरात्मज ।
कृष्णैः श्यामैरथ भवेदन्तरालाभिपूरणम् ॥ ४७ ॥

कर्णिकां शोभयेत्पीतैः सन्धीः शुक्लैश्च शोभयेत् ।
रक्तैश्च कर्णिकारेखामसितैः केसरस्थलम् ॥ ४८ ॥

पूर्वभागं द्विधा कृत्वा भागं श्वेतैरथोत्तरम् ।
विरामं पीतरक्तैश्च श्वेतैश्च प्रतिकेसरम् ॥ ४९ ॥

---

44–(cd) My. Appear in place of 46 ab.
(c) AB स्फटिकैर्दग्धैः M. स्फटिकैर्दुग्धैः for पुटकैर्गन्धैः
45–(a) ABM पक्वैः शुष्कै° for कृष्णैः शुक्लै°
–(b) My. पट्ट° for पाट°
46–(ab) My. Appear in place of 44 cd.
48–(b) My. रक्तै° for शुक्लै°

कुर्याद्बिन्दून् दलाग्राणि रक्तैरेव विभूषयेत् ।
सितरक्तैर्दलाद्यन्तान्यपि संभूषयेद् द्विज ॥ ५० ॥

सितैश्च सर्ववलयं रक्तैर्वा परिशोभयेत् ।
यथाक्रमं नाभिरेखाः श्यामैः पीतैश्च पाटलैः ॥ ५१ ॥

नाभिद्वन्द्वे श्यामपीतैः श्यामैरेवैकनाभिके ।
कृष्णैरराणामग्राणि पाटलैररसंहतिम् ॥ ५२ ॥

वलयं चाप्यरान्तःस्थमसितैश्चित्रयेद् द्विज ।
नेमिभागं द्विधा कृत्वा पूर्वभागं सितेतरैः ॥ ५३ ॥

सितैर्विचित्रयेच्छेषं नेमिभागं विचक्षणः ।
पीतैः पीठं पाटलैर्वा श्वेतैर्वा परिभूषयेत् ॥ ५४ ॥

लतावितानपत्रादियुक्तां वीथीं च पाटलैः ।
रक्तैः श्वेतैस्तथा पीतैरुपशोभां विभूषयेत् ॥ ५५ ॥

शुक्लै रक्तैस्तथा पीतैः कृष्णैर्द्वाराणि शोभयेत् ।
यथासंख्यान् (ख्यं ?) ततः कोणानुत्तरादीन् सितेतरैः ॥ ५६ ॥

श्वेतैः शङ्खान् विदध्याच्च स्वस्तिकं पाटलं भवेत् ।
अथवा पीतमेव स्याद्रक्तमादित्यमण्डलम् ॥ ५७ ॥

सितं मण्डलमिन्दोः स्यात्सर्वतश्चान्तरालकम् ।
कुर्याद्यथेष्टवर्णाभ्यां हस्तमात्रे च मण्डले ॥ ५८ ॥

रेखाणामुच्छ्र्यं कुर्यात्कनिष्ठाङ्गुलिसंमितम् ।
द्विगुणेऽनामिकामात्रं त्रिगुणे मध्यमासमम् ॥ ५९ ॥

चतुर्गुणे पञ्चगुणे तर्जन्यङ्गुष्ठसंमितम् ।
विधायेत्थं मण्डलं तु यथेष्टं पूजयेत्ततः ॥ ६० ॥

मन्त्राध्वानं कर्णिकायां तत्त्वाध्वानं च केसरे ।
दलेषु वर्णाध्वानं च नाभौ च पदपूर्वकम् ॥ ६१ ॥

---

59-(b) ABM °निभम् for °मितम्

अध्वानं च कलाध्वानमरेषु च विभावयेत् ।
नेम्यां च भुवनाध्वानं कर्णिकाबिन्दुषु द्विज ॥ ६२ ॥

द्वादशाक्षरवर्णानि(र्णास्तु ?) प्रत्येकं च सभाजयेत् ।
परमात्मानमावाह्य सकलीकृत्य च द्विज ॥ ६३ ॥

केसरेषु च लक्ष्म्यादीन् (द्या ?) दले द्वादशमूर्तयः ।
श्रीवत्साद्याः पूजनीयाः व्याप्त्याद्याश्च समन्ततः ॥ ६४ ॥

पूज्या दलान्तवलये विष्णुः स्यात्पूर्वनाभिगः ।
द्वितीयनाभिगो ब्रह्मा तृतीये च त्रियम्बकः ॥ ६५ ॥

मासपा द्वादशाब्जे(रे ?)षु मत्स्याद्यास्तदनन्तरे ।
वलये नेमिवलये प्रथमे शङ्खपूर्वकाः ॥ ६६ ॥

हेतयः पूजतीयाः स्युः पीठकोणचतुष्टये ।
वाराहनारसिंहौ च तथानन्तहयाननौ ॥ ६७ ॥

आग्नेयादि सभाज्याः स्युर्वीथ्यामिन्द्रादयः क्रमात् ।
चतुर्षु द्वारकोणेषु(?) चण्डाद्या द्वारपालकाः ॥ ६८ ॥

रथ्यायामीशकोणेषु (तु ?) विष्वक्सेनं सभाजयेत् ।
पूर्वद्वाराद्बहिर्देशे गरुत्मान् समुपस्थितः ॥ ६९ ॥

सुदर्शनो दक्षिणे च गदा द्वारे च वारुणे ।
उत्तरे पाञ्चजन्यश्च प्रथमायामथावृतौ ॥ ७० ॥

मासेशा विष्णुपूर्वाश्च पद्मेषु द्वादशस्वपि ।
अनन्तरावृतिस्थे च पद्मद्वादशके द्विज ॥ ७१ ॥

वासुदेवादिकाः कृष्णावसाना मूर्तयो द्विज ।
अन्त्यावरणपद्मेषु द्वादशादित्यपूजनम् ॥ ७२ ॥

---

62–(b) My. °भाज° for °भाव°
64–(b) My. शक्त° for मूर्त°
66–(cd) A. om.
67–(ab) A. om.

आराधनं विधेयं स्याद्वासुदेवस्य काश्यप ।
मण्डलेऽस्मिन् महाभाग पश्चान्नारायणे यजेत् ॥ ७३ ॥

बिन्द्वष्टकेऽष्टाक्षराणि केसरेषु च शक्तयः ।
व्याप्त्याद्याः पूजनीयाः स्युर्लक्ष्म्याद्याश्च दलेषु च ॥ ७४ ॥

अरेषु पाञ्चजन्यः स्यात्पूजनीयः पृथक्पृथक् ।
पद्माष्टकेषु त्रिषु च चतुर्विंशतिमूर्तयः ॥ ७५ ॥

त्रिष्वावरणदेशेषु समाराध्याः पृथक्पृथक् ।
इत्थंभूते मण्डलेऽस्मिन् नारायणमनन्यधीः ॥ ७६ ॥

आवाह्याराधयेच्चैनं सर्वदेवेश्वरं हरिम् ।
इत्थं मण्डलयागस्ते मयोक्तः काश्यपात्मज ॥ ७७ ॥

अतः परं च वक्तव्यमस्ति चेद्वक्तुमर्हसि ।

इति पञ्चरात्रे महोपनिषदि विश्वामित्रसंहितायां
[मण्डलयागविधिर्नाम] पञ्चदशोऽध्यायः ॥

---

## षोडशोऽध्यायः

**काश्यपः—**

भगवन् गाधितनय देवस्य हरिमेधसः ।
विशेषदिवसे पूजा विहिता यदि मे गुरो ॥ १ ॥

वक्तुमर्हसि सर्वज्ञ करुणाकर सांप्रतम् ।

**विश्वामित्रः—**

देवदेवस्य विष्णोस्तु विशेषदिवसार्चनम् ॥ २ ॥

---

74–(c) ABM. श्रियादि for व्याप्त्याद्याः
75–(a) My. अष्टारे for अरेषु
78–(b) My. °स्मिन् for °स्ति
Colophon :—My. मण्डलविधानं नाम for [मण्डलयागविधिर्नाम]
2–(a) K तत्त्व° for सर्व°
–(c) KMy. °स्त्वम् for °स्तु

शृणु सानुग्रहं चित्तं मदीयं त्वयि वर्तते ।
मासे शुचौ सिते पक्षे दशम्यां द्विजपुंगव ॥ ३ ॥

कृत्वा प्रातस्तनं कार्यं स्नातः शुक्लाम्बरावृतः ।
धृतोर्ध्वपुण्ड्रो भगवद्धाम गत्वा प्रणम्य च ॥ ४ ॥

विज्ञापयेज्जगन्नाथं देवदेवं श्रियः पतिम् ।
भगवन् सर्वजगतामावास करुणानिधे ॥ ५ ॥

वासुदेव श्रियः कान्त सर्वाधार जगन्मय ।
चातुर्मास्ये विशेषेण पूजा या भवतोदिता ॥ ६ ॥

तया देव समाराद्धुमिच्छामि त्वां जनार्दन ।
जुषस्व तां प्रसीद त्वं शरणागतवत्सल ॥ ७ ॥

इति विज्ञाप्य देवेशं समाराध्य यथापुरम् ।
प्रणम्य दण्डवद् भूमौ स्तुत्वा स्तोत्रैरपि द्विज ॥ ८ ॥

प्राप्ते मध्याह्नसमये गत्वा च सरितं शुभाम् ।
तत्र माध्याह्निकीं सर्वां तत्क्रियां समवाप्य च ॥ ९ ॥

संप्राश्य पञ्चगव्यं च देवस्य निकटं व्रजेत् ।
तत्रापि च यथापूर्वं विधाय यजनं हरेः ॥ १० ॥

निर्गत्य मण्डपे तत्र यथापूर्वं स्वलंकृतम् ।
वितानध्वजमुक्तास्रक्कुसुमस्रग्भिर्विभूषिते ॥ ११ ॥

यज्ञवृक्षोद्भवैश्चैव चतुर्भिस्तोरणैर्वृते ।
कुम्भाष्टकैश्च परितः पार्श्वयोः संस्थितैर्वृते ॥ १२ ॥

चतुर्द्वारे तथा लिप्ते गोमयाद्भिः समन्ततः ।
चित्रिते च सुधाचूर्णैर्मध्ये चक्राब्जमण्डले ॥ १३ ॥

---

6–(c) A. चातुरात्म्यादिभेदेन
My. °स्यादिशेषेण for °स्ये विशेषेण

7–(b) My. मम चापलात् for त्वां जनार्दन

मण्डलेशानभागे च शालिभिस्तण्डुलैस्तिलैः ।
मध्ये मध्ये च विस्तीर्णैः पटैः शुद्धैः समावृते ॥ १४ ॥

माहेन्द्रमण्डले लिप्ते कुम्भं च शुभलक्षणम् ।
तन्तुभिर्वेष्टितं चैव कालमण्डलवर्जितम् ॥ १५ ॥

वेष्टितं क्षौमयुग्मेन सुशुभेन नवेन च ।
सरत्नं च सहेमाब्जं सकूर्चं च सपल्लवम् ॥ १६ ॥

सफलं सापिधानं च स्थापयित्वा समन्ततः ।
एवंविधं च करकं तस्य दक्षिणतो न्यसेत् ॥ १७ ॥

कुम्भाष्टकं च परितः स्थापयित्वाष्टदिक्ष्वथ ।
मण्डलस्योत्तरे भागे कुण्डं कृत्वा विधानतः ॥ १८ ॥

तन्मध्ये वेदिसंस्थं तं प्रतिष्ठाप्य हरिं पुनः ।
कुम्भे च मण्डले चैव देवमावाह्य पूजयेत् ॥ १९ ॥

अन्नं चतुर्विधं चैव निवेद्य परमात्मने ।
कुण्डसंस्थितदेवेशं समिद्भिः सप्तभिः क्रमात् ॥ २० ॥

आराध्य चरुशेषं च स्वयं प्राश्यापि वाग्यतः ।
अङ्कुरानर्पयित्वा च गत्वा देवस्य संनिधिम् ॥ २१ ॥

पूजयित्वा च देवेशं यथापूर्वमतन्द्रितः ।
मण्डपे च समागत्य जपस्तोत्रादिभिर्निशाम् ॥ २२ ॥

नीत्वा जागरणेनैव प्रभाते स्नानपूर्वकम् ।
विधारयन् सान्ध्यमपि चात्मनापि यतात्मवान् ॥ २३ ॥

आगत्य मण्डपं तत्र द्वारतोरणपूर्वकम् ।
सभाजनं विधायाथ कुम्भमण्डलयोरपि ॥ २४ ॥

---

14–(b) B सितैः K शुभैः for तिलैः
23–(d) ABM °नः प्रियमा° for °नापि यता°
K यच्चात्मप्रियमा° for चात्मनापि यता°
24–(d) My. कुण्ड for कुम्भ

निवेदनान्तं सकलं क्रियाजातं समाप्य च ।
विशेषयजनं कृत्वा देवदेवस्य वै हरेः ॥ २५ ॥

सायंकाले तु संप्राप्ते कृत्वा सायंतनं विधिम् ।
आराध्य भगवन्तं च वासुदेवं सनातनम् ॥ २६ ॥

कराब्जे शयनार्चाया बध्वा मङ्गलकौतुकम् ।
आत्मनश्च करे बध्वा कौतुकं स्वर्णनिर्मितम् ॥ २७ ॥

प्रार्थयित्वा च तं देवं बहिर्निर्गमनाय च ।
आरोप्य यानं देवेशं धाम नीत्वा प्रदक्षिणम् ॥ २८ ॥

आगत्य यागसदनं सौवर्णे विष्टरोत्तमे ।
मण्डलाभिमुखं देवमध्यास्याथ सभाजयेत् ॥ २९ ॥

परमान्नं निवेद्यैव कुम्भमण्डलयोरपि ।
हुत्वा चाष्टोत्तरशतं मूलमन्त्रेण मन्त्रवित् ॥ ३० ॥

कुम्भाष्टके च परितः पूजयित्वेन्द्रपूर्वकान् ।
बलिं च कुमुदादिभ्यो लोकपालेभ्य एव च ॥ ३१ ॥

दिक्ष्वष्टासु च विन्यस्य दिगीशेभ्यश्च सत्तम ।
स्थापयित्वा च कलशान् पञ्चविंशतिसंख्यकान् ॥ ३२ ॥

स्नापयित्वा च देवेशं शयने कल्पिते पुरा ।
शालीनां पञ्चभिर्भारैस्तण्डुलैश्च तिलैरपि ॥ ३३ ॥

विस्तीर्णप्रच्छदपटैः कल्पितैः कम्बलैरपि ।
नानावर्णैर्महार्घैश्च सोपधानचतुष्टयैः ॥ ३४ ॥

व्याघ्रचर्म समास्तीर्य तस्योर्ध्वे क्षौमसंज्ञके ।
शाययित्वा जगन्नाथं रक्षार्थं चायुधाष्टकम् ॥ ३५ ॥

---

25-(cd) ABM ° नान्तं तु कृत्वा देवस्य for °नं कृत्वा देवदेवस्य
26-(b) K. सन्ध्यादिकं स्वकम् for सायंतनं विधिम्
32-(b) ABM हेतीशेभ्यस्तथैव च ।
K. हेतीशे° for दिगीशे°

संस्थाप्य पूजयित्वाथ मुखवर्जं च वाससा ।
देवमाच्छाद्य कुम्भं च शिरःस्थाने निवेश्य च ॥ ३६ ॥

नृत्तगीतादिभिश्चैव वेदानामपि घोषणैः ।
जागरेण नयेद्रात्रिमनश्नन्नेव काश्यप ॥ ३७ ॥

ब्राह्मे मुहूर्ते चोत्थाय कृत्वा *चैव प्रभातकम्* (प्राभातिकं तथा ?) ।
विधानं च स्वसूत्रोक्तं गत्वा यागार्थमण्डपम् ॥ ३८ ॥

द्वारावरणपूजादि सर्वं परिसमाप्य च ।
स्थापयित्वाथ कलशान् पञ्चविंशतिसंख्यकान् ॥ ३९ ॥

कुम्भमण्डलगं देवमाराध्य च जगन्मयम् ।
करकस्थं च हेतीशं सभाज्य च सुदर्शनम् ॥ ४० ॥

कुम्भे चाष्टार्णमन्त्रेण हुत्वा चाज्यशताहुतीः ।
उत्थाप्य शयनाद्देवं भवभञ्जकमव्ययम् ॥ ४१ ॥

वेद्यामानीय संस्थाप्य कलशैः स्थापितैरपि ।
परिवेष्टय यथाशोभं विष्टरे चोपवेश्य च ॥ ४२ ॥

नीत्वा प्रदक्षिणं धाम कुर्यादुद्घोषणान्वितम् ।
प्रवेश्य भगवद्गेहं सर्वरत्नविचित्रिते ॥ ४३ ॥

बाल*योगे*(?)च पर्यङ्के मृद्वास्तरणसंस्कृते ।
चन्दनागरुकर्पूरधूपिते वासितेऽपि च ॥ ४४ ॥

सुगन्धिभिश्च कुसुमैरामोदितदिगन्तरे ।
उपधानसमायुक्ते महार्घक्षौमसंस्थिते ॥ ४५ ॥

---

38–(b) ABM. °केतनम् for °भातकम्
40–(b) K °मभिवाद्य for माराध्य च
My. मभिराध्य जगत्प्रभुम् ।
41–(d) ABM My. भञ्जनकारणम् for भञ्जकमव्ययम्
42–(c) ABM उपनीय K उपरिष्टात् for परिवेष्टय
44–(b) My. ° स्तृते for °स्कृते

शाययित्वाथ तं देवं क्षौमेणाच्छादितोप(द्य चोप ?)रि ।
रक्षां कृत्वाथ देवस्य हेतीशैः परितः स्थितैः ॥ ४६ ॥

कुमुदादिगणेशांश्च स्थापयित्वा समन्ततः ।
विज्ञाप्य देवदेवं तं गाथया वक्ष्यमाणया ॥ ४७ ॥

लक्ष्मीनाथ जगन्नाथ सर्वलोकैकसंश्रय ।
भक्तानामार्तिहरणे सर्वदा दीक्षित प्रभो ॥ ४८ ॥

योगनिद्रां निषेवस्व देव मासचतुष्टयम् ।
सर्वलोकहितार्थाय कृतार्थीकुरु मां प्रभो ॥ ४९ ॥

इति विज्ञापनं कृत्वा प्रणम्य च गृहं व्रजेत् ।
तस्मिन् दिने प्रभाते च कल्याणार्चां महामते ॥ ५० ॥

निर्गमय्य सभास्थाने सर्वशोभासमन्विते ।
विष्टरे संनिवेश्याथ पूजयित्वाभिषिच्य च ॥ ५१ ॥

महाहविर्निवेद्याथ सर्वव्यञ्जनसंयुतम् ।
माधवं यानमारोप्य सर्वभूषणभूषितम् ॥ ५२ ॥

ग्रामं परीत्य सर्वत्र धाम्नि (म्नः ?) सर्वावृतीरपि ।
प्रदक्षिणं परिभ्राम्य निवेश्य च यथापुरम् ॥ ५३ ॥

निर्गत्य स्वगृहं गत्वा सहितो वैष्णवैर्द्विजैः ।
भुक्त्वा यथेष्टं तेभ्यश्च दद्याच्छक्त्या च दक्षिणाम् ॥ ५४ ॥

आरभ्य तस्माद्दिवसाच्छयानस्य मधुद्विषः ।
विशेषाराधनं कुर्यादुत्थानावधि काश्यप ॥ ५५ ॥

प्रतिमासं विधातव्यं सिते पक्षे श्रियः पतेः ।
द्वादश्यां देवदेवस्य चतुःस्थानसभाजनम् ॥ ५६ ॥

---

49-(d) K. नः for माम्
52-(c) K महार्हम् for माधवम्
-(cd) My. om.
54-(c) ABKM हुत्वा for भुक्त्वा

सिते पक्षे च नभसि द्वादश्यां परिवर्तनम् ।
पार्श्वयोर्देवदेवस्य कारयित्वा सभाजयेत् ॥ ५७ ॥

ऐषस्य शुद्धद्वादश्यामासीनं च प्रकल्पयेत् ।
ऊर्जे मासि सिते पक्षे द्वादश्यां मधुसूदनम् ॥ ५८ ॥

चतुःस्थानेषु संपूज्य पूर्वोक्तेन विधानतः ।
उत्थाप्य च यथापूर्वं कलशैरभिषिच्य च ॥ ५९ ॥

अलंकृत्य निवेद्यान्तं सभाज्य च सुरेश्वरम् ।
सर्ववीथीः परिभ्राम्य मन्दिरान्तः(रं तु ?) प्रवेशयेत् ॥ ६० ॥

शयाने जगतां नाथे व्रतानि शृणु काश्यप ।
कुशोदकं पञ्चगव्यं प्रापणं चानुसेवनम् ॥ ६१ ॥

वर्ज्यानि शृणु विप्रादेर्दिवास्वापः पराशनम् ।
योषित्सेवा तैलसेवा कांस्यपात्रे च भोजनम् ॥ ६२ ॥

मांसाशनममून्याहुर्वर्ज्यानि द्विजपुंगव ।
वैष्णवांश्च यथाशक्ति भोजयेद्दक्षिणामपि ॥ ६३ ॥

दद्यात्तेभ्यश्च तत्प्रीत्या प्रीतः स्यात् पुरुषोत्तमः ।
अथ कृष्णस्य विधिवदाराधनविधिं शृणु ॥ ६४ ॥

श्रावणे मासि पक्षे च कृष्णेऽष्टम्यां प्रजापतेः ।
नक्षत्रे वसुदेवस्य देवक्यां भगवान् हरिः ॥ ६५ ॥

सर्वलोकहितार्थाय भूमेर्भारावतारणम् ।
कर्तुमाविरभूद् भूमौ मध्यरात्रे महामते ॥ ६६ ॥

तज्जन्मदिवसे पूजां सविशेषं समाचरेत् ।
तस्य पूर्वं सप्तमेऽह्नि पञ्चमे वाङ्कुरार्पणम् ॥ ६७ ॥

---

58–(d) M. °सूदनः for °सूदनम्

59–(a) ABM पूज्यः स्यात् for ° संपूज्य

विधाय मण्डपं कुर्याद्यथापूर्वमलंकृतम् ।
कुम्भमण्डलसंस्थानं यथापूर्वं विधाय च ॥ ६८ ॥

सप्तम्यामथ सायाह्ने समाराध्य जगद्गुरुम् ।
विज्ञाप्य देवदेवाय समाराधनकर्म तत् ॥ ६९ ॥

नवनीलघनच्छायहरेर्वा सर्वदेहिनः ।
चतुर्भुजस्य वा हस्ते देवकीतनुजन्मनः ॥ ७० ॥

स्वर्णत्रिनिष्ककं सूत्रं बध्वा मङ्गलकौतुकम् ।
आरोप्य यानं सौवर्णं परिभ्राम्य प्रदक्षिणम् ॥ ७१ ॥

आनीय मण्डपं तत्र जाम्बूनदमये शुभे ।
सिंहासने समारोप्य सभाज्य च यथाक्रमम् ॥ ७२ ॥

द्वारतोरणकुम्भानां मण्डलस्य च पूजनम् ।
विधायोक्तविधानेन नैवेद्यान्तं विधाय च ॥ ७३ ॥

कुण्डेश(च?) द्वादशार्णेन मन्त्रेण विधिवच्चरेत् ।
स्थापयित्वा च कलशान् पञ्चविंशतिसंमितान् ॥ ७४ ॥

स्नापयित्वा च तैर्देवं यथापूर्वं प्रकल्पिते ।
शालीनां दशभारेण तत्प्रमाणैश्च तण्डुलैः ॥ ७५ ॥

तिलैरपि समास्तीर्णैर्नानावर्णैश्च कम्बलैः ।
आस्तृते शयने देवं शाययित्वा जगन्मयम् ॥ ७६ ॥

तत्समीपे समासीनो जितं त इतिपूर्वकैः ।
द्वादशार्णजपैश्चैव गीतनृत्तादिभिस्तथा ॥ ७७ ॥

रजनीं जागरेणैव नीत्वा प्रातश्च तद्दिने ।
स्नातः शुक्लाम्बरधरः स्रग्वी च समलंकृतः ॥ ७८ ॥

---

70–(a) K °नीतनटस्याथ for °नीलघनच्छाय
M °नीत for नील
78–(b) ABMMy. °तुर्दिने for तद्दिने
–(d) ABM प्रह्वी for स्रग्वी

यागमण्डपमासाद्य द्वारपूजनपूर्वकम् ।
कुम्भमण्डलदेवस्य नैवेद्यान्तं सभाजनम् ॥ ७९ ॥

कृत्वा शयानं च विभुं पुण्डरीकायतेक्षणम् ।
श्यामलं बालवपुषं सुस्मिताधरमच्युतम् ॥ ८० ॥

उत्थाप्य जगतां नाथं मण्डपे विनिवेश्य च ।
महाहविःप्रदानान्तं चतुःस्थानस्थितस्य च ॥ ८१ ॥

विधाय यजनं मूलबेरेऽपि सविशेषतः(?) ।
पूर्वाच्च द्विगुणैर्भोगैर्नैवेद्यान्तैः सभाजनम् ॥ ८२ ॥

कृत्वा च दिवसं सर्वं निशापूर्वार्धमेव च ।
गीतैर्नृत्तैर्बहुविधैर्वेदानां श्रावणेन च ॥ ८३ ॥

इतिहासपुराणानि(नां?) वाचनेन क्षपां नयेत् ।
अर्धरात्रे च संप्राप्ते पूजयित्वा सुरेश्वरम् ॥ ८४ ॥

स्नानवेदिं समानीय गन्धतैलं सुसंस्कृतम् ।
उपाकृतं शातकुम्भद्रोणीषु द्विजपुंगव ॥ ८५ ॥

शालितण्डुलभाराणां दशकैः कल्पिते भुवि ।
राशौ सुनिहितं (ते?) पात्रे हेमकलशे निषिच्य च ॥ ८६ ॥

पुण्याहं वाचयित्वा च वैष्णवैर्द्विजपुंगवैः ।
सशङ्खभेरीसंनादैर्देवमूर्ध्नि च सेचयेत् ॥ ८७ ॥

अवशिष्टं च सर्वेषां वैष्णवानां शिरस्स्वपि ।
गायकानां नर्तकानां ताण्डवानां च सर्वशः ॥ ८८ ॥

देशान्त*रगतानां च* (रादागतानां ?) वेश्यानामपि सर्वशः ।
हनूमदादिभक्तैश्च सह मामन्दिरेष्वपि ॥ ८९ ॥

---

86–(d) K °मज्य for °षिच्य

87–(d) M देवम् for देव°

89–(d) ABM °मदिशे° for मन्दिरे°

निक्षिप्य हेमद्रोणीषु निषिञ्चेत् परिचारकैः ।
ये धारयन्ति तत्तैलं शिरोभिर्मनुजा भुजि ॥ ९० ॥

नीरोगाः सुसमृद्धाश्च सर्वे ते यावदायुषम् ।
इह भोगान् परान् भुक्त्वा यान्ति चान्ते परं पदम् ॥ ९१ ॥

माषचूर्णैश्च देवस्य कल्पयित्वाङ्गमर्दनम् ।
तैलापनयनं कृत्वा गन्धामलकपूर्वकैः ॥ ९२ ॥

स्नापयित्वा तदन्ते च यथाशास्त्रं प्रकल्पिते ।
एकाशीतिघटाम्भोभिरभिषिच्य च तन्मयः ॥ ९३ ॥

यथाशोभमलंकृत्य कृष्णं यादवपुंगवम् ।
बलभद्रेण सहितमथवा केवलं द्विज ॥ ९४ ॥

कुम्भमण्डलपूर्वादि पूजनं कारयेद् द्विज ।
निवेद्य पायसादीनि सर्वाण्यन्नोत्तमानि च ॥ ९५ ॥

नवनीतं च सुबहु हेमपात्रे निवेद्य च ।
शुण्ठीपूर्वं (चूर्णं?) शर्करया मिलितं च निवेदयेत् ॥ ९६ ॥

क्षीरं घृतं च सुबहु कदल्यादिफलानि च ।
जाम्बवानि फला*न्यद्य(?) *यत्तत्संपाद्यते नरैः ॥ ९७ ॥

तत्सर्वं देवदेवाय देवकीसूनवे द्विज ।
निवेदयेद्भक्तियुक्तः श्रद्धापूतेन चेतसा ॥ ९८ ॥

क्षीरं निवेदितं तस्मै तस्मिन् काले द्विजोत्तम ।
तावत्कालमनश्नन्त्यः स्नाताः शुद्धाम्बराः स्त्रियः ॥ ९९ ॥

पिबन्ति भक्तिसंयुक्ता वन्ध्याश्चेत्तनयान् बहून् ।
अरोगांश्च सुरूपांश्च विदुषो जनयन्ति ताः ॥ १०० ॥

---

95–(b) My. °कः पूजये° for °नं कारये°
97–(c) ABM. °वं च for ° वानि My जम्ब्वादीनि for जाम्बवानि
98–(d) My. om.
99–(a) My. om.

देवं च यानमारोप्य शिबिकादिं स्वलंकृतम् ।
प्रदक्षिणं परिभ्राम्य ग्रामं मन्दिरमेव च ॥ १०१ ॥

सर्वमङ्गलसंयुक्तं तूर्यरावादिसंयुतम् ।
प्रवेशयेद्गर्भगृहं यथास्थानं निवेशयेत् ॥ १०२ ॥

ततः प्रभृति (त आरभ्य?) दिवसान् त्रीन्वा पञ्चाथ सप्त वा ।
उत्सवं कारयेद्विद्वान् यथाश्रद्धं यथावसु ॥ १०३ ॥

तथा वसन्तसमये मधुमासे द्विजोत्तम ।
सिते पक्षे नवम्यां च तारकेऽदितिदैवते ॥ १०४ ॥

प्रादुर्भूतं च मध्याह्ने मुहूर्तेऽभिजिति द्विज ।
देव्या च सीतया सार्धं लक्ष्मणेनानुजेन च ॥ १०५ ॥

आराधयेज्जगन्नाथं सर्वदेवेश्वरेश्वरम् ।
रामं दशरथाज्जातं कौसल्यायां महामते ॥ १०६ ॥

रावणस्य वधार्थाय(र्थं तु?) राक्षसेशस्य काश्यप ।
संभूतं मानुषे लोके बाणबाहुं धनुर्धरम् ॥ १०७ ॥

बाणबाणासनधरं राघवं लक्ष्मणाग्रजम् ।
पूर्वोक्तेन विधानेन तस्मिन् काले समर्चयेत् ॥ १०८ ॥

इत्येवं तु भिदा पूर्वादवशिष्टं समं द्विज ।
तदे(थै?)व लक्ष्मीसहितं नृसिंहवपुषं हरिम् ॥ १०९ ॥

*हिरण्याक्षासुरगणं धरण्या चाङ्कसंस्थया* (?) ।
*सार्धमुद्धृतया देव्या(?)* यजेत्सर्वार्थसिद्धये ॥ ११० ॥

तपस्याश्वयुजे वापि सिते लक्ष्मीधरं हरिम् ।
यजेत विधिना तेन पूर्वोक्तविधिना द्विज ॥ १११ ॥

---

105–(b) My. शोभने for °ऽभिजिति

107–(d) M. om.

108–(a) M. om.

कार्तिके मासि च तथा पक्षे शुक्लेतरे(?)द्विज ।
द्वादश्यां देवदेवेशं प्रबोध्य पुरुषोत्तमम् ॥ ११२ ॥

अर्चयेच्च यथा देवं कुम्भादिषु च काश्यप ।
कार्तिक्यां पौर्णमास्यां च सर्वदेवेश्वरं हरिम् ॥ ११३ ॥

आराध्य जगतां नाथं संचोदितविधानतः ।
दीपिका दर्शयेच्चैव प्रदोषे शेषशायिने ॥ ११४ ॥

गोपुरेषु च सर्वेषु प्राकारवलयेषु च ।
द्वारदेशेषु सर्वेषु खात्वा(?)स्तम्भान् विशेषतः ॥ ११५ ॥

मण्डपेषु च सर्वेषु दीपानारोपयेत् प्रभोः ।
कल्पयित्वा च कूटादिमध्ये मध्ये च दीपिकाः ॥ ११६ ॥

गव्येनाज्येन चारोप्य देवदेवाय दर्शयेत् ।
मूलबेरस्य पुरतः पात्रं स्वर्णमयं द्विज ॥ ११७ ॥

गव्याज्याढकसंपूर्णं *फल(?)*तन्तुदशावृतम् ।
धान्यराशौ तु संस्थाप्य तस्मिन् दीपं च पूजयेत् ॥ ११८ ॥

अपूपादीनि सर्वाणि भक्ष्याण्यपि निवेदयेत् ।
मासर्क्षेषु च सर्वेषु विषुवायनयोस्तथा ॥ ११९ ॥

संक्रान्तिषु च सर्वेषु(सर्वासु?) द्वादशीषु विशेषतः ।
श्रवणे च पुनर्वस्वोः फल्गुनीषूत्तरेषु च ॥ १२० ॥

विशेषयजनं कार्यं विष्णोर्जिष्णोः सुरद्विषाम् ॥

**इति पञ्चरात्रे महोपनिषदि विश्वामित्रसंहितायां विशेषदिवसपूजा[विधिर्नाम]षोडशोऽध्यायः ॥**

---

112–(b) My. सिते for °तरे

~~118–(b) My. फलं for फल~~

Colophon :—AK. om. विशेषदिवसपूजा

My. चातुर्मास्यादिविशेषयजनं नाम for विशेषदिवसपूजा

# सप्तदशोऽध्यायः

काश्यपः—

श्रुतो नित्योत्सवविधिर्महोत्सवविधेर्मम ।
शुश्रूषा वर्तते ब्रह्मन् तं मे वक्तुं त्वमर्हसि ॥ १ ॥

विश्वामित्रः—

महोत्सवस्त्रिधा प्रोक्तो नित्यो नैमित्तिकस्तथा ।
काम्यश्चेति मया प्रोक्तः प्रथमं ते द्विजोत्तम ॥ २ ॥

शुभे च तिथिनक्षत्रे विषुवायनयोर्द्वयोः ।
संकल्पितावभृथकः सर्वदैवतसेवितः ॥ ३ ॥

ज्ञेयो नैमित्तिक इति निमित्ते सति कल्पितः ।
अनावृष्टौ सुदीर्घायां सति दुर्भिक्षसंभवे ॥ ४ ॥

पतितासु महोल्कासु रात्राविन्द्रधनु*र्दिशि* ।
दर्शने वाल्मीनानां श्वेतकाकस्य दर्शने ॥ ५ ॥

अशनीनां निपाते च दिग्दाहे भूमिकम्पने ।
देवतालयभेदे च पतने चैत्यभूरुहाम् ॥ ६ ॥

देवताप्रतिमानां च कम्पने भेदने तथा ।
महावाते महावृष्टौ ग्रहयुद्धविधानके ॥ ७ ॥

एवमादिषु सर्वेषु महोत्पातेषु सुव्रत ।
एतद्दोषप्रशान्त्यर्थं क्रियते यो महोत्सवः ॥ ८ ॥

स नैमित्तिकनामा स्यादुत्सवो मधुविद्विषः ।
यत्किंचित्काममुद्दिश्य क्रियते यत्फ(यः फ?) लार्थिभिः ॥ ९ ॥

स काम्य इति विज्ञेयो यथेष्टफलदायकः ।
नवाहः सप्तदिवसः पञ्चाहस्त्रिदिनावधिः ॥ १० ॥

---

4-(b) My. कल्पनात् for कल्पितः

5-(b) My. °विन्दुधनुर्दशौ for °विन्द्रधनुर्दिशि

यथाविभवविस्तारं प्रकल्प्यः स महोत्सवः ।
तदर्थं मनसा पूर्वमालोच्यैव प्रकल्पयेत् ॥ ११ ॥

अयने विषुवे वापि मासर्क्षेष्वथवा द्विज ।
पौर्णमास्याममायां वा रोहिण्यां श्रवणे तथा ॥ १२ ॥

प्रतिष्ठादिवसे वापि कल्पयेत्तीथवासरम् ।
ग्रामे वा नगरे वापि पत्तने वा विशेषतः ॥ १३ ॥

बलिप्रदानं रथ्यासु कारयेज्जनसंयुते ।
ग्रामादिरहिते धाम्नि बहिर्नोत्सवमाचरेत् ॥ १४ ॥

धाम्नोऽन्तरे वा कर्तव्यं सर्वेष्वावरणेषु च ।
ग्रामाद्यङ्गे स्वतन्त्रे वा तथा ह्यालययोर्द्वयोः ॥ १५ ॥

उत्सवो यौगपद्येन न कार्यो द्विजपुंगव ।
वास्त्वङ्गदेवतानां च कल्याणं दोषवद्भवेत् ॥ १६ ॥

वर्तमानेऽन्यदेवानामुत्सवे वैष्णवं मत(ह ? )म् ।
कुर्याद्वैष्णवकल्याणे नान्यत्कार्यं (?) कदाचन ॥ १७ ॥

सर्वासां देवतानां हि वासुदेवोऽधिदैवतम् ।
ध्वजारोहणपूर्वे तु वर्तमाने महोत्सवे ॥ १८ ॥

केशवस्यादिदेवस्य न कुर्यान्मानुषं महम् ।
अधिमासे सुराचार्ये शुक्रे चास्तमिते सति ॥ १९ ॥

नोत्सवं प्रथमं कुर्यात्कुर्याच्चेद्राजराष्ट्रयोः ।
जायते सुमहत्क्ले(हाक्ले ? )शो मरणं चोपजायते ॥ २० ॥

---

16-(c) K My. °द्वन्द्व for °नां च

19-(a) ABM °धि for °दि

20-(a) ABM नोत्सवः प्रथमः कल्प्यः

-(c) My. प्रजानां तु for जायते सु

-(d) My. वो for चो

V—18

द्वितीयादौ न दोषः स्यादुत्सवे प्रथमोदितः ।
तीर्थाङ्कुरार्पणदिनात् पूर्वमेकोनविंशके ॥ २१ ॥

दिने ध्वजारोहणं स्यादष्टाविंश(दश?)दिनेऽथवा ।
द्वादशाहेऽथवा कुर्याद्वैनतेयध्वजोच्छ्रयम् ॥ २२ ॥

ध्वजारोहणनक्षत्रान्नवमे सप्तमेऽथवा ।
पञ्चमे वा दिने कुर्यादङ्कुराणां समर्पणम् ॥ २३ ॥

उत्सवोक्तदिनात्पूर्वं कुतश्चित्कारणान्तरात् ।
ध्वजारोहणविघ्नश्चेदुत्पन्नो द्विजपुंगव ॥ २४ ॥

उत्सवारम्भदिवसे कुर्यादेव ध्वजोत्सवम् ।
रात्रौ संताडनं कुर्याद्भेर्यास्तु शुभलग्नके ॥ २५ ॥

मङ्गलाङ्कुरवापं च पालिकासु विधाय च ।
भेरीताडनतः पश्चाद् ध्वजमारोपयेत्तु वा ॥ २६ ॥

कार्पासं वसनं सूक्ष्मं शुक्लं दृढमथाहरेत् ।
हस्तैः षोडशभिर्वापि न्यूनैर्वापि समायतम् ॥ २७ ॥

दशहस्तायतं तस्मादर्धविस्तारसंयुतम् ।
यद्वा यथोदितं कुर्याद्यथाविभवविस्तरम् ॥ २८ ॥

निर्णिज्यालिप्य च खलीं संशोष्यापि विमृज्य च ।
तस्य मध्ये लिखेत् तार्क्ष्यं पीताभं लक्षणान्वितम् ॥ २९ ॥

नवतालसमुत्सेधं द्विहस्तं च सकञ्चुकम् ।
पुष्पाञ्जलिधरं श्वेतवस्त्रवासितविग्रहम् ॥ ३० ॥

दंष्ट्राकरालवदनं दधानं भ्रुकुटीयुत(ग?)म् ।
जानुनोऽधः सुवर्णाभमा नाभेस्तुहिनप्रभम् ॥ ३१ ॥

---

27–(b) K. सुश्लक्ष्णं दृढमा° for शुक्लं दृढमथा°
–(d) My. न्यूनै° for न्यूनै°

कुङ्कुमारुणमा कर्णादा ललाटात् सितेतरम् ।
दधानं नीलनासाग्रं वामपादं च कुञ्चितम् ॥ ३२ ॥

पृष्ठे निविष्टं बिभ्राणं बृहत्पक्षविराजितम् ।
आकाशोद्गमनोद्युक्तं वृत्तरौद्राक्षियुग्मकम् ॥ ३३ ॥

करण्डमकुटोपेतं ललाटालम्बितालकम् ।
हारादिसर्वाभरणभूषितं सुखविग्रहम् ॥ ३४ ॥

यज्ञसूत्रीकृतं शोणं बिभ्राणं वासुकिं तथा ।
वामदोर्दण्डकटकमनन्तं बिभ्रतं सितम् ॥ ३५ ॥

कार्कोटकं पीतवर्णं वक्षसा बिभ्रतं सदा ।
धूम्राभं तक्षकं चैव बिभ्राणं कटिसूत्रकम् ॥ ३६ ॥

रक्ताब्जवर्णपद्माख्यं दक्षिणे श्रवसि स्थितम् ।
पिङ्गलं च महापद्मं वामकर्णे च बिभ्रतम् ॥ ३७ ॥

शङ्खं च तुहिनप्रख्यं दधानं मस्तकोपरि ।
भ्रमराभं च गुलिकं दधानं चाङ्गदीकृतम् ॥ ३८ ॥

पार्श्वद्वयोपरिष्टाच्च विलिखेच्चामरद्वयम् ।
अधोभागेऽम्बुसंपूर्णकुम्भं साङ्कुरपालिकम् ॥ ३९ ॥

विलिखेत्पार्श्वयोश्चैव दीपयुग्मं समुज्ज्वलम् ।
उपरिष्टाल्लिखेच्छत्रं मुक्ताहारविभूषितम् ॥ ४० ॥

पार्श्वयोरुभयोश्चैव शङ्खं चक्रं सखड्गकम् ।
शार्ङ्गं च बाणसहितं गदामपि विलेखयेत् ॥ ४१ ॥

लिखेच्च पञ्चभिर्वर्णैः श्यामवर्णकमन्तरम् ।
ध्वजार्धपरिमाणा स्यात्पताका नैव चित्रिता ॥ ४२ ॥

---

33–(b) ABKM पक्षविक्षेप for बृहत्पक्षवि°
34–(ab) ABKM. om.

जातेऽधिवाससमये निशीथिन्यां गुरुः स्वयम् ।
गत्वा च कारुशालायां नयनोन्मीलनक्रियाम् ॥ ४३ ॥

शिल्पिना संविधायाथ शिल्पिनं परितोष्य च ।
विसृज्य तं स्वर्णमये पात्रे निक्षिप्य तं ध्वजम् ॥ ४४ ॥

तूर्यवादित्रसहितं कृत्वा धामप्रदक्षिणम् ।
प्रवेश्य धामान्तरालं देवस्याग्रे प्रदर्शयेत् ॥ ४५ ॥

यागमण्डपमानीय प्रतिष्ठोक्तक्रमेण तु ।
नयनोन्मीलनादीनि विधाय तदनन्तरम् ॥ ४६ ॥

जलपूर्णकटाहे तु छायामस्याधिवासयेत् ।
आदर्शस्य प्रतिकृतौ स्नपनं विदधीत च ॥ ४७ ॥

अष्टाविंशतिभिर्वापि तथा षोडशभिस्तु वा ।
कलशैः पौरुषेणैव सूक्तेन सह मूर्तिपैः ॥ ४८ ॥

अर्घ्यादिपूजनं कूर्यात् स्वगायत्र्या महामते ।
शालीनां दशभिर्भारैः कल्पिते शयने शुभे ॥ ४९ ॥

तदर्धैस्तण्डुलैस्तस्योपरिष्टाच्च तदर्धकैः ।
तिलैर्मध्ये तु विस्तीर्णैः शुभैर्वस्त्रैः समावृते ॥ ५० ॥

तस्योपरिष्टात् सुशुभैः कम्बलादिभिरास्तृते ।
शाययित्वा पटान्तःस्थं देवं गरुडरूपिणम् ॥ ५१ ॥

तस्य दक्षिणपार्श्वे तु कुम्भं निर्दोषमव्रणम् ।
धान्यराशौ स्थापयित्वा करकं सुशुभं तथा ॥ ५२ ॥

विन्यस्य चाष्टकलशान् परितः सर्वदिक्ष्वपि ।
कुम्भे गरुडमावाह्य करके च सुदर्शनम् ॥ ५३ ॥

कलशेष्वष्टसु तथा शक्रादीनपि पूजयेत् ।
विस्तार्य च गरुत्मन्तं पटस्थं धामसंमुखम् ॥ ५४ ॥

---

54–(b) K. चक्रा° for शक्रा°

आवाह्य तत्प्रतिकृतौ व्याहृतीभिः पतत्प्रभुम् ।
संनिधिं तत्र विप्रेन्द्र गाथया प्रार्थयेत च ॥ ५५ ॥

वेदमूर्ते नमस्तुभ्यं वैनतेय महाबल ।
महाबाहो संनिधत्स्व पटेऽस्मिँस्ते नमो नमः ॥ ५६ ॥

आहूतः कर्मसिद्धिं च विहगेश कुरुष्व नः ।
देवस्योत्सवसंपत्त्यै लोकाह्वानं विधत्स्व च ॥ ५७ ॥

इति विज्ञाप्य गरुडं गायत्र्या स्वीयया पुनः ।
अर्चयित्वार्घ्यपूर्वैस्तु निवेद्य च चतुर्विधम् ॥ ५८ ॥

नैवेद्यजातं सकलं कुम्भान्तःस्थं समर्च्य च ।
नैवेद्यान्ते गरुत्मन्तं पश्चात् स्तोत्रैः स्तुवीत च ॥ ५९ ॥

महाविष्णोर्वाहनाय तार्क्ष्यायामिततेजसे ।
सर्पेन्द्रमृत्यवे तुभ्यं गरुडाय नमोऽस्तु ते ॥ ६० ॥

पक्षीन्द्राय नमस्तुभ्यं स्वाध्यायवपुषे नमः ।
विहगेन्द्र नमस्तेऽस्तु समुत्पाटितकल्पक ॥ ६१ ॥

आहृतामृतकुम्भाय जननीशापमोचिने ।
सुरासुरेन्द्रजयिने नागेन्द्राभरणाय च ॥ ६२ ॥

यदाधारमिदं सर्वं तदाधाराय ते नमः ।
रथन्तरं बृहत्साम यस्य पक्षावुभौ प्रभोः ॥ ६३ ॥

त्रिवृत्साम शिरः प्रोक्तं गायत्री यस्य चाक्षिणी ।
स्तोम आत्मा नमस्तेऽस्तु वामदेव्याङ्गसंपदे ॥ ६४ ॥

---

55—(cd.) BM गरुडमुद्रया प्रार्थयेद् द्विज for विप्रेन्द्र गाथया प्रार्थयेत च ।
56–(d) K पदे for पटे
57–(d) A लोकनाथ for लोकाह्वानम्
BM गाथानां संविधत्स्व नः ।
63–(c) ABM My. ब्रह्म for बृहत्°
–(d) K. पादा† for पक्षा°

नमः प्राणादिवायूनामीशानाय गरुत्मते ।
दोषानपनयाखण्डान् गुणानावह सर्वतः ॥ ६५ ॥

विघ्नानि(?)जहि सर्वाणि(?) मामपि स्वात्मसात् कुरु ।
एवं स्तुत्वा जपेन्मन्त्रं गरुत्मन्तमनन्यधीः ॥ ६६ ॥

ब्रह्मघोषैस्तूर्यनादैर्जागरेण नयेन्निशाम् ।
कवलीकृत्य नैवेद्यं तन्मन्त्रैरभिमन्त्र्य च ॥ ६७ ॥

योषिद्भ्यश्चैव वन्ध्याभ्यो दद्यान्मन्त्राभिमन्त्रितम् ।
ध्यात्वाच्युतं गरुत्मन्तं क्षिपेदञ्जलिषु स्वयम् ॥ ६८ ॥

पिण्डान् स्त्रियो भक्षयित्वा बहून् पुत्रानवाप्नुयुः ।
प्रातःकाले गरुत्मन्तमाराध्य च हवींषि च ॥ ६९ ॥

निवेद्य पटसंस्थं तं भूषयित्वाम्बरादिभिः ।
रथे वा हस्तिपृष्ठे वा शिबिकायामथापि वा ॥ ७० ॥

आरोपयित्वा तद्धाम ग्रामं चैव प्रदक्षिणम् ।
नयेन्मृदङ्गपटहभेरीघोषणपूर्वकम् ॥ ७१ ॥

शङ्खकाहलचिह्नानां नादैर्बहुविधैरपि ।
वेदघोषैर्द्विजानां च गीतैर्नानाविधैरपि ॥ ७२ ॥

आघोष्य पुरतो देवान्नयेयुर्वाहनोद्वहाः ।
स्थानस्थानेषु गीतांश्च श्रावयित्वा पृथग्विधान् ॥ ७३ ॥

दर्शयित्वा च नृत्तानि खाद्यानि च फलानि च ।
मध्ये द्विजोत्तमाः सर्वे पालिकाः साङ्कुरा द्विज ॥ ७४ ॥

नयेयुर्मूर्धभिर्मुख्या वैष्णवा वशिनोऽपि च ।
नयेयुरुत्सवं बिम्बं गरुडस्यान्वगेव तम्(त्?) ॥ ७५ ॥

---

65–(d) ABM °दा for °तः
66–(b) ABM ममापि for मामपि
72–(ab) My. om.

यजमानेच्छया कुर्यान्मङ्गलानि समन्ततः ।
बलिपीठाग्रतो वापि गोपुराद्बहिरेव वा ॥ ७६ ॥

भूमौ खनेद् ध्वजस्तम्भं दारवं दोषवर्जितम् ।
बहिःसारेषु वृक्षेषु विदुः क्रमुकमुत्तमम् ॥ ७७ ॥

चन्दनादि प्रशस्तं स्यादन्तःसारेषु काश्यप ।
वर्ज्यं(र्ज्यो ? ) निःसारदारूत्थं(त्थः ? ) स्तम्भं (म्भः ? )
पक्षीश्वरस्य तु ॥ ७८ ॥

आयामः शततालः स्याद्विंशन्यूनोऽपि वा भवेत् ।
मानाङ्गुलप्रमाणेन स्तम्भस्य द्विजपुंगव ॥ ७९ ॥

उच्छ्रायेण समानो वा प्रासादस्य महामते ।
गोपुरोच्छ्रायमानो वा गरुडस्तम्भ उच्यते ॥ ८० ॥

आधाराणां मस्करस्य पीठानां त्रितयस्य तु ।
मूलेषु छिद्रयुक्तानामग्रे स्याद्विनिवेशनम् ॥ ८१ ॥

द्वितालायामयुक्तानि पीठानि स्युर्महामते ।
तस्यार्धेन च विस्तीर्णान्येतदर्धघनानि च ॥ ८२ ॥

स्थूलानि मूलेष्वग्रेषु सूक्ष्माण्यपि च कारयेत् ।
अयुग्मं पीठयुग्मं तु छिद्रयुक्तं च मस्करम् ॥ ८३ ॥

छिद्रयित्वा निवेश्यैव ध्वजयष्टिं द्विजोत्तम ।
वेणुकं नव वा सप्त पञ्च वा विनिवेशयेत् ॥ ८४ ॥

---

76-(b) My. मण्डला° for मङ्गला°
80-(cd) My. om.
81 My. om.
82-(ab) My. om.
83-(c) K. अग्रिमं पटयुक्तम् My. अश्री/ग्रि ?मं पीठयुक्तम् for अयुग्मं पीठयुग्मम्
-(d) K. स for च
My. यित्वा च सत्कृताम् for °युक्तं च मस्करम्
84-(c) ABM वैणवम् My. फणकम् for वेणुकम्

ईदृशं तद् ध्व(तं ध्व ?)जस्तम्भमुत्तरे पीठपार्श्वके ।
वेदविद्भिर्द्विजवरैर्गुरुरानीय(नाय्य ?)शाययेत् ॥ ८५ ॥

प्रागग्रमुत्तराग्रं वा स्तम्भं प्रक्षालयेत् पुनः ।
स्तम्भमब्लिङ्गकैर्मन्त्रैः प्रच्छाद्य च कुशैरपि ॥ ८६ ॥

ऊर्ध्वाग्रैस्तु शुभैः स्तम्भं दामस्रग्भिश्च वेष्टयेत् ।
अवटे लोहबीजादिशोभिते स्तम्भमीदृशम् ॥ ८७ ॥

स्थापयेद्विष्णुसूक्तेन सुदृढं धामसंमुखम् ।
अङ्गुष्ठमात्रनाहेन(हं च?) पाशेन(शं?) त्रिगुणेन (णमेव?) च ॥ ८८ ॥

ध्वजस्तम्भाग्रविवरे सुदृढं विनिवेशयेत् ।
अथवा स्तम्भमारुह्य ध्वजरज्जुं निवेशयेत् ॥ ८९ ॥

गुरुः सुशोभने लग्ने ध्वजमारोपयेदिति (दपि?) ।
पूर्वभागेऽथवा मध्ये सायाह्ने वापराह्णके ॥ ९० ॥

पौरुषेणैव मन्त्रेण बध्वा घण्टां पताकया ।
सुपर्णोऽसीतिमन्त्रेण ध्वजारोहणमाचरेत् ॥ ९१ ॥

तदारोहणवेलायां गुरुः स्नातः स्वलंकृतः ।
देवमुत्सवबेरस्थं स्थापयित्वास्य संमुखम् ॥ ९२ ॥

अलंकृते मण्डपे च वितानैर्मौक्तिकैः शुभैः ।
लम्बिताभिर्विचित्राभिर्मालिकाभिः समन्ततः ॥ ९३ ॥

परार्ध्यैः क्षौमपट्टैश्च वेष्टितस्तम्भसंचयैः ।
गन्धोदकाद्यैः सान्द्रं च संसेवितपुरोभुवि ॥ ९४ ॥

मुक्तपुष्पैर्बहुविधैर्गन्धामोदितदिङ्मुखैः ।
समन्तात् संप्रकीर्णैश्च साङ्कुरैः पालिकागणैः ॥ ९५ ॥

---

85–(b) A मुक्तम् BM युक्तम् for मुत्त° K°मुत्तमम् for °मुत्तरे
ABM पीठाग्रपार्श्वगे for °रे पीठपार्श्वके

94–(c) ABM गन्धोदकाद्यैः सान्द्रम्

सर्वत: संवृते मध्ये निक्षिप्ते कनकासने ।
सुखासीनाय देवाय सेविताय द्विजोत्तमैः ॥ ९६ ॥

अर्चिताय च गन्धाद्यैर्निवेद्यापूपपूर्वकम् ।
नानाविधं खाद्यगणं फलैर्बहुविधैः सह ॥ ९७ ॥

ताम्बूलवीटीर्बहुधा पाण्डराः प्रियदर्शनाः ।
तैलाधिवासितानेकपूगीफलसमन्विताः ॥ ९८ ॥

निवेद्य च द्विजाग्रे(ग्र्ये?)भ्य: सेवकेभ्य: प्रदाय च ।
उर्वशीमेनकारम्भासंनिभाभिः पृथक् पृथक् ॥ ९९ ॥

नर्तकीभिर्दर्शयित्वा नृत्तजातमनन्तरम् ।
स्तम्भमूले तु निर्माय गरुडं पततां वरम् ॥ १०० ॥

तन्मध्ये परितः स्तम्भं कल्पयित्वा सरोरुहम् ।
मूर्तिपैः सह पक्षीन्द्रस्तोत्रमन्त्रादिजापकैः ॥ १०१ ॥

पुण्याहवाचनं कृत्वा कुम्भं कलश(रक?)संयुतम् ।
प्रोक्षयित्वा तदम्भोभिर्गरुडं बलसंयुतम् ॥ १०२ ॥

स्तम्भं चेन्द्रादिनाभ्यर्च्य मन्त्रोच्चारणपूर्वकम् ।
कलशस्थैर्जलैः प्रोक्ष्य विज्ञाप्य च गरुत्मते ॥ १०३ ॥

सर्वासुरगणोत्साहनिवारण(क?) खगेश्वर ।
पटेऽस्मिन् सन्निधाय त्वमुत्सवावभृथावधि ॥ १०४ ॥

पक्षविक्षेपमरुता विघ्नौघं विनिवारय ।
इति विज्ञापनं कृत्वा पृथुकापूपसंचयम् ॥ १०५ ॥

---

100–(d) My. पटसंस्थितम् for पततां वरम्

101–(c) My. °द्रैः for °द्र°

102–(c) My. तथा° for तद°
–(d) My. पटसंस्थितम् for बलसंयुतम्

103–(a) K. नाथानाम् for °नाभ्यर्च्य

अन्नं चतुर्विधं चैव घृताक्तं फलसंयुतम् ।
नानोपदंशसंयुक्तं नैवेद्यं विनिवेद्य च ॥ १०६ ॥

देवमारोप्य शिबिकां नीत्वा ध्वजसमीपकम् ।
दर्शयित्वा च पतगमाह्वानार्थं दिवौकसाम् ॥ १०७ ॥

ब्रह्माण्डमध्यसंस्थानां सर्वेषामपि काश्यप ।
आज्ञापयित्वा देवेन पाशेन च खगेश्वरम् ॥ १०८ ॥

आरोप्य स्तम्भशिरसि बध्वा पाशेन निश्चलम् ।
प्रवेश्य देवं धामान्तर्मण्डपादौ निवेशयेत् ॥ १०९ ॥

तदाप्रभृति पक्षीशं त्रिसन्ध्यासु च पूजयेत् ।
अर्घ्यादिभिर्निवेद्यान्तैर्भोगजातैर्दिने दिने ॥ ११० ॥

प्रदीपयेदनिर्वाणप्रदीपं चास्य संनिधौ ।
मण्डपस्थाय देवाय निवेद्य च महाहविः ॥ १११ ॥

होमान्तमर्चयित्वाथ रात्रावपि सभाज्य च ।
ध्वजपीठाग्रगां भूमिं गोमयेनोपलिप्य च ॥ ११२ ॥

चतुरश्रं सुधाचूर्णैः शोभयित्वा च तत्र च ।
शालीनामष्टभिर्भारैः पीठिकां परिकल्प्य च ॥ ११३ ॥

तन्मध्ये कालचक्रं च लिखित्वा कालरूपिणम् ।
पुरुषं पुण्डरीकाक्षं सभाज्य समनन्तरम् ॥ ११४ ॥

देवमाराध्य तत्रैव संमुखीनं निवेश्य च ।
अर्घ्यादिभिर्निवेद्यान्तैर्भोगैस्तमभिपूज्य च ॥ ११५ ॥

कृत्वा पूर्णावसानं च भेरीताडनमाचरेत् ।
तत्प्राच्यां शङ्खनिचयं वह्निकोणे च काहलान् ॥ ११६ ॥

---

109–(c) ABM प्रपायां देवमथवा
110–(b) BKM °ध्यां च प्र° for °ध्यासु च
112–(c) K My. °ग्रतो for °ग्रगाम्
116–(c) K My. निकरम् for निचयम्

दक्षिणे मर्दलं वंशान् नैर्ऋते स्थापयेदपि ।
मृदङ्गं पश्चिमायां च झल्लरीं पश्चिमोत्तरे ॥ ११७ ॥

कांस्यतालसमायुक्तां विन्यस्य तदनन्तरम् ।
उत्तरस्यां च पटहान् सहस्रपटहान् न्यसेत् ॥ ११८ ॥

ऐशान्यां मड्डुकां ढक्कासंयुतां विनिवेशयेत् ।
तत्पार्श्वे दक्षिणे स्थाप्य नर्तक्यो गायकानपि ॥ ११९ ॥

एवं क्रमेण संस्थाप्य यथाविभवविस्तरम् ।
भेरीं संप्रोक्ष्य वासोभ्यां वेष्टयित्वा समन्ततः ॥ १२० ॥

आकाशं शब्दनिलयं भेर्यां ध्यात्वा प्रपूजयेत् ।
ततः स्नातः पारशवः श्वेतवस्त्रस्रगन्वितः ॥ १२१ ॥

सपवित्रः सोपवीतः प्रविशेद्देवसंनिधिम् ।
अस्त्रेण तं प्रोक्षयित्वा मुहूर्ते शोभने गुरुः ॥ १२२ ॥

प्रक्षाल्य कोणं संप्रोक्ष्य ध्यायन् हयमुखं हरिम् ।
त्रीन् वारान् ताडयित्वाथ दत्वा पारशवाय तम् ॥ १२३ ॥

ततः पारशवः कोणमादाय पुरुषोत्तमम् ।
भेरीमध्ये चिन्तयित्वा श्रीभूमी पार्श्वयोर्द्वयोः ॥ १२४ ॥

ताडयेच्च यथाकामं दर्शयन् हस्तकौशलम् ।
देवतावाहनकरीं गाथां संश्रावयेद्विभुम् ॥ १२५ ॥

तत्काले देवसंघस्य प्रीणनाय तु गायकैः ।
तत्तद्गाथाश्च रागांश्च गीतानि श्रावयेत् पृथक् ॥ १२६ ॥

नृत्तगीतैश्च तृप्त्यर्थं तेषां नृत्तादि दर्शयेत् ।
बलिं प्रदाय तेभ्यश्च सर्वभोगसमन्वितम् ॥ १२७ ॥

देशिकः प्राङ्मुखो भूत्वा तच्छिष्यस्तत्सुतोऽपि वा ।
स्वरेणोच्चतरेणैव पठेदञ्जलिपूर्वकम् ॥ १२८ ॥

---

**128–(c) K. °णोच्चेन तारेण for °णोच्चतरेणैव**

आगच्छतामरगणाः प्रागाशां येऽधिशेरते ।
विरूपाश्च सुरूपाश्च सपर्यामुद्यतामिमाम् ॥ १२९ ॥

गृहीत्वा पान्तु नस्तृप्ताः कुमुदस्यानुयायिनः ।
महं त्विममुपायान्तु प्रीतास्तेभ्यो नमोऽस्तु वः ॥ १३० ॥

अनेन मन्त्रेणावाह्य कुमुदं सगणं तथा ।
अर्घ्यादिभिः समभ्यर्च्य पायसं च निवेदयेत् ॥ १३१ ॥

ततः शङ्खरवैश्चैव काहलस्वनसंयुतैः ।
महद्भिस्तूर्यघोषैश्च तद्वाद्यश्रावणेन च ॥ १३२ ॥

तत्संगीतैश्च नृत्तैश्च प्रीणयेत्तं गणाधिपम् ।
ततश्चाग्नेयकोणस्थं प्राङ्मुखः श्रावयेदिदम् ॥ १३३ ॥

आगच्छतामरगणा आग्नेय्या(यी ?)मधिशेरते ।
भीमाभीममुखा रौद्राः सपर्यामुद्यतामिमाम् ॥ १३४ ॥

गृहीत्वा पान्तु नस्तृप्ताः कुमुदाक्षानुयायिनः ।
महं त्विममुपायान्तु प्रीतास्तेभ्यो नमोऽस्तु वः ॥ १३५ ॥

अनेन कुमुदाक्षं तमावाह्य गणनायकम् ।
यथापुरं तोषयित्वा याम्यां दिशि(म्याशायां?) ततः परम् ॥ १३६ ॥

आगच्छत पितृगणा याम्याशां येऽधिशेरते ।
दारुणारुणरूपाः स्युः सपर्यामुद्यतामिमाम् ॥ १३७ ॥

गृहीत्वा पान्तु नस्तृप्ताः पुण्डरीकानुयायिनः ।
महं त्विममुपायान्तु प्रीतास्तेभ्यो नमोऽस्तु वः ॥ १३८ ॥

---

**132–(d)** K. om.

**133–(a)** K. om.

My. नृत्यै° for नृत्तै°

**134–(a)** BKM My. °नल for मर

**137–(bc)** A. om.

**138–(d)** A. om.

अनेन पुण्डरीकाक्षमावाह्य गणनायकम् ।
तोषयित्वा च गत्वा च यातुधानदिशं प्रति ॥ १३९ ॥

आगच्छत गणाः क्रूरा नैर्ऋत्यां(तीं?) येऽधिशेरते ।
क्रव्याशनाः क्रूरधियः सपर्यामुद्यतामिमाम् ॥ १४० ॥

गृहीत्वा पान्तु नस्तृप्ता वामनस्यानुयायिनः ।
महं त्विममुपायान्तु प्रीतास्तेभ्यो नमोऽस्तु वः ॥ १४१ ॥

इत्यावाह्य गणेशं तं वामनं पूजयेत्ततः ।
पश्चिमाशां ततो गत्वा शङ्ककर्णं गणेश्वरम् ॥ १४२ ॥

आगच्छताहिपतयः प्रतीच्या(ची?)मधिशेरते ।
महाविषा दन्दशूकाः सपर्यामुद्यतामिमाम् ॥ १४३ ॥

गृहीत्वा पान्तु नस्तृप्ताः शङ्ककर्णानुयायिनः ।
महं त्विममुपायान्तु प्रीतास्तेभ्यो नमोऽस्तु वः ॥ १४४ ॥

इत्यावाह्य तमिष्ट्वा च गत्वा वायुदिशं ततः ।
आयान्तु गन्धर्वगणा वायव्यां(वीं?) येऽधिशेरते ॥ १४५ ॥

सुदर्शना भीमवेगाः सपर्यामुद्यतामिमाम् ।
गृहीत्वा पान्तु नस्तृप्ताः सर्पनेत्रानुयायिनः ॥ १४६ ॥

महं त्विममुपायान्तु प्रीतास्तेभ्यो नमोऽस्तु वः ।
अनेनावाह्य सगणं सर्पनेत्रं तु तोषयेत् ॥ १४७ ॥

उत्तरां ककुभं गत्वा सुमुखं तु गणाधिपम् ।
आगता(यात?) वै यक्षगणा उदीचीं येऽधिशेरते ॥ १४८ ॥

विरूपा दण्डहस्ताश्च सपर्यामुद्यतामिमाम् ।
गृहीत्वा पान्तु न स्तृप्ताः सुमुखस्यानुयायिनः ॥ १४९ ॥

---

146–(d) BMMy. सर्व° for सर्प°

147–(d) BKMMy. सर्व° for सर्प°

महं त्विममुपायान्तु प्रीतास्तेभ्यो नमोऽस्तु वः ।
इति पूर्ववदावाह्य सुमुखं तोषयेत्ततः ॥ १५० ॥

आयान्तु(त?) पैशाचगणा ऐशान्यां(नीं ?) येऽधिशेरते ।
नानाकुत्सितरूपाश्च सपर्यामुद्यतामिमाम् ॥ १५१ ॥

गृहीत्वा पान्तु नस्तृप्ताः सुप्रतिष्ठानुयायिनः ।
महं त्विममुपायान्तु प्रीतास्तेभ्यो नमोऽस्तु वः ॥ १५२ ॥

अनेन मन्त्रेणावाह्य संपूज्य च गणाधिपम् ।
मध्यं(ध्ये?)दिशः(शं?) स्थितो भूत्वा ततो गगनसंमुखः ॥ १५३ ॥

प्रश्निगर्भं गणाध्यक्षमावाह्यैनं जपेन्मनुम् ।
आगच्छत सिद्धगणा गगनं येऽधिशेरते ॥ १५४ ॥

शुचयः शुचिरूपाश्च सपर्यामुद्यतामिमाम् ।
गृहीत्वा पान्तु नस्तृप्ताः प्रश्निगर्भानुयायिनः ॥ १५५ ॥

महं त्विममुपायान्तु प्रीतास्तेभ्यो नमोऽस्तु वः ।
अनेन तोषयित्वा तं प्रश्निगर्भं यथापुरम् ॥ १५६ ॥

अधस्तान्मानवाह्वानं कुर्वन् मन्त्रमिमं पठेत् ।
आगच्छातामरगणाः पृथिवीं येऽधिशेरते ॥ १५७ ॥

बहुरूपा बहुमुखाः सपर्यामुद्यतामिमाम् ।
गृहीत्वा पान्तु नस्तृप्ता मानवस्यानुयायिनः ॥ १५८ ॥

महं त्विममुपायान्तु प्रीतास्तेभ्यो नमोऽस्तु वः ।
इत्यावाह्य क्रमादेतान् तोषयेन्नृत्तपश्चिमम् ॥ १५९ ॥

समतालस्तथा मत्ततालो लाङ्गलिकस्तथा ।
मल्लतालो मङ्गलश्च जयतालश्च भद्रकः ॥ १६० ॥

---

150–(cd) AM. om.
151&152 AM. om.
160–(a) My. °तावर्धा for °था मत्त°
–(b) My. वै भ्रमिणी for लाङ्गलिकः
M. °लकः for °लिकः

ढक्करीसंज्ञकस्तालो ब्रह्मतालस्तथैव च ।
अनन्तताल इत्येते दशतालाः प्रकीर्तिताः ॥ १६१ ॥

कुमुदादिगणेशानां स्वरानपि शृणु द्विज ।
षड्जं(ड्ज?) ऋषभगान्धारो(रौ?) मध्यमः पञ्चमस्तथा ॥ १६२ ॥

रैवतश्च निषादश्च धैवतो मध्यमस्तथा ।
पञ्च पञ्च(मश्च?) क्रमेणैव (वं?) कथितास्ते दश स्वराः ॥ १६३ ॥

गान्धारराग: कौल्याख्य: कौशिको नटभाषिकः ।
श्रीकामदश्च तत्केशी दक्षरागस्तथैव च ॥ १६४ ॥

शालापाल्यभिधा(धो ?) रागो मेघरागश्च पञ्चमः ।
इत्येते कुमुदादीनां दश रागाः प्रकीर्तिताः ॥ १६५ ॥

विलासं सर्वतोभद्रं खेटकं चक्रमण्डलम् ।
कान्तारं कुट्टिमं पृष्ठकुट्टिमं कटिबन्धनम् ॥ १६६ ॥

वामजानूर्ध्वनृत्तं च आद्यतं च द्वयं पुनः ।
एते नृत्तविशेषाश्च कुमुदादेः क्रमात् स्मृताः ॥ १६७ ॥

---

163–(a) K दैवतं चैव निषदो My. दैवतं चैव नृषदो
–(b) BMMy. दै for धै°
K देवता मध्यत° for धैवतो मध्यम°

164–(a) BM को° for कौ.
–(b) AK नट्ट for नट B नट्टराग° for नटभाषि°
–(c) ABM श्रीरामकौशिकीराग
My, आ° for श्री°

165–(a) K तालापण्यभिधो for शालापाल्यभिधा (धो?)
M शालवाद्य: for शालापाल्य.
My. चालापाण्यमितो for शालापाल्यभिधा (धो?)

166–(b) ABM चैव for चक्र.
–(c) ABM °र° for °रम्

167–(a) BM नात्तम् for नृत्तम्
–(b) ABKM °द्यं° for °द्य°

अन्येषां सर्वदेवानां तालो भद्रः प्रशस्यते ।
भवेद्गरुडतालस्तु पक्षीशस्य तु मध्यमः ॥ १६८ ॥

स्वरो रागस्तु गौडः स्याद्विष्णुक्रान्तं च नृत्तकम् ।
विघ्नारेर्जयतालः स्यान्नृत्तं स्वस्तिकमुच्यते ॥ १६९ ॥

ऋषभस्तु स्वरः प्रोक्तो वरालीराग एव च ।
इत्थमावाहनं कृत्वा गणेशानां ततो गुरुः ॥ १७० ॥

आह्वानं दिव्यहेतीनामपि स्वेनैव कारयेत् ।
आवाह्यस्तु तथा ब्रह्मा स्वलो(र्लो?)कस्थैर्मुनीश्वरैः ॥ १७१ ॥

मरीचिप्रमुखैः सार्धं रुद्रश्च प्रमथेश्वरः ।
इन्द्रः सर्वैः सुरगणैर्गायत्र्या चाद्यदेवताः ॥ १७२ ॥

तन्महस्संनिधानार्थमाहू(ह्वा?)तव्याः प्रयत्नतः ।
इत्यावाह्य च सर्वेषां विधाय द्विजपुंगव ॥ १७३ ॥

प्रवेश्याभ्यन्तरं देवं सहर्त्विग्भिश्च मूर्तिपैः ।
भेर्यादिवादनज्ञैश्च गायकैर्नृत्त(र्नर्त ?)कैरपि ॥ १७४ ॥

नित्योत्सवस्य प्रतिमामारोप्य शिबिकादिषु ।
सुदर्शनं वा परितो ग्रामं नीत्वा प्रदक्षिणम् ॥ १७५ ॥

पूर्वोक्तेन क्रमेणैव दिशासु विदिशासु च ।
इन्द्रादीनां महे तस्मिन् प्रार्थयित्वा च संनिधिम् ॥ १७६ ॥

चतुर्मुखं ग्राममध्ये समावाह्य सभाज्य च ।
संनिधिं प्रार्थ्य रुद्रस्य सगणस्य च संनिधिम् ॥ १७७ ॥

संप्रार्थ्य भेरीं संताड्य गीतं नृत्तं प्रदर्श्य च ।
मध्ये मध्ये च गरुडतालं संशोध्य(?)देशिकः ॥ १७८ ॥

---

169-(b) ABM My. °कान्तम् for °क्रान्तम्
-(c) ABM विघ्नराट् जयतालं स्यात्
170-(b) My, ° लो for °ली°
176-(b) My. प्राकारेषु for दिशासु वि°

अन्तः प्रविश्य गरुडध्वजस्तम्भस्य संनिधौ ।
सर्वदेवतसंनादं कारयित्वा च गायकः ॥ १७९ ॥

गापयित्वा सर्वगीतीर्नर्तकीभिश्च नर्तनम् ।
कारयित्वा प्रविश्यान्तर्देवं विज्ञाप्य सादरम् ॥ १८० ॥

प्रणम्य स्वगृहं यायात् प्रसन्नो गुरुरात्मवान् ।
भेरीताडनवेलायां तन्नादश्रावको जनः ॥ १८१ ॥

नदीं तीर्त्वा न गच्छेत्तु न यायाद्योजनात् परम् ।
उत्सवावभृथं यावद् ग्रामे तत्रैव संवसेत् ॥ १८२ ॥

मङ्गलाङ्कुरवापस्तु कृतो येन ध्वजोत्सवम् (वे ?) ।
स एवावभृथं यावदुत्सवस्य गुरुर्भवेत् ॥ १८३ ॥

तत्रागन्तुं न शक्तश्चेत् तत्सुतः शिष्य एव वा ।
अनुज्ञातस्तु यः कश्चिदह्वायाथ समापयेत् ॥ १८४ ॥

उत्सवारम्भदिवसात् पूर्वस्मिन् सप्तमेऽहनि ।
मङ्गलाङ्कुरसंवापं कारयेद्देशिकोत्तमः ॥ ॥ १८५ ॥

षट्त्रिंशतं पालिकानां शरावणां च तावती(तीम् ?) ।
तत्प्रमाणाश्च घटिकाः समानीय विचक्षणः ॥ १८६ ॥

पात्रेषु त्रिविधेष्वेषु वापयेन्मङ्गलाङ्कुरान् ।
उत्सेधः पालिकानां स्याद्धस्तः सैकाङ्गुलो मुने ॥ १८७ ॥

अङ्गुल्यः षोडश भवेत्तासामाननविस्तृतिः ।
सप्ताङ्गुलप्रमाणं स्याद्बिलं तालमथोऽपि वा ॥ १८८ ॥

अष्टाङ्गुलं पादपीठं विस्तारः साङ्गुलः करः ।
मोहिनीपुष्पसंकाशं पद्माभं तन्मुखं भवेत् ॥ १८९ ॥

---

183–(c) A °त्र श्रुतो BM °त्र श्रितो for °वभृथम्
184–(d) ABM °दनुयागम् for °दह्वायाथ
188–(d) A बिलतालमितो भवेत् ।
BM बिलतालनतो भवेत् ।
189–(a) My. °पीठ for °पीठं

पञ्चवक्त्रास्तु घटिका द्वाविंशत्यङ्गुलोच्छ्रयाः ।
मध्ये घटोपमाकाराः षडङ्गुलमितं भवेत् ॥ १९० ॥

वक्त्रं तासां मध्यसंस्थं चतुरङ्गुलसंमितम् ।
चतुर्दिक्षु मुखानां स्यात् प्रमाणं द्विजपुंगव ॥ १९१ ॥

उच्छ्रायस्तु शरावाणां विंशदङ्गुलसंमितम्(तः ?) ।
विस्तारश्च वितस्तिः स्यात् त्रिधैवं पात्रकल्पना ॥ १९२ ॥

हैमं रौप्यं ताम्रजं वा कल्पयेत् पात्रसंचयम् ।
यथाविभवविस्तारं सर्वाभावे तु मृण्मयम् ॥ १९३ ॥

इत्थमष्टोत्तरशतमुत्तमा क्लृप्तिरुच्यते ।
मध्यमायां कल्पनायां प्रत्येकं षोडशं(?) भवेत् ॥ १९४ ॥

तदर्धमधमं प्रोक्तं यथासंभवमेव वा ।
देवकर्मणि युग्माः स्युरयुग्मा मानुषे विधौ ॥ १९५ ॥

पालिका एव वा ग्राह्या मङ्गलाङ्कुररोपणे ।
सुशुभे विजने देशे कुर्यान्मण्डपमुत्तमम् ॥ १९६ ॥

मङ्गलाङ्कुरवापार्थं स्तम्भैः षोडशभिर्युतम् ।
चतुर्द्वारं प्रतिद्वारं दुग्धवृक्षसमुद्भवैः ॥ १९७ ॥

भूषितं तोरणवरैर्दर्भमालासमावृतम् ।
परार्ध्यक्षौमनिचयैः(य ?)प्रकल्पितवितानकम् ॥ १९८ ॥

वितानाधोलम्बिताभिर्मुक्तास्रग्भिर्विभूषितम् ।
क्षौमैर्महार्घैः (महार्घक्षौमः?) संवीतस्तम्भसंचयमद्भुतम् ॥ १९९ ॥

---

192-(d) ABM त्रिविधैवं प्रकल्पना ।

194-(a) A इष्ट° for इत्थ°

196-(b) My. °वापने for °रोपणे

197-(d) K. गन्ध for दुग्ध

गोमयालेपिततलं सुधाचूर्णप्रकल्पितैः ।
रेखागणैरब्जकुलैर्विराजिततलं शुभैः ॥ २०० ॥

प्रदीपनिकरैर्बद्धं (र्युक्तं?) तैलसंपूर्णमल्लिकैः (?) ।
विभूषितं मुक्तपुष्पैराकीर्णं साक्षतैः सितैः ॥ २०१ ॥

ध्वजमालापरिवृतं धूपामोदितदिङ्मुखम् ।
प्रकल्प्य मण्डपवरमेवंविधमुदारधीः ॥ २०२ ॥

मृत्तिकाग्रहणं कुर्याच्छुभे लग्नेऽथ देशिकः ।
सशङ्खकाहलगणं तूर्यघोषनिनादितम् ॥ २०३ ॥

वेदविद्भिर्द्विजगणैः श्वेतस्रग्वस्त्रधारिभिः ।
ऊर्ध्वपुण्ड्रैर्द्वादशभिः श्वेतमृत्स्नाविनिर्मितैः ॥ २०४ ॥

विभूषिताङ्गसंघातैः शान्तैर्दान्तैर्जितेन्द्रियैः ।
महाभागवतैश्चैव *संमुख प्रागुदङ्मुखः*(?) ॥ २०५ ॥

सस्यानां पावनं शुद्धं गत्वा क्षेत्रमनुत्तमम् ।
शुचिस्तत्र खनित्रं च संक्षाल्याद्भिः समाहितः ॥ २०६ ॥

खात्वा वाराहमन्त्रं च (खनित्वा वाराहमन्त्रं?) पठेत् पात्रे हिरण्मये ।
निधाय च मृदं क्षौमैर्नवैराच्छाद्य शोभनैः ॥ २०७ ॥

पुष्पस्रग्भिरलंकृत्य गजस्यन्दनसंस्थितैः ।
ऋत्विग्भिर्वाहयेच्छत्रच्छायातः(धः?)संस्थितैर्द्विज ॥ २०८ ॥

विष्वक्सेनं समारोप्य स्यन्दने वा गजेऽथवा ।
शिबिकायामथाश्वे वा यथादेवं विभूष्य च ॥ २०९ ॥

---

200–(b) ABM सक्तुचूर्णप्रकल्पितम् ।
My. सुधावर्णैः प्रकल्पितम् ।
206–(a) ABKM वापनम् for पावनम्
207–(b) ABM पठन् पात्रेऽभिमन्त्र्य च ।
My. पठन् for पठेत्

मुक्ताच्छत्रादिभिः सर्वैश्चामरैश्च सुशोभितम् ।
उह्यमानं द्विजवरैर्नयेत् सार्धं द्विजोत्तमः ॥ २१० ॥

बह्वृचैः शाकुनं सूक्तं पठद्भिः सहितो मुने ।
श्रीसूक्तं पुरुषसूक्तं च (पौरुषं सूक्तं?) साम चोद्घोष्य सर्वतः ॥ २११ ॥

ग्रामं प्रदक्षिणं कृत्वा धाम चापि परीत्य वै ।
प्रविश्य मण्डपवरं प्रागुक्तं(?) मूर्तिपान्वितः ॥ २१२ ॥

आचार्यो मूर्तिपैश्चैव सर्वतः प्रावृतैर्मुने(?) ।
नवीनक्षौमवसनाः सोत्तरीयाः स्वलंकृताः ॥ २१३ ॥

उष्णीषधारिणो रत्नमुद्राशोभितपाणयः ।
स्वनुलिप्ताः स्रग्विणश्च कुण्डलालंकृताननाः ॥ २१४ ॥

पवित्रपाणयश्चैव सोर्ध्वपुण्ड्राः सुचेतसः ।
प्रादप्रक्षालनं कृत्वा स्वाचान्ता मूलविद्यया ॥ २१५ ॥

शुकव्यासवसिष्ठादिमुनिमुख्योपमा द्विजाः ।
संप्रोक्ष्याङ्कुरवापार्थं भूमिं शुद्धेन चाम्भसा ॥ २१६ ॥

अस्त्रमन्त्रप्रजप्तेन(प्तानि?) कुशाग्रस्थापितेन(तानि?) वा ।
सूत्राणि चन्दनक्षोदसिक्तानि स्फालयेत् क्रमात् ॥ २१७ ॥

प्राच्यादि प्रथमं सूत्राण्युदीच्यां द्वादश स्फुटम् ।
पातयित्वा पञ्चदश तथोदीच्यानि कल्पयेत् ॥ २१८ ॥

दिक्ष्वष्टासु तथा मध्ये द्वादशद्वादशैव तु ।
स्थापनीयाः पालिकाद्याः शतमष्टाधिकं क्रमात् ॥ २१९ ॥

---

213–(a) My. °भि° for °पै°
–(b) My. °मेतः प्रमनो ? for °र्वतः प्रावृतैः
–(c) B. संवीताः for वसनाः
215–(a) My. धारिण° for पाणय°
–(b) My. तेज° for चेत°
216–(a) ABM My. कृतन्यासा for शुकव्यास
217–(b) My. कूर्चा° for कुशा°

# अङ्कुरार्पणे पालिकादिकल्पनम्

(प्रथमः पक्षः)

१७.२१८–२१

उ–

| श | श | श |
|---|---|---|
| श | श | श |
| श | श | श |
| श | श | श |

| श | श | श |
|---|---|---|
| श | श | श |
| श | श | श |
| श | श | श |

| श | श | श |
|---|---|---|
| श | श | श |
| श | श | श |
| श | श | श |

प–

| घ | घ | घ |
|---|---|---|
| घ | घ | घ |
| घ | घ | घ |
| घ | घ | घ |

| घ | घ | घ |
|---|---|---|
| घ | घ | घ |
| घ | घ | घ |
| घ | घ | घ |

| घ | घ | घ |
|---|---|---|
| घ | घ | घ |
| घ | घ | घ |
| घ | घ | घ |

पू–

| पा | पा | पा |
|---|---|---|
| पा | पा | पा |
| पा | पा | पा |
| पा | पा | पा |

| पा | पा | पा |
|---|---|---|
| पा | पा | पा |
| पा | पा | पा |
| पा | पा | पा |

| पा | पा | पा |
|---|---|---|
| पा | पा | पा |
| पा | पा | पा |
| पा | पा | पा |

द–

## अङ्कुरार्पणे पालिकादिकल्पनम्
### ( द्वितीयः पक्षः )
### १७.२२१, २

उ—

| शा | शा |
|---|---|
| शा | शा |

| शा | शा |
|---|---|
| शा | शा |

| शा | शा |
|---|---|
| शा | शा |

प—

| घ | घ |
|---|---|
| घ | घ |

| घ | घ |
|---|---|
| घ | घ |

| घ | घ |
|---|---|
| घ | घ |

पू—

| पा | पा |
|---|---|
| पा | पा |

| पा | पा |
|---|---|
| पा | पा |

| पा | पा |
|---|---|
| पा | पा |

द—

ब्रह्मेन्द्रवरुणेषु स्याद् घटिकानां गणो मुने ।
स्थापयेद्वह्निनिर्ऋतियमभागेषु पालिकाः ॥ २२० ॥

शरावान् मारुतशशिरुद्रभागेषु कल्पयेत् ।
अथवा नवसूत्राणि प्राचीनानि प्रकल्पयेत् ॥ २२१ ॥

एकादशोतराणि स्युरुदीचीनानि काश्यप ।
एतत्क्रमेण सर्वेषां विधिवत्स्थापनं भवेत् ॥ २२२ ॥

सर्वत्र पालिका वा स्युरन्याभावे द्विजोत्तम ।
क्षालयेद्विष्णुगायत्र्या पालिकादि क्रमेण च ॥ २२३ ॥

बिलमूलानि संपूर्य शष्पकाशतृणैर्दृढम् ।
तदूर्ध्वं प्रथमं मृद्भिः पूरयित्वा ततोपरि(?) ॥ २२४ ॥

उपाहृताभिः सरितो वालुकाभिः प्रपूरयेत् ।
चूर्णितैर्गोकरीषैश्च बिलशेषं प्रपूरयेत् ॥ २२५ ॥

कोष्ठान्यष्टशतान्यादौ प्रत्येकं शिवशालिभिः ।
वृत्तं वा चतुरश्रं वा विधायोपरि विन्यसेत् ॥ २२६ ॥

ब्रह्मादीशानपर्यन्तं प्रथमं घटिकागणम् ।
स्थापयेत् परमेष्ठ्याख्यमन्त्रेण प्रथमं द्विज ॥ २२७ ॥

विन्यसेद्विश्वमन्त्रेण शरावांस्तदनन्तरम् ।
सर्वेषां स्थापनं कुर्यात्प्राङ्मुखो वाप्युदङ्मुखः ॥ २२८ ॥

वासोभिर्वेष्टयेत् पश्चात् प्रत्येकं मूलविद्यया ।
अशक्तश्चेत् प्रतिगृहं छादयेद्वाससोपरि ॥ २२९ ॥

धान्यराशौ शुभं कुम्भं तन्तुभिर्वेष्टितं नवम् ।
वेष्टितं क्षौमयुग्मेन गन्धोदकसुपूरितम् ॥ २३० ॥

निक्षिप्तनवरत्नं तु स्थापयेन्मूलविद्यया ।
बिम्बे च मण्डले कुम्भे पावकेषु चतुर्ष्वपि ॥ २३१ ।

स्थानेषु पूजयित्वाग्रे भगवन्तमनन्यधीः ।
अर्घ्याद्यं च निवेद्यान्तं देवदेवस्य संनिधौ ॥ २३२ ॥

मङ्गलाङ्कुरवापं तु कुर्याद्देशिकसत्तमः ।
अथवैकत्र कुम्भे वा देवमिष्ट्वा द्विजोत्तम ॥ २३३ ॥

शालि(लीन् ?)मुद्गांश्च नीवारान् श्यामाकान् सप्रियङ्गुकान् ।
तिलान् यवान् सगोधूमानन्यानपि च याज्ञिकान् ॥ २३४ ॥

एकपात्रे विनिक्षिप्य हैमे महति शोभने ।
मूर्ध्नि विन्यस्य तत्पात्रं धाम कृत्वा प्रदक्षिणम् ॥ २३५ ॥

कुर्यात् काहलशङ्खादिसंघोषणसमन्वितम् ।
अन्तः प्रविश्य देवस्य दर्शयित्वा च मण्डपम् ॥ २३६ ॥

प्रदक्षिणमथानीय पालिकाद्यैन्द्रभूतले ।
भारतण्डुलसंक्लृप्ते पद्मेऽष्टदलसंचिते ॥ २३७ ॥

क्षीरेण क्षालयित्वा च प्रच्छाद्य नववाससा ।
पुण्याहघोषणं कृत्वा शङ्खतूर्यादिसंयुते(तम् ?) ॥ २३८ ॥

क्रमेण पालिकादीनामधिदेवान् यजेत च ।
ब्रह्माणं घटिकानां च पालिकानां च केशवम् ॥ २३९ ॥

शरावाणां त्रिणयनं घृतारोपणमाचरेत् ।
द्वारेषु तोरणगणान् ध्वजान् कुम्भाष्टकं तथा ॥ २४० ॥

गणनाथान् समभ्यर्च्य कुमुदादीन् यथाविधि ।
इन्द्रादीनपि चाभ्यर्च्य सोमकुम्भे सुधाकरम् ॥ २४१ ॥

आवाह्याभ्यर्च्य सघृतं पायसं च निवेदयेत् ।
घृताहुतिशतं हुत्वा चतस्रः समिधस्तथा ॥ २४२ ॥

व्यूहमन्त्रैश्च जुहुयात् सूक्तेन च तथा चरुम् ।
हुत्वा पूर्णां विधायाथ घृताहुतिशतं हुनेत् ॥ २४३ ॥

---

240–(d) K बाल. for ध्वजान्
242–(ab) My. सद्वृत्तं पद्मासननिषेवितान् for सघृतं पायसं च निवेदयेत्
243–(a) My. रुद्र for व्यूह
–(b) My. पुंसूक्तेन तथार्चनाम् ।

संस्पृश्य स्पर्शमन्त्रेण संपाताज्येन पालिकाम् ।
बीजपात्रे च संपातघृतशेषं विनिक्षिपेत् ॥ २४४ ॥

जप्त्वा(?)चाष्टशतं वारान् सोममन्त्रमनन्यधीः ।
लग्ने सुशोभने प्राप्ते ब्राह्मणानामनुज्ञया ॥ २४५ ॥

पालिकादिषु बीजानि वापयेन्मूलविद्यया ।
ब्रह्मादीशानपर्यन्तं वापयेत् सकलं गुरुः ॥ २४६ ॥

अन्येऽप्याचार्यसंमत्या विदध्युर्बीजवापनम् ।
सिक्त्वा च पुष्पपयसा साधयेच्च विधानकैः ॥ २४७ ॥

बलिं दत्वा च सर्वासु दिक्षु रक्षणकारणात् ।
कुमुदादिगणेशेभ्यो दिवानक्तं बलिं ददेत् ॥ २४८ ॥

पायसेन प्रतिदिनं सोमराजं यजेत च ।
अनिर्वाणांस्तथा दीपान् कारयेच्च समाहितः ॥ २४९ ॥

द्विजेन्द्रांस्तोषयेत् प्राज्यैस्ताम्बूलैः पूगिकाफलैः ।
यजमानः प्रयत्नेन गुरुं समभितोषयेत् ॥ २५० ॥

अङ्कुराणां प्रवृद्ध्यर्थं हरिद्राभिर्निषेचयेत् ।
पीतेष्वङ्कुरजातेषु शुक्लेषु च शुभं भवेत् ॥ २५१ ॥

अशुभं विपरीतेषु प्ररूढेषु परीक्षयेत् ।
यत्कर्मोद्दिश्य येनैवमङ्कुरारोपणं कृतम् ॥ २५२ ॥

आ समाप्तेः स एवास्य कर्मणः कारको भवेत् ।
तस्याशक्तिर्यदि भवेन्मरणं वाथ तत्सुतः ॥ २५३ ॥

तच्छिष्यो वा विदध्यात्तत् ऋत्विग्वा तदनुज्ञया ।
प्रतिष्ठायां च दीक्षायामुत्सवे धामनिर्मितौ ॥ २५४ ॥

---

245-(a) My. हु° for ज°

246-(d) My. निरुप्य for वापयेत्

विषुवे चायने चैव ग्रहणे चन्द्रसूर्ययोः ।
पवित्रारोपणे चैव कह्लारदमनोत्सवे ॥ २५५ ॥

वैशेषिकेषु चान्येषु शयनोत्थानयोरपि ।
शान्तिके पौष्टिके चैव कर्मण्यारिप्सिते सति ॥ २५६ ॥

मङ्गलाङ्कुरसंवापं कुर्यादेवमतन्द्रितः ॥

इति पञ्चरात्रे महोपनिषदि विश्वामित्रसंहितायां
अङ्कुरार्पणविधिर्नाम सप्तदशोऽध्यायः ॥

---

## अष्टादशोऽध्यायः ॥

विश्वामित्रः—

उत्सवारम्भदिवसात् प्रागेव ग्रामवीथयः ।
संशोधनीयाः सर्वाः स्युरुद्धृत्यावकरानपि ॥ १ ॥

सर्वेषु चत्वरेष्वेव कल्प्यास्तोरणराजयः ।
फलभारानताः कल्प्याः कदल्यः क्रमुका अपि ॥ २ ॥

वीथीमध्येषु सिकताः प्रसार्याः समता यथा ।
ध्वजैश्च दर्भमालाभिः प्रभा(पा ?)भिः शोभयेदपि ॥ ३ ॥

आप्लुत्य गोमयाम्भोभिः ककुभश्च विशोधयेत् ।
भित्तयो गेहराजीनां पञ्चवर्णविचित्रिताः ॥ ४ ॥

---

Colophon :—K My. पाञ्च° for पञ्च
A. om. अङ्कुरार्पणविधिर्नाम
BM. उत्सव for अङ्कुरार्पण
K. ध्वजारोहणाङ्कुरारोपण° for अङ्कुरार्पण°

4-(b) K कुम्भागा अपि for ककुभश्च वि°
My. कुम्भागानपि शोधयेत्

-(c) AM भित्तियोगेषु सर्वेषु
B. भक्तियोगेषु सर्वेषु
My. भित्तयोर्हेमराजीवः

वेदिकाः पूर्णकुम्भैश्च साङ्कुरैः पालिकागणैः ।
सर्वतो दीपिकाभिश्च गन्धतैलाक्तवर्तिभिः ॥ ५ ॥

भूषिताः कमनीयाः स्युः क्षौमशोभितनीविकाः ।
उत्सवे देवदेवस्य सेवाकौतुकिनां नृणाम् ॥ ६ ॥

देशान्तरादागतानामन्नाद्यं कल्पयेदपि ।
गन्धोदकैः सुसंपूर्णाः कार्याः पानीयशालिकाः ॥ ७ ॥

समागतेषु रोगार्ता भवेयुर्यदि तत्कृते ।
सर्वौषधीनां संभाराः संकल्प्याः स्युर्दृढं द्विज ॥ ८ ॥

अपूर्वशयनार्थं(?) च मञ्चाः कार्याः सुशीतलाः ।
सर्ववस्तुषु(सु?)संपूर्णाः कार्या विपणिवीथयः ॥ ९ ॥

कूपाः सर्वे निपानाढ्याः करणीयाः समन्ततः ।
आवृतौ प्रथमायां वा द्वितीयावरणेऽथवा ॥ १० ॥

यथावकाशं कुर्वीत महान्तं यागमण्डपम् ।
चतुर्द्वारसमायुक्तं विस्तारायामतः समम् ॥ ११ ॥

मण्डपस्य चतुर्दिक्षु प्रपां च परिकल्पयेत् ।
कुर्यान्मण्डपमध्ये तु वेदिं हस्तसमुच्छ्रिताम् ॥ १२ ॥

द्वित्रिहस्तसमायुक्तां तावद्विस्तारसंयुताम् ।
तस्याः पूर्वदिशो भागे चतुरश्रं प्रकल्पयेत् ॥ १३ ॥

कुण्डमाहवनीयाग्नेर्याम्ये च धनुराकृति ।
दक्षिणाग्नेः प्रतीच्यां तु वृत्तं सभ्यं च कल्पयेत् ॥ १४ ॥

---

6–(a) KMy. करणी° for कमनी°
14–(a) BM यं° स्यात् for °याग्ने°:
–(b) AM. आग्नेय्याम् for याम्ये च
–(d) My. गार्हपत्यस्य वृत्तकम् ।
My. Adds..............................कुण्डं सभ्यस्य कल्पयेत् before 15 a.

सौम्यभागे त्रिकोणं स्यादैशान्यां चतुरश्रकम् ।
आग्नेय्यां वा प्रकर्तव्यमावसथ्यं तु (थ्यस्य ?) धिष्णियम् ॥ १५ ॥

एवं पञ्चाग्निसंयुक्तमुत्सवं विदधीत वा ।
आवसथ्यविनाभूतचतुर्दिक्संस्थपावकम् ॥ १६ ॥

सभ्यावसथ्यरहितं यद्वाग्नित्रयसंमितम् ।
अथवाहवनीयाग्निमेकं वा कल्पयेद् द्विज ॥ १७ ॥

क्षीरद्रुमैश्चतुर्द्वारे तोरणानि प्रकल्पयेत् ।
स्रुक्स्रुवौ कारयेदष्टमङ्गलानि यथापुरम् ॥ १८ ॥

तैरेव ऋत्विजां कल्प्यान्यासनानि मनीषिणा ।
नानाविधानि होमार्थपात्राण्यपि च कारयेत् ॥ १९ ॥

मण्डपांश्च प्रपाश्चैव लेपयेद्गोमयाम्भसा ।
सुधाचूर्णैश्चित्रयित्वा क्षौमैरपि वितानयेत् ॥ २० ॥

कौशेयक्षौमवसनैः स्तम्भानपि च वेष्टयेत् ।
आचार्यांश्चतुरः पूर्वान् वरयेत् षोडशर्त्विजः ॥ २१ ॥

परिचारान् बहुविधान् स्वीकुर्यात् कर्मवानपि ।
भूषयेत्तानभिनवैर्वासोभिः कटकादिभिः ॥ २२ ॥

भूषणैश्च यथावित्तमधिकारानुरूपतः ।
उत्तरीयैश्च सोष्णीषैरनुलेपनवस्तुभिः ॥ २३ ॥

उत्सवारम्भदिवसे तथान्यैः स्नापयेदपि ।
कुम्भैरष्टशतैर्देवं सर्वमङ्गलसंयुतम् ॥ २४ ॥

उत्सवारम्भदिवसात् पूर्वस्मिन् दिवसे गुरुः ।
देवस्य कौतुकं बध्वा देव्योश्च तदनन्तरम् ॥ २५ ॥

---

15–(a) My: वा for स्यात्

24–(c) ABM °ष्टादशै° for °ष्टशतै°

हेम्ना निष्कप्रमाणेन सूत्रमेकं प्रकल्पयेत् ।
तदर्धसंमितं सूत्रत्रयं निर्मापयेदपि ॥ २६ ॥

सौवर्णे राजते वापि पात्रे कलमतण्डुले ।
भाराद्य(?)संमिते पूर्वं स्वर्णसूत्रचतुष्टयम् ॥ २७ ॥

निधाय पूगजफलैरभिन्नैः शतसंमितैः ।
ताम्बूलानां दलैः सार्धं चतुःशतमितैः सह ॥ २८ ॥

कदल्यादिफलैः सार्धं साधारं न्यस्य मूर्धनि ।
आच्छाद्य क्षौमवस्त्रेण छत्रचामरसंयुतम् ॥ २९ ॥

दीपिकाशतसंयुक्तं सवितानं च मूर्तिपः ।
बहुशो ब्राह्मणैः सूक्तं पठद्भिः शाकुनं पुनः ॥ ३० ॥

धाम प्रदक्षिणं नीत्वा बहिरावरणानि च ।
कुर्यान्मङ्गलदीपैश्च प्रविशेद्देवसंनिधिम् ॥ ३१ ॥

भूतले गोमयजलैरालिप्ते चतुरश्रके ।
पूरिते शालिभारेण पात्रं विन्यस्य देशिकः ॥ ३२ ॥

पुण्याहवाचनं कृत्वा यथाविधि सभाज्य च ।
गुरुर्गृहीत्वा सूत्राणि चन्दनक्षोदवारिणा ॥ ३३ ॥

साङ्गुष्ठेना(ष्ठया ?)नामिकया संमृज्यास्त्रेण देशिकः ।
बन्धयेदुत्सवार्चाया दक्षिणे पाणिपङ्कजे ॥ ३४ ॥

देव्योर्वामकरे बध्वा गुरोः सव्येतरे करे ।
एवं चतुष्टयं बध्वा प्रत्येकं शतसंमितम् ॥ ३५ ॥

स्पृष्ट्वा दक्षिणहस्तेन जपेदस्त्रमनुं बुधः ।
देवमर्घ्यादिभिश्चेष्ट्वा महापूपान् निवेदयेत् ॥ ३६ ॥

अपूपान् पृथुकाँल्लाजान् फलानि विविधानि च ।
नृत्तगीतादिकं सर्वं देवस्याग्रे विधाय च ॥ ३७ ॥

---

27–(c) K °दिसंमतैः पूर्णैः for °द्यसंमिते पूर्वम्

देवं विज्ञाप्य तत्स्थानादन्यत्र विनिवेश्य च ।
तत्राभिषेकप्रभृति नैवेद्यान्तं सभाज्य च ॥ ३८ ॥

प्रतिष्ठोक्तेन विधिना शयने स्वास्तृते शुभे ।
शाययित्वा च देवेशं शास्त्रादिपठनान्वितम् ॥ ३९ ॥

जागरेण निशां नीत्वा श्वोभूते उदिते रवौ ।
उत्तिष्ठेत्यादिमन्त्रेण देवमुत्थाप्य बह्वृचैः ॥ ४० ॥

पठद्भिः शाकुनं सूक्तं सदेदं विष्णुरित्यृचम् ।
सौवर्णशिबिकां देवमारोप्य प्रभया सह ॥ ४१ ॥

वाहयित्वा द्विजवरैर्गरुत्मद्ध्यायिभिः प्रभुम् ।
सर्वमङ्गलसंयुक्तं सर्वावरणभूमिषु ॥ ४२ ॥

प्रदक्षिणेन संचार्य दुकूलास्तरणास्तृते ।
सौवर्णे सर्वरत्नाढ्ये शाखासंचयशोभिनः ॥ ४३ ॥

अधस्तात्कल्पवृक्षस्य सिंहपादाष्टकान्विते ।
हैमे समस्तरत्नौघरचिते चासनोत्तमे ॥ ४४ ॥

आसयित्वा बहुविधजनसंघातमध्यतः ।
उत्सवार्थं समानीतं हेमरत्नसमन्वितम् ॥ ४५ ॥

कौशेयक्षौमकार्पासवासोनिकरसंयुतम् ।
पनसाम्रकदल्यादिफलसंपत्समन्वितम् ॥ ४६ ॥

बृहतीकारवल्यादिसर्वव्यञ्जनसंयुतम् ।
सुपक्वनालिकेराढ्यमुद्गभेदविचित्रितम् ॥ ४७ ॥

गुल्मूलैस्तु बहुभिर्निश्चितैः कटकास्थितैः ।
शर्कराराशिभिस्तुङ्गैः सर्वतः समलंकृतम् ॥ ४८ ॥

---

39–(b) K स्वास्त्रशोभिते My. वस्त्रशोभिते for स्वास्तृते शुभे
40–(a) K My. जाग्रदेव for जागरेण
42–(b) K गरुडाध्या° for गरुत्मद्ध्या°
48–(b) K °चितं पटका° for °श्चितैः कटका°
ABM पटका° for कटका°

सौरभ्य(?)निर्मलाकारचन्दनद्रुमसंकुलम् ।
एलालवङ्गत(क ?)क्कोलजातिराशिसुशोभितम् ॥ ४९ ॥

हिमाम्बुपात्रसंपूर्णं वंशनालीषु संभृतैः ।
कर्पूरनिकरौघैश्च कुङ्कुमैः पात्रसंचयैः ॥ ५० ॥

कस्तूरीभिर्मृगमदैस्तत्तद्भोजनसंचितैः ।
संपूर्णं प्राभृतगणमाहृतं सात्त्विकैर्गुणैः ॥ ५१ ॥

भूषितैः सर्वभूपालैर्नानादिग्भ्यः समाहृतम् ।
दर्शयित्वा दर्शनीयं जनानां विस्मयास्पदम् ॥ ५२ ॥

तोषयित्वा च देवेशं विनोदैरेवमादिभिः ।
गीतैर्नृत्तादिभिश्चैव तोषयित्वा जनार्दनम् ॥ ५३ ॥

स्नापयित्वा च कलशैरेकाशीतिमितैर्विभुम् ।
यथाविभवविस्तारं सर्वसंभारसंभृतैः ॥ ५४ ॥

अलंकृत्य च रत्नौघसंचितैर्भूषणोत्तमैः ।
सर्वव्यञ्जनसंयुक्तं निवेद्य च महाहविः ॥ ५५ ॥

कुम्भे च मण्डले देवमाराध्य पुरुषोत्तमम् ।
प्राप्तेऽपराह्णसमये गृहीत्वाङ्कुरमृत्तिकाम् ॥ ५६ ॥

विधिना पूर्वदृष्टेन विधायाङ्कुरवापनम् ।
यजमानेन सहितः पश्चाद्देशिकसत्तमः ॥ ५७ ॥

गत्वा च देवनिकटं साष्टाङ्गं प्रणिपत्य च ।
प्रार्थयित्वौत्सवं बिम्बं बध्वा मङ्गलकौतुकम् ॥ ५८ ॥

---

49–(a) A सौत्रभ्यफलपूर्णैश्च
BM फलपूगैश्च for निर्मलाकार
–(b) ABM द्रुमसंकुलसंयुतम्
K. संयुतम् for संकुलम्
–(d) K. समन्वितम् for सुशोभितम्
51–(c) ABM संपूर्णप्रात्रृतगण
52–(a) K My. ° तम् for °तैः

स्नानबल्यर्थयोश्चैव बध्वा प्रतिमयोरपि ।
हेतिराजस्य च तथा कृत्वा कौतुकबन्धनम् ॥ ५९ ॥

पूर्ववत्कल्पितेऽन्यत्र शयने त्वधिवास्य तान् ।
सद्य उत्थाप्य चाराध्य धाम नीत्वा प्रदक्षिणम् ॥ ६० ॥

यागमण्डपमासाद्य स्नानबिम्बं सुदर्शनम् ।
आसने संनिवेश्यैव वेदिकायां विधाय च ॥ ६१ ॥

पीठं धान्यमयं पूर्वचोदितक्रमयोगतः ।
घटान् प्रक्षालिताँस्तन्तुसंवृतान् नव पूरितान् ॥ ६२ ॥

गन्धोदकेन विन्यस्तरत्नान् क्षौमाभिवेष्टितान् ।
सर्वगन्धद्रव्ययुक्तान् स्वर्णनिष्कसमन्वितान् ॥ ६३ ॥

एवंविधं च करकं कृत्वा तेषां मुखेष्वपि ।
अश्वत्थदलसंमिश्रान् कुशकूर्चान् निधाय च ॥ ६४ ॥

अपिधाय लतै(च तान् ?)भूमौ धान्यराशिषु निक्षिपेत् ।
मध्यकुम्भं विनान्येषां वस्त्रमेकं दशान्वितम् ॥ ६५ ॥

दशहस्तायतं सूक्ष्मं सुश्लिष्टं परिकल्पयेत् ।
दिक्ष्वष्टासु स्थापयित्वा कुम्भानष्टौ प्रदक्षिणम् ॥ ६६ ॥

मध्ये सकरकं कुम्भं दशभारप्रमाणके ।
धान्यराशौ प्रतिष्ठाप्य मूलबेरं घटेऽर्चयेत् ॥ ६७ ॥

सुदर्शनं च करके वासुदेवादिकान् यजेत् ।
प्रधानदिक्संस्थे(संस्थिते ? )षु कुम्भेषु च यथाक्रमम् ॥ ६८ ॥

आग्नेयादिषु कोणेषु पुरुषं सत्यमच्युतम् ।
अनन्तं च समाज्यैव पायसादीन्(दि ?)निवेदयेत् ॥ ६९ ॥

हविश्चतुष्कं कुम्भेषु बलिबिम्बे च नित्यशः ।
मङ्गलान्यष्ट वासोभिर्वेष्टयित्वा पृथक् पृथक् ॥ ७० ॥

निवेशयेत्ततोऽधस्ताद्धान्यराशिषु च क्रमात् ।
शङ्खं चक्रं च लक्ष्मीं च पूर्णकुम्भं जलेन च ॥ ७१ ॥

श्रीवत्सं दर्पणं चैव स्वस्तिकं मत्स्ययोर्युगम् ।
एतानि मङ्गलान्यष्टौ विनिवेश्य यथाक्रमम् ॥ ७२ ॥

चतुर्दिक्षु चतुर्वेदघोषणं कारयेत् क्रमात् ।
चतुरो वासुदेवादीन् ध्यात्वा प्राच्यादिषु क्रमात् ॥ ७३ ॥

अन्तिमे मूलबेरं च ध्यात्वा कोणेष्वनुक्रमात् ।
यावत्तीर्थावसानं च संनिधिं प्रार्थ्य देशिकैः ॥ ७४ ॥

वृतैश्चतुर्भिराचार्यो जुहुयादात्मपञ्चमैः ।
पञ्चस्वग्निष्वपि तथा पायसापूपपूर्वकंः ॥ ७५ ॥

तिलैस्त्रिभिर्यवैश्चैव पृथगष्टोत्तरं शतम् ।
तत्तन्मन्त्रैर्हुने(?)त्तत्र देवताध्यानपूर्वकम् ॥ ७६ ॥

अष्टाविंशतिवारान् वा कुण्डेषु प्रागुपक्रमः ।
पायसं कृसरं गौल्यं हरिद्रान्नं च मौद्गकम् ॥ ७७ ॥

पृथगग्निषु होतव्यं पुंसूक्तेन च पञ्चसु ।
ब्रह्मादिदेवतोद्देशात् परमान्नेन पञ्चमे ॥ ७८ ॥

नाम प्रोच्य चतुर्थ्यन्तं स्वाहान्तं जुहुयात् क्रमात् ।
परिवारपदोपेतं तत्तद्ध्यानपुरस्सरम् ॥ ७९ ॥

ब्रह्मा प्रजापती रुद्राः सर्वे देवा यथाक्रमम् ।
छन्दांसि वेदा ऋषयो गन्धर्वाश्च सरीसृपाः ॥ ८० ॥

यक्षाश्चाप्सरसो मासा वत्सरा देव्य एव च ।
सर्वशब्दादिकाश्चाब्धिपर्वता*श्चापिहा*(?)अपि ॥ ८१ ॥

भूतानि पशवो वृक्षा ओषध्यः सवनस्पतीः(?) ।
औद्भिदाः (उद्भिदः?) स्वेदजाश्चैव साण्डजाश्च जरायुजाः ॥ ८२ ॥

---

73–(b) ABM My. पारगान् घोष° for घोषणं कार°
74–(b) ABKM: कुण्डे° for कोणे°
76–(c) ABM °न्मन्त्र for °त्तत्र

भूरादयः सप्तलोकाः पाताला(?)अतलादयः(?) ।
चण्डादयश्चाप्येतेभ्यो जुहुयान्मूलविद्यया ॥ ८३ ॥

पूर्णाहुतिमिदं विष्णुरिति प्रोच्य समाचरेत् ।
प्रहरेन्नैव परिधीन् न दर्भांश्चोत्सवावधि ॥ ८४ ॥

देवान् नोद्वासयेच्चैव प्रत्यहं वह्निधारणम् ।
विदधीत प्रतिदिनं जुहुयाच्च यथाविधि ॥ ८५ ॥

चतुष्टये त्रयेऽग्नीनां द्वयोरेकत्र वा स्मरेत् ।
यागमण्डपमारभ्य बलिदानं समाचरेत् ॥ ८६ ॥

सुदर्शनं च बल्यर्चामन्नमूर्तिसमन्विताम् ।
आदाय च विनिष्क्रम्य तद्द्वारे कुमुदादिकान् ॥ ८७ ॥

अर्चयित्वा पुरो भून्ना(मौ ?) शुचौ दद्याद्बलिं ततः ।
बलिपात्रं पुष्पपात्रमर्घ्यपात्रं च कर्तरीम् ॥ ८८ ॥

दीपपात्रं धूपपात्रं दीपांश्च परिचारकान् (काः ?) ।
एकैकशो गृहीत्वाग्रे गच्छन्त्व*न्यत्पुरःसराः*(?) ॥ ८९ ॥

अन्नमूर्तिस्ततो गच्छेत्तस्मादर्वाक् सुदर्शनः ।
नित्योत्सवार्चा तदनु क्रमेणानेन देशिकः ॥ ९० ॥

दापयेच्च बलिं कैश्चित् तद्योग्यैः परिचारकैः ।
चण्डादिप्रथमं दद्याद् द्वारेष्वावरणेष्वपि ॥ ९१ ॥

दत्वा नित्योत्सव इव बलिं दत्वा सभाज्य च ।
ग्राममध्यं समारभ्य ब्रह्मादीशान्तमर्चयेत् ॥ ९२ ॥

तत्तद्देशेषु सर्वेभ्यो बलिं दत्वावशेषितम् ।
महापीठे पारिषदान् सर्वानुद्दिश्य निक्षिपेत् ॥ ९३ ॥

---

87-(b) K My. °न्वितम् for °न्विताम्
88-(d) K. कर्क° for कर्त°
88 My. om.
89-(ab) My. om.

गुरुः सुलग्ने संप्राप्ते शयानं कौतुकं तथा ।
उत्तिष्ठेति पठन्मन्त्रमुत्थाप्य शयनाच्छुभात् ॥ ९४ ॥

स्वस्तिसूक्तमुखैर्विप्रैः सह निष्क्रम्य धामतः ।
रथन्तरं साम पठन् रथमारोपयेद् बुधः ॥ ९५ ॥

कल्पद्रुमसमायुक्तं हैमशैलमिवापरम् ।
गजोत्तमैश्चतुर्भिर्वा वाजिश्रेष्ठैः सुयोजितम् ॥ ९६ ॥

*पुरःस्थितं(?)*सारथिना नयेद्यन्त्रेण देशिकः ।
अथवा वेदपठनं कुर्वद्भिर्द्विजपुंगवैः ॥ ९७ ॥

महापाशैः सुबद्धैश्च नयेदाकृष्य तं रथम् ।
रथाभावे गजं वाश्वं शिबिकां वाधिरोपयेत् ॥ ९८ ॥

भद्रं कर्णेतिमन्त्रेण वाहनान्यधिरोपयेत् ।
हैमया प्रभया युक्तं पुष्पस्रग्भिरलंकृतम् ॥ ९९ ॥

सौवर्णेन विमानेन कूटाकारेण शोभितम् ।
आरोप्य यानप्रवरं तत्राभ्यर्च्य यथाविधि ॥ १०० ॥

देवदेवं ततस्तस्मै पृथुकापूपसंचयम् ।
ताम्बूलं च निवेद्याथ घृताक्तैर्दीपिकागणैः ॥ १०१ ॥

वृतः सर्वत्र निनदं वाहयेद् द्विजपुंगवैः ।
धवलाम्बरसंवीतैर्मूर्ध्नि वेष्टनसंयुतैः ॥ १०२ ॥

सकञ्चुकैर्दधनैश्च चामरव्यजनानि च ।
तालवृन्तान्यनेकानि मौक्तिकातपवारणम् ॥ १०३ ॥

धूपपात्राणि बहुशो धारयद्भिः समन्ततः ।
पुरो यन्त्राधिरूढेन रचिताञ्जलिपाणिना ॥ १०४ ॥

---

97–(a) ABM पुरतः सारविधिना My. पुरःस्थितः सारथिना

98–(c) ABM कुञ्जरं वा for गजं वाश्वम्

99–(c) ABM हेमप्रभा च सं. K. हेमप्रभास° for हैमया [illegible]

102–(a) My. °स्य for °त्र

104–(c) BK My. यात्रा for यन्त्रा°

V—22

भूरादयः सप्तलोकाः पाताला(?)अतलादयः(?) ।
चण्डादयश्चाप्येतेभ्यो जुहुयान्मूलविद्यया ॥ ८३ ॥

पूर्णाहुतिमिदं विष्णुरिति प्रोच्य समाचरेत् ।
प्रहरेन्नैव परिधीन् न दर्भांश्चोत्सवावधि ॥ ८४ ॥

देवान् नोद्वासयेच्चैव प्रत्यहं वह्निधारणम् ।
विदधीत प्रतिदिनं जुहुयाच्च यथाविधि ॥ ८५ ॥

चतुष्टये त्रयेऽग्नीनां द्वयोरेकत्र वा स्मरेत् ।
यागमण्डपमारभ्य बलिदानं समाचरेत् ॥ ८६ ॥

सुदर्शनं च बल्यर्चामन्नमूर्तिसमन्विताम् ।
आदाय च विनिष्क्रम्य तद्द्वारे कुमुदादिकान् ॥ ८७ ॥

अर्चयित्वा पुरो भूम्ना(मौ ?) शुचौ दद्याद्बलिं ततः ।
बलिपात्रं पुष्पपात्रमर्घ्यपात्रं च कर्तरीम् ॥ ८८ ॥

दीपपात्रं धूपपात्रं दीपांश्च परिचारकान् (काः ?) ।
एकैकशो गृहीत्वाग्रे गच्छन्त्व*न्यत्पुरःसराः*(?) ॥ ८९ ॥

अन्नमूर्तिस्ततो गच्छेत्तस्मादर्वाक् सुदर्शनः ।
नित्योत्सवार्चा तदनु क्रमेणानेन देशिकः ॥ ९० ॥

दापयेच्च बलिं कैश्चित् तद्योग्यैः परिचारकैः ।
चण्डादिप्रथमं दद्याद् द्वारेष्वावरणेष्वपि ॥ ९१ ॥

दत्वा नित्योत्सव इव बलिं दत्वा सभाज्य च ।
ग्राममध्यं समारभ्य ब्रह्मादीशान्तमर्चयेत् ॥ ९२ ॥

तत्तद्देशेषु सर्वेभ्यो बलिं दत्वावशेषितम् ।
महापीठे पारिषदान् सर्वानुद्दिश्य निक्षिपेत् ॥ ९३ ॥

---

87-(b) K My. °न्वितम् for °न्विताम्
88-(d) K. कर्क° for कर्त°
88 My. om.
89-(ab) My. om.

गुरुः सुलग्ने संप्राप्ते शयानं कौतुकं तथा ।
उत्तिष्ठेति पठन्मन्त्रमुत्थाप्य शयनाच्छुभात् ॥ ९४ ॥

स्वस्तिसूक्तमुखैर्विप्रैः सह निष्क्रम्य धामतः ।
रथन्तरं साम पठन् रथमारोपयेद् बुधः ॥ ९५ ॥

कल्पद्रुमसमायुक्तं हैमशैलमिवापरम् ।
गजोत्तमैश्चतुर्भिर्वा वाजिश्रेष्ठैः सुयोजितम् ॥ ९६ ॥

*पुरःस्थितं(?)*सारथिना नयेद्यन्त्रेण देशिकः ।
अथवा वेदपठनं कुर्वद्भिर्द्विजपुंगवैः ॥ ९७ ॥

महापाशैः सुबद्धैश्च नयेदाकृष्य तं रथम् ।
रथाभावे गजं वाश्वं शिबिकां वाधिरोपयेत् ॥ ९८ ॥

भद्रं कर्णेतिमन्त्रेण वाहनान्यधिरोपयेत् ।
हैमया प्रभया युक्तं पुष्पस्रग्भिरलंकृतम् ॥ ९९ ॥

सौवर्णेन विमानेन कूटाकारेण शोभितम् ।
आरोप्य यानप्रवरं तत्राभ्यर्च्य यथाविधि ॥ १०० ॥

देवदेवं ततस्तस्मै पृथुकापूपसंचयम् ।
ताम्बूलं च निवेद्याथ घृताक्तैर्दीपिकागणैः ॥ १०१ ॥

वृतः सर्वत्र निनदं वाहयेद् द्विजपुंगवैः ।
धवलाम्बरसंवीतैर्मूर्ध्नि वेष्टनसंयुतैः ॥ १०२ ॥

सकञ्चुकैर्दधानैश्च चामरव्यजनानि च ।
तालवृन्तान्यनेकानि मौक्तिकातपवारणम् ॥ १०३ ॥

धूपपात्राणि बहुशो धारयद्भिः समन्ततः ।
पुरो यन्त्राधिरूढेन रचिताञ्जलिपाणिना ॥ १०४ ॥

---

97–(a) ABM पुरतः सारविधिना My. पुरःस्थितः सारथीनाम्
98–(c) ABM कुञ्जरं वा for गजं वाश्वम्
99–(c) ABM हेमप्रभा च सं. K. हेमप्रभास° for हैमया प्रभया
102–(a) My. °स्य for °त्र
104–(c) BK My. याना for यन्त्रा°

आरूढेन ध्वजवरं ताक्ष्येंण च निषेवितम् ।
पश्चाच्च स्वर्णशिबिकारूढेन कनकोज्ज्वलम् ॥ १०५ ॥

वेत्रदण्डं दधानेन समुत्सारयतासुरान् ।
सेव्यमानं दधानेन पादुके स्वर्णनिर्मिते ॥ १०६ ॥

उपानद्युगले(लं ?) चैव प्रत्युप्तं रत्नराशिना ।
सौवर्णपात्रनिक्षिप्तान् (प्तं ?) बिभ्राणैः शिरसा द्विजैः ॥ १०७ ॥

गजोत्तमसमारूढैः छत्रच्छायासु संस्थितैः ।
निषेव्यमाणं देवेशं नातिशीघ्रं न लम्बितम् ॥ १०८ ॥

प्रदक्षिणं नयेद्ग्रामसर्वाभ(व?)रणभूमिषु ।
अधीयानैश्च चतुरो वेदान् साङ्गांश्च सर्वशः ॥ १०९ ॥

इतिहासपुराणानि पठद्भिः स्तोत्रपद्धतिम् ।
गायद्भिश्च हसद्भिश्च नृत्यद्भिश्च समन्ततः ॥ ११० ॥

भिन्नाश्च बहुधा भाषा भाषमाणैश्च सर्वशः ।
वावदूकैर्बहुविधैः सर्वशास्त्रेषु निष्ठितैः ॥ १११ ॥

सांख्ययोगविभागज्ञैः शाब्दिकैस्तत्त्वचिन्तकैः ।
सांवत्सरगणैश्चैव परस्परजयोद्यतैः ॥ ११२ ॥

पञ्चरात्रार्थनिपुणैः सेवितैः सात्त्विकैर्द्विजैः ।
काषायवसनैश्चैव यतिभिर्जपनिष्ठितैः ॥ ११३ ॥

एकदण्डधरैश्चैव त्रिदण्डधरणैरपि ।
ग्रामवीथीः समन्ताच्च परिभ्राम्य प्रदक्षिणम् ॥ ११४ ॥

प्रवेशसमये चापि धाम्नः सर्वावृतीरपि ।
प्रदक्षिणं परिक्रम्य प्रविशेन्मण्डपोत्तमम् ॥ ११५ ॥

---

105-(a) ABKM द्विजवर for ध्वजवरम्
106-(b) ABM जनान् for °सुरान्
112-(b) K My. सात्त्विकैः सत्त्व° for शाब्दिकैस्तत्त्व°

तत्रावरोप्य देवेशं भद्रपीठे च धामनि ।
यागमण्डपमध्ये च विनिवेश्य सुदर्शनम् ॥ ११६ ॥

अन्नमूर्तिं च बल्यर्थपीठे सकलमुत्सृजेत् ।
द्विगुणैर्ध्रुवबेरं च समाराधनवस्तुभिः ॥ ११७ ॥

अर्चयेत् प्रत्यहं चैव सावधानेन चेतसा ।
प्रभातायां तु शर्वर्यां मण्डपे सिंहविष्टरे ॥ ११८ ॥

उत्सवार्चां निवेश्यैवमर्चयेदुक्तवर्त्मना ।
तद्बिम्बे स्नपनार्थे वा स्नपनं विदधीत च ॥ ११९ ॥

एकबिम्बविधौ कुर्यान्मूलबिम्बेऽभिषेचनम् ।
स्नापयेच्च प्रतिदिनं यथाविभवविस्तरम् ॥ १२० ॥

निवेदयेदथ महाहविरुत्सवकौतुके ।
गत्वा तु भूषणस्थानं भूषयेद्भूषणैः शुभैः ॥ १२१ ॥

दिवा देवं स्थिते यागसदने देशिकोत्तमः ।
मण्डलादिकमभ्यर्च्य निवेद्य च यथावसु ॥ १२२ ॥

पूर्ववद्धवनं कृत्वा बलिं दत्वा यथाविधि ।
ग्रामवीथिषु बल्यर्चां नीत्वान्यत्सर्वमाचरेत् ॥ १२३ ॥

यथापुरं चोत्सवार्चां नयेद् ग्रामादिके बहिः ।
देवस्य पार्श्वतो लक्ष्मीदेवीं पृथ्वीमुभे इमे ॥ १२४ ॥

अलंकृत्य नयेत्सार्धं बहिर्ग्रामादिवीथिषु ।
देवस्यैकस्य वा कुर्यात् परिक्रमणमन्वहम् ॥ १२५ ॥

दिवसे दिवसे भूषाविशेषं कारयेदपि ।
गजाश्वादिषु यानेषु कृत्रिमेष्वधिरोहयेत् ॥ १२६ ॥

---

122–(a) AK My. देवं तत्र for दिवा देवम्
–(cd) ABM. om.
123–127 ABM. om.

तत्तदारोहणादीनां(णदिने ?) जलद्रोण्यवगाहनम् ।
पूर्वस्मिन्नपि सायाह्ने कुर्यात् कौतुकबन्धनम् ॥ १२७ ॥

देवस्य सविशेषार्चां विदध्याद्देशिकोत्तमः ।
दिवानक्तं च सर्वत्र बलिदानं समाचरेत् ॥ १२८ ॥

तीर्थोत्सवात्पूर्वदिने मृगयोत्सवमाचरेत् ।
तत्पूर्वदिवसे कार्यं जलद्रोण्यवगाहनम् ॥ १२९ ॥

तत्पूर्वावसरे देवं देवीभ्यां सह विष्टरे ।
हैमेऽधिरोप्य वीथीश्च शोभयित्वा विशेषतः ॥ १३० ॥

परिभ्राम्य च सर्वत्र नयेदुद्यानवाटिकाम् ।
तत्रापि च विशेषार्चां कारयेत्तद्विचक्षणः ॥ १३१ ॥

गीतनृत्तादिकाः सर्वाः क्रीडाः संदर्शयेत्तथा ।
एवं प्रतिदिनं कुर्यात् सविशेषमहोत्सवम् ॥ १३२ ॥

आहृतं प्राभृतं सर्वं दर्शयेज्जनसंसदि ।
देवस्यानुग्रहं तेषां स्वयमाज्ञापयेत्तथा ॥ १३३ ॥

आलोक्य चाननाम्भोजं देवस्य सुसमाहितः ।
मत्वा च देवोऽहमिति प्रसादादि समाचरेत् ॥ १३४ ॥

एवमष्टास्वतीतेषु दिवसेषु महोत्सवे ।
जाते च तीर्थनक्षत्रे नवमेऽहनि देशिकम् ॥ १३५ ॥

आरोप्य स्यन्दनवरं भूषितं स(च ?)विशेषतः ।
ग्रामादिवीथयः सर्वाः परिक्रम्य समन्ततः ॥ १३६ ॥

प्रवेशयेदालये तं मण्डपे चावतारयेत् ।
भद्रासने चोपवेश्य विधिवच्च सभाजयेत् ॥ १३७ ॥

---

128–(ab) ABM. om.
133–(a) BM प्रक्ट° KMy. प्राहृ° for प्राभृ°
134–(c) BKM My. °त्या for °त्वा
135–(d) ABKM °कः for °कम्
137–(a) K My. °लयम् for °लये

तीर्थबिम्बमलंकृत्य नवक्षौमयुगेन च ।
कौतुकं बन्धयित्वा च यानं हैममलंकृतम् ॥ १३८ ॥

आरोप्य चक्रानुगतं भक्तैरपि निषेवितम् ।
परिक्रम्योत्सवार्चां च धाम ग्रामं प्रदक्षिणम् ॥ १३९ ॥

नीत्वाथ सरितस्तीरं सरसस्तटमेव वा ।
जलधेरथवा तीरे मण्डपे पूर्वकारिते ॥ १४० ॥

अवतार्यासनवरे संनिवेश्य च कौतुकम् ।
चक्रादिसहितं तत्र पूजयित्वा विधानतः ॥ १४१ ॥

तीर्थबिम्बस्य पुरतः कलशान् पञ्चविंशतिः ।
संस्थाप्य सप्तदश वा स्नपनोक्तविधानतः १४२ ॥

अभिषिञ्चेच्च कलशैर्देवं शास्त्रोक्तवर्त्मना ।
शिष्टैः सुदर्शनं देवमभिषिञ्चेच्च वारिभिः ॥ १४३ ॥

अभावे सरिदादीनां तेषामावाहनं बुधः ।
कारयित्वा तीर्थबिम्बं चक्रं भक्तांश्च देशिकः ॥ १४४ ॥

निमज्जयेच्चतुष्कृत्वा तटमुत्तार्य चासने ।
निवेश्य चाप्यलंकृत्य धाम चैव प्रवेशयेत् ॥ १४५ ॥

तत्काले सह देवेन ये निमज्जन्ति मानवाः ।
तेऽनुभूय शुभं सर्वं सर्वजन्मसमार्जितम् ॥ १४६ ॥

सुदुष्प्रापं परं यान्ति पदमाचन्द्रतारकम् ।
देवं मण्डपमानीय सभाज्य च यथाविधि ॥ १४७ ॥

महाहविर्निवेद्याथ प्रातःकाले समाहितः ।
भक्तैर्जनैर्बहुविधैः सेविते मण्डपोत्तमे ॥ १४८ ॥

---

145-(b) ABM. स्वमूर्धनि निधाय च ।
146-(c) K My. अनु° for तेऽनु°

विधाय मण्डपं(लं ?) चक्रपद्ममावरणान्वितम् ।
पुष्पैस्तत्कालसंभूतैः कृष्णैश्च तुलसीदलैः ॥ १४९ ॥

वर्णैः सितादिभिः सर्वैश्चित्रयित्वा च मध्यतः ।
सिंहपादाङ्किते भद्रपीठे च प्रभया युते ॥ १५० ॥

औत्सवं बेरमादाय क्रमादर्घ्यादिभिर्यजेत् ।
द्विषट्कमनुवर्णानि द्वादशानि(?) गुरुर्द्विजः ॥ १५१ ॥

पृथक्पृथगुदाहृत्य यजेदर्घ्यादिभिः क्रमात् ।
समस्तैरपि देवेशं यजेत्पुष्पैरनन्तरम् ॥ १५२ ॥

अङ्गानि च हृदादीनि संप्रोच्य कुसुमैर्यजेत् ।
भूषणानि क्रमादिष्ट्वा चक्राद्यान्यायुधान्यपि ॥ १५३ ॥

देवानावरणस्थांश्च समभ्यर्च्य स्वनामभिः ।
मत्स्यादीनर्चयित्वाथ चतुर्विंशतिमूर्तयः ॥ १५४ ॥

पूजाक्रमेण पुंसूक्तमुच्चार्य प्रत्यृचं तथा ।
नारायणानुवाकं च विष्णुसूक्तं च काश्यप ॥ १५५ ॥

देवपादाम्बुजद्वन्द्वे विक्षिपेत्कुसुमाञ्जलिम् ।
पञ्चोपनिषदैर्मन्त्रैः क्षिपेत्कुसुमसंचयम् ॥ १५६ ।

चतुर्दिक्षु चतुर्वेदपठनं कारयेद् द्विज ।
कोणेष्वेकायनीं शाखां तन्मयैः पाठयेदपि ॥ १५७ ॥

गीतैर्नृत्तैर्बहुविधैस्तोषयेच्च प्रभुं द्विज ।
पुष्पौघैः पञ्चवर्णाढ्यैर्देवेशमभिषेचयेत् ॥ १५८ ॥

अन्नं चतुर्विधं चैव देवाय विनिवेदयेत् ।
जुहुयात् समिदाद्यैश्च चतुर्भिर्मूलविद्यया ॥ १५९ ॥

---

156–(b) My. प्र. for वि°
–(c) A पञ्चोपनिषदश्चोक्त्वा BKM पञ्चोपनिषदांश्चोक्त्वा

पृथक् पृथक् चाष्टशतं देशिको मन्त्रवित्तमः ।
देवं प्रदक्षिणीकृत्य दण्डवत् प्रणिपत्य च ॥ १६० ॥

याने च देवमारोप्य प्रथमावरणस्थितम् ।
ब्रह्मादीनां च देवानां भक्तानां चापि चोत्सवम् ॥ १६१ ॥

प्राप्तानामनुसंधातुं गमनायालयं प्रति ।
अनुज्ञां देवदेवेन कारयित्वा प्रदक्षिणम् ॥ १६२ ॥

परीत्य सेवकैर्नित्यैः सार्धमालयमाव्रजेत् ।
तद्रात्र्याः प्रथमे यामे नीत्वा स्नपनमण्डपम् ॥ १६३ ॥

कलशैः स्नापयित्वा तं निवेद्य च महाहविः ।
आसाद्य यागसदनं कृत्वा होमं यथाविधि ॥ १६४ ॥

शान्तिहोमं विधायाथ प्रायश्चित्तार्थमप्यथ ।
सहस्रं वा शतं वारान् पञ्चोपनिषदा पृथक् ॥ १६५ ॥

हुत्वा पूर्णाहुतिं कृत्वा पश्चादग्निं विसर्जयेत् ।
तोरणादिस्थितान् देवान् विसृज्य तदनन्तरम् ॥ १६६ ॥

गत्वा ध्वजसमीपं च सभाज्य पतगेश्वरम् ।
निवेद्य च हविः कृत्वा गरुत्मन्तं प्रदक्षिणम् ॥ १६७ ॥

उद्वासयेत् पटस्थं तं खगं संहृतियोगतः ।
ध्वजावरोहणं कृत्वा मध्यरात्रे च पाठयेत् ॥ १६८ ॥

दण्डं ध्वजपटं चैव स्वीकुर्याद्देशिकोत्तमः ।
गरुडस्यातिमहति(ती ?) तृप्तिः स्याद् ग्रहणे हि सः (तयोः ?) ॥ १६९ ॥

पूर्वमावाहितान् देवान् तत्तत्स्थानेपु संस्थितान् ।
संप्रदाय बलिं तूर्यं घोषयित्वा पृथक् पृथक् ॥ १७० ॥

---

162–(a) ABM प्राप्तान्ताननुसंधातुम्

166–(b) My. °वर्ज° for °सर्ज°

ब्राह्मणमपि चोद्वास्य मूकैः परिजनैः सह ।
अष्टाक्षरजपं कुर्यात् गुरु म(मं ?)न्वादिकं हरेः(?) ॥ १७१ ॥

विधाय देवं यानस्थमौत्सवं गर्भमन्दिरम् ।
प्रवेश्य विज्ञाप्य पुनः प्रणम्य स्वगृहं यजेत् ॥ १७२ ॥

प्रभातायां तु शर्वर्यां यजमानस्तु देशिकम् ।
वस्त्राभरणगन्धाद्यैरलंकृत्य सभाज्य च ॥ १७३ ॥

दत्वोत्तमस्वर्णशतनिष्कयुक्तां तु दक्षिणाम् ।
तदर्धं वा यथाशक्ति दत्वा च प्रणमेद्गुरुम् ॥ १७४ ॥

आचार्याणां तथान्येषां दशनिष्कप्रमाणतः ।
ऋत्विजां च तदर्धं स्यादन्येषां च तदर्धकम् ॥ १७५ ॥

क्रमेण दक्षिणां दत्वा गायकाद्यान् जनानपि ।
स्वार्णाम्बराद्यैः संतोष्य तत्तत्कर्मानुरूपतः ॥ १७६ ॥

द्रष्टुमुत्सवमायातान् जनान् भागवतानपि ।
पूजयेदीप्सितैर्द्रव्यैस्तत्तत्संतोषकारणात् ॥ १७७ ॥

दक्षिणा चापि दातव्या सर्वेभ्यो यागकर्मणि ।
*कर्मभ्यो दक्षिणाहीनो*(दक्षिणाहीनकर्मभ्यो ?) यागो निष्फल एव च
॥ १७८ ॥

प्रत्युत प्रत्यवायाय यजमानस्य कल्पते ।
विभवानुगुणं तस्माद्दातव्या दक्षिणा बुधैः ॥ १७९ ॥

कारयेदुत्सवं यस्तु देवदेवस्य शार्ङ्गिणः ।
श्रद्धया दक्षिणायुक्तं साङ्गोपाङ्गं महामनाः ॥ १८० ॥

कुलं तारयते सर्वं यावदाभूतसंप्लवम् ।
अश्वमेधसहस्रेण यो यजेत समाहितः ॥ १८१ ॥

---

171–(d) M गुरुमश्चादिकं हरेत् ॥ My. °रुम् for रु ABK °रेत् for °रेः
174–(ab) M दत्वोत्तमां स्वर्णशतनिष्कं स्याद्दक्षिणां ततः ।
177–(b) K भक्तान् for जनान्

यजेत यो भगवतो यागेन न समं फलम् ।
अतिरिच्येत भगवद्यागजं फलमुत्तमम् ॥ १८२ ॥

पुष्पयागदिनादन्वग्दिवसे तु यथापुरम् ।
नित्यार्चनं विधायाथ सायाह्ने देशिकोत्तमः ॥ १८३ ॥

देवं बहिर्निर्गमय्य मण्डपे विष्टरोत्तमे ।
मुक्तावितानस्याधस्तान्निवेश्य च सभाज्य च ॥ १८४ ॥

विष्वक्सेनं च देवस्य पुरतः संनिवेश्य च ।
हविर्निवेदनान्तं च कारयेद्देवपूजनम् ॥ १८५ ॥

निवेद्यान्ते(निवेदितं ?) दिने तस्मिन् यद्यत् पायसपूर्वकम् ।
चतुर्विधं चान्नजातं पृथुकापूपसक्तवः ॥ १८६ ॥

ताम्बूलं चैतदखिलं विष्वक्सेनाय दापयेत् ।
तत्सर्वं पुरतो न्यस्य विष्वक्सेनस्य देशिकः ॥ १८७ ॥

तस्मै निवेद्य सकलमगाधेऽम्भसि निक्षिपेत् ।
पश्चात्सेनेशसहितं देवं स्थाने प्रवेशयेत् ॥ १८८ ॥

एष ते भगवद्यागः संक्षिप्तोऽभिहितो मया ।
अवधार्येममित्थं त्वं कृती स्याः कश्यपात्मज ॥ १८९ ॥

**इति पञ्चरात्रे महोपनिषदि विश्वामित्रसंहितायाम्**
**उत्सवविधिर्नाम अष्टादशोऽध्यायः ॥**

---

186-(a) K निवेद्यं तद्दिने for निवेद्यान्ते (निवेदितं ?) दिने
-(b) K दद्यात् for यद्यत्

189-(b) My. °प्या° for प्तोऽ°BKM वि° for °ऽभि°

Colophon :—K. पाञ्च° for पञ्च°

# एकोनविंशोऽध्यायः

काश्यपः—

बहुशः स्नपनं कार्यमिति प्रोक्तं त्वया गुरो ।
तस्य प्रकारं भगवन् संक्षिप्य त्वं प्रचक्ष्व मे ॥ १ ॥

विश्वामित्रः—

स्नपनस्य विधिं ब्रह्मन् प्रवक्ष्यामि समाहितः ।
श्रोतुमर्हसि चैतत् त्वं सावधानेन चेतसा ॥ २ ॥

विषुवायनयोर्युग्मे ग्रहणे चन्द्रसूर्ययोः ।
व्यतीपाते च रोहिण्यां पुनर्वस्वोर्द्विजोत्तम ॥ ३ ॥

उत्पातेषु च दृष्टेषु दुर्भिक्षे व्याधिपीडने ।
यजमानस्य जन्मर्क्षे शान्तिके पौष्टिके तथा ॥ ४ ॥

उत्सवाद्यन्तयोः स्नानं स्नपनं कारयेद् बुधः ।
स्नपनं त्रिविधं प्रोक्तमुत्तमं मध्यमं तथा ॥ ५ ॥

अधमं चेति शास्त्रज्ञैर्यथाविभवविस्तरम् ।
समयानुगुणं चैव त्रिष्वेकं कारयेद् बुधः ॥ ६ ॥

पूर्वस्मिन् दिवसे कुर्यादङ्कुराणां समर्पणम् ।
बध्वा च कौतुकं पश्चादधिवासनमाचरेत् ॥ ७ ॥

उत्सवोक्तेन विधिना शयनादि प्रकल्पयेत् ।
सद्यो वा सकलं कुर्याद्बिम्बे स्नपनपूर्वके ॥ ८ ॥

---

4–(a) K My. उत्सवान्तेषु for उत्पातेषु च
–(b) K My. °योः for °ने
6–(c) ABM. °तत् for °व
–(d) BM My. °वम् for °कम्
7–(d) K My. °सं स° for सन°
8–(c) ABM °ऽपि for वा

अलाभे पूर्वबिम्बस्य तैर्थिकं वाधिवासयेत् ।
औत्सवं बिम्बमथवा बल्यर्चामथवा द्विज ॥ ९ ॥

कर्मार्चामथवा तत्र *न तेष्वपि च कूर्चकम् (?)* ।
कुर्यात् प्रासादकस्याग्रे मण्डपं स्नपनार्थकम् ॥ १० ॥

विंशद्धस्तसमायामं तदर्धेनैव विस्तृतम् ।
द्वारं चतुर्षु दिक्षु स्यात् प्रतिद्वारं च तोरणम् ॥ ११ ॥

विन्यसेत् कुम्भयुगलं संपूर्णं द्वारपार्श्वयोः ।
प्राच्यां वा मण्डपं कुर्यादवकाशोदये सति ॥ १२ ॥

त्रिधा विभक्ते तत्रापि पश्चिमेंऽशे प्रकल्पयेत् ।
हस्तोत्सेधां चतुर्हस्तां वेदिकां स्नानकारणात् ॥ १३ ॥

तन्मध्ये चतुरश्रं वा वृत्तं वा चतुरङ्गुलम् ।
समुन्नतं त्रितालेन विस्तारायामयोः समम् ॥ १४ ॥

अश्वभ्रभूमिकुल्यां च वेदिकोपरि कल्पयेत् ।
बेरान्तरासंभवे तु बहिर्वेदिं न कल्पयेत् ॥ १५ ॥

मण्डपं सर्वतोदिक्कं(क्षु ?) क्षौमवस्त्रैर्वितानयेत् ।
संवेष्ट्य दर्भमालाभिर्लम्बयेन्मौक्तिकस्रजः ॥ १६ ॥

आलिप्य गोमयजलैश्चूर्णैः सौवैश्च रेखयेत् ।
साङ्कुरा पालिका न्यस्य स्थापयेच्चापि दीपिकाः ॥ १७ ॥

कटाहं च जलद्रोणीं स्थापयेदीशकोणके ।
पूरयेद्गालितैः स्वच्छैः सलिलैश्च सुगन्धिभिः ॥ १८ ॥

---

9-(c) K My. उ° for औ°

10-(c) ABM पुरतो for °कस्याग्रे

14-(d) ABM °तत्स° for °योः स°

15-(a) ABM ° भ्रं भ्रमिकुल्यं for °भ्रभूमिकुल्याम्

16-(d) K My: °जम् for °जः

ऋग्भिश्च पावमानीभिरभिमन्त्र्य सितैः शुभैः ।
शुचिभिः सर्ववदनं वसनैरपिधाय च ॥ १९ ॥

पूजोपकरणं सर्वं विन्यसेच्च यथापुरम् ।
उपस्थानजलं पूर्णं दक्षिणे विन्यसेदपि ॥ २० ॥

*पूर्वं स्याच्च*(पूर्वस्यां च ?)न्दनाद्राणि चतुर्दश निपातयेत् ।
प्राचीनानि स्फालयित्वा तथोदञ्चि निपातयेत् ॥ २१ ॥

भवेयुरेवं कोष्ठानि शतमेकोनसप्ततिः ।
आयामो विस्तृतं चैव तेषां स्याच्छोडशाङ्गुलम् ॥ २२ ॥

प्रत्येकमाढकेन स्या*द्विहीनं*(द्व्रीहीणां ?) पीठकल्पनम् ।
तदर्धतण्डुलैः कुर्यात् तिलैश्चापि तदर्धकैः ॥ २३ ॥

दिक्ष्वष्टासु च मध्ये च नवकं नवकं भवेत् ।
कलशास्पदकोष्ठानामेकाशीतिर्भवेत् पृथक् ॥ २४ ॥

शेषाणि मार्जयेदन्यान्यष्टाशीतिपदान्यपि ।
व्रीहिभिः प्रथमं पीठं तस्योपरि च तण्डुलैः ॥ २५ ॥

तदूर्ध्वे च तिलैः कृत्वा क्रमेणैतेन पीठिकाम् ।
प्रतिपीठं कुशयुगं न्यस्तव्यं द्विजपुंगव ॥ २६ ॥

शातकुम्भमयाः कुम्भा राजता वाथ मृण्मयाः ।
पक्वबिम्बफलप्रख्या रहिताः काल(लु ?)मण्डलैः ॥ २७ ॥

छिद्रेण च विनाभूताः शिलास्फोटविवर्जिताः ।
द्रोणपूरणयोग्याः स्युस्तदर्धमथवा भवेत् ॥ २८ ॥

---

22–173 K. om.

24–(a) A मध्ये चतुष्वष्टसु च.
BKM मध्ये, चतुर्ष्वष्टसु च

27–(b) My. अथवा ताम्रमृण्मयाः ।

तदर्धसंमिता वापि सर्वे स्युः कलशा द्विज ।
विष्णुगायत्रिया सर्वान् प्रक्षाल्य कलशांस्ततः ॥ २९ ॥

वामे करतले न्यस्य दक्षिणेनैव वेष्टयेत् ।
तन्तुभिर्मन्त्रमुच्चार्य इन्द्रं नत्वेतिपूर्वकम् ॥ ३० ॥

यवान्तरं तु तन्मध्ये मध्याङ्गुलमथापि वा ।
एकान्तराङ्गुलं(ङ्गुलान्तरं ?) वाथ विदध्याद् द्विजपुंगव ॥ ३१ ॥

पश्चिमे कलशस्थाने धान्यपीठं विधाय च ।
आस्तीर्य च कुशांस्तत्र प्रागुदक्छिरसस्ततः ॥ ३२ ॥

उच्चार्य प्रणवं तस्मिन् न्यसेत् कुम्भानधोमुखान् ।
पारमेष्ठ्येन मन्त्रेण दर्भानास्तीर्य देशिकः ॥ ३३ ॥

पुरुषेणार्घ्यतोयेन प्राङ्मुखः प्रोक्षयेत्ततः ।
एषामुपरि विश्वेन विकिरेदक्षतानपि ॥ ३४ ॥

कलशानधिवास्यैतान् निवृत्योत्तानयेत् क्रमात् ।
जुहुयाद्विष्णुगायत्र्या सर्पिषाष्टोत्तरं शतम् ॥ ३५ ॥

घृतेन हुतशेषेण *सिक्ताज्यस्नपनं* तु वा (?) ।
कलशान् पूरयेद्यद्वत् पुरतो *ज्यादिभिः*(?) क्रमात् ॥ ३६ ॥

दिव्यकुम्भान् सप्तदश सर्वेणोद्धृत्य विन्यसेत् ।
विष्णुगायत्रिया धान्यपीठेषु क्रमशो मुने ॥ ३७ ॥

उदकुम्भांश्चतुःषष्टिं द्वादशाक्षरविद्यया ।
उदङ्मुखः प्राङ्मुखो वा स्थापयेत् पीठिकोपरि ॥ ३८ ॥

---

31–(a) BKM यद्वा° for यवा° ; °ध्यं for °ध्ये
–(b) BKM ङ्गुल्य° for °ङ्गुल°
36–(b) BKM °नस्तु for °नं तु
–(d) BKM °रि° for °र°
37–(a) BKM द्र° for दि°

मध्यमे नवके मध्ये घृतकुम्भं तु विन्यसेत् ।
उष्णोदकुम्भमैन्द्रे तु क्रमेणैतेन विन्यसेत् ॥ ३९ ॥

अग्न्यादीशानपर्यन्तं रत्नाम्भः फलवारि च ।
लोहाम्भो मार्जनजलं *शुद्धा(गन्धा ?)* म्बक्षतवारि च ॥ ४० ॥

यवोदकं क्रमादेवं विन्यसेन्मध्यमे घटे ।
अष्टकं तेषु कुम्भेषु क्रमादैन्द्रादि मध्यमे ॥ ४१ ॥

पाद्याम्भो दधि चार्घ्याम्बु क्षीरमाचमनार्थकम् ।
क्षौद्रं च पञ्चगव्यं च काषायजलमेव च ॥ ४२ ॥

शेषान् घटाँश्चतुःषष्टि शुद्धतोयैः प्रपूरयेत् ।
सप्तभिः पञ्चभिर्वापि दर्भैस्त्रिभिरथापि वा ॥ ४३ ॥

*कृत*(तान् ?) कूर्चानवागग्रान् सर्वकुम्भेषु निक्षिपेत् ।
महाकुम्भे चतुर्विंशत्कुश(?)कूर्चं विनिक्षिपेत् ॥ ४४ ॥

घटांस्तांश्चक्रमनुना पिदध्याच्च शरावकैः ।
युवा सुवासा इत्याद्या *ऋचामु* (च उ ?) क्त्वाम्बरैः क्रमात् ॥ ४५ ॥

वेष्टयेत् कण्ठदेशेषु श्वेतैश्च सदशैरपि ।
वेदविद्भिस्त्रयीविद्यामधीयानैर्द्विजैः सह ॥ ४६ ॥

सार्धमृग्भिर्बह्वृचैश्च गच्छेद्देवसमीपतः ।
देवमुत्थाप्य ऋग्भिश्च गुरुरुत्तिष्ठमन्त्रतः ॥ ४७ ॥

रथन्तराख्यसाम्नाथ ब्रह्मयानेऽधिरोपयेत् ।
ब्राह्मणैरुपरिष्टाच्च स्नानवेदितलस्य च ॥ ४८ ॥

आरोपयित्वा देवेशं पुण्याहं वाचयेत्ततः ।
अयुग्मैर्द्विजवर्यैस्तान् प्रीणीया(प्रीणये ?)च्च स्वशक्तितः ॥ ४९ ॥

प्रतिद्वारं तोरणादि सर्वमभ्यर्च्य पूर्ववत् ।
गीतं नृत्तं च वाद्यं च कारयेद्वेदपाठनम् ॥ ५० ॥

---

41-(c) My. विन्यस्य for कुम्भेषु

द्वारेषु यावत्कलशसंख्यं(?) तावद् घृतैर्हुनेत्(?) ।
चरुं च मूलमन्त्रेण तावत्संख्यं हुनेद(?)पि ॥ ५१ ॥

कलशानर्चयित्वा च पुंसूक्तेन च देशिकः ।
देवमर्घ्यादिभिश्चेष्ट्वा कुर्याच्चाज्याधिरोपणम् ॥ ५२ ॥

दन्तानां धावनं कृत्वा तैलमामलकं तथा ।
सोत्तरीयं च वसनं दत्वार्घ्याद्यैर्यजेत्पुनः ॥ ५३ ॥

इष्ट्वा दीपावसानं च कुम्भैः पाद्यजलादिकैः ।
आज्यकुम्भादिकैर्देवं स्नापयित्वा घटैः क्रमात् ॥ ५४ ॥

दद्यात्करे देशिकस्य मूर्तिपः पाद्यकुम्भकम् ।
कुम्भादादाय कूर्चं तत् तेन ब्रह्मादितीर्थतः ॥ ५५ ॥

स्नापयेद्विष्णुगायत्र्या पाद्याम्भोभिः सुरेश्वरम् ।
तद्विष्णोरितिमन्त्रेण स्नापयेदर्घ्यवारिणा ॥ ५६ ॥

न ते विष्णोरि(इ ?)ति पुनः *स्नात्वा चा*(संस्नाप्या ?)चमनाम्भसा ।
स्नपनं पञ्चगव्येन विष्णोः कर्मेतिमन्त्रतः ॥ ५७ ॥

दधिक्राविण्णेति(विण्ण ?)मन्त्रेण दध्ना स्नपनमाचरेत् ।
पयोव्रतेन साम्ना स्यात् क्षीरकुम्भाभिषेचनम् ॥ ५८ ॥

मधुवातेति मधुना कषायस्नपनं पुनः ।
ओषध्य इति मन्त्रेण विदधीत महामुने ॥ ५९ ॥

उष्णाम्बुस्नपनं कुर्यात् तद्विष्णोरितिमन्त्रतः ।
फलवार्यभिषेकं च फलिनीत्यनुवाकतः ॥ ६० ॥

स्नापयेन्मार्जनजलं शन्नो देवीरिति ब्रुवन् ।
स्नापयेदक्षतजलैः सावित्र्या देशिकोत्तमः ॥ ६१ ॥

रत्नाम्भसा च स्नपनं त्रातारमितिमन्त्रतः ।
महाव्याहृतिभिर्लोहं गन्धद्वारेति गन्धकम् ॥ ६२ ॥

यवाम्भसा च मन्त्रेण शतधारेति कल्पयेत् ।
घृतेन स्नपनं कार्यं घृतस्नातेतिमन्त्रतः ॥ ६३ ॥

यद्वा पुरुषसूक्तस्य ऋग्भिः षोडशभिः क्रमात् ।
इदं विष्णुरिति प्रोच्य यद्वाष्टार्णेन वा पुनः ॥ ६४ ॥

द्विषडर्णेन वा विष्णुगायत्र्या वापि कारयेत् ।
यद्वा तन्मूर्तिमन्त्रेण कुर्याद्देवाभिषेचनम् ॥ ६५ ॥

उष्णाम्भसा क्षालयेच्च घृतस्नाने कृते सति ।
उद्धारे पाद्यमुख्यानां मध्ये मध्येऽभिषेचयेत् ॥ ६६ ॥

अन्यैः शुद्धोदकलशैरष्टाभिश्चाष्टभिः पृथक् ।
उपस्नानं तु कुर्वीत देवस्याष्टार्णविद्यया ॥ ६७ ॥

प्रतिद्रव्यघटस्नाने धौतवस्त्रोत्तरीयके ।
अर्घ्यादिदीपपर्यन्तं कारयेद्देशिकोत्तमः ॥ ६८ ॥

विष्णुगायत्रिया द्रव्यकलशोद्धृतिरुच्यते ।
शुद्धोदकोद्धृतिं कुर्याद् द्विषडक्षरविद्यया ॥ ६९ ॥

निशातण्डुल*पीतोर्ध्व(?)*चूर्णैः संपूरयेन्नवैः ।
कलशान् सप्त वा पञ्च त्रीनेकं वाथवा भवेत् ॥ ७० ॥

स्थापयित्वा सापिधानान् कुम्भांस्तांस्तण्डुलोपरि ।
कूर्चं निक्षिप्य कुम्भेषु आवाह्यार्घ्यैः सभाजयेत् ॥ ७१ ॥

श्रीसूक्तेनाभिषिञ्चेच्च वासुदेवं सनातनम् ।
सहस्रधारया विष्णुं जलैरिव निषेचयेत् ॥ ७२ ॥

विष्णुदेहपरिभ्रष्टान् निशाचूर्णान् स्वमूर्धनि ।
*यो(ये ?) धारयेच्च(युः ?)पुरुष*(षा ?)स्तिलकं चैव कुर्वते ॥ ७३ ॥

---

70–(a) A. °ठो for °तो My. पीठोर्घे for पीतोर्ध्व
–(b) My. पूर्णैः संपूर्णये° for चूर्णैः संपूरये°

## अधमोत्तमस्नपने कलशकल्पनम्

१९.२१-५, ३७-४३, ८२.

उ—





प—





पू—





द—

⊗ = द्रव्यकलशः  □ = शुद्धोदकलशः

पिबन्ति पश्चात्पतिता[न्] देवदेवशरीरतः ।
वहन्ति च शिरोभिर्ये ते सर्वे क्षीणकल्मषाः ॥ ७४ ॥

अन्ते च परमं धाम प्रविशन्ति सनातनम् ।
अलंकारासने देवं नीत्वालंकारवस्तुभिः ॥ ७५ ॥

सकलैर्भूषयित्वा च नीराज्य च सभाज्य च ।
देशिकेन्द्राय मात्रांश्च (च ?) तण्डुलैः खारिसंमितैः ॥ ७६ ॥

दापयित्वा तदर्धैर्वा तदर्धैरधमोत्तमः(?) ।
भोजनासनगे देवे पायसादि निवेदयेत् ॥ ७७ ॥

अन्नजातं च सकलं सर्वव्यञ्जनसंयुतम् ।
फलैः सर्वैः सुसंपन्नं हृद्यैर्दुग्धैर्द्रवीकृतम् ॥ ७८ ॥

चोष्योपवर्गसंपूर्णं सर्वभोज्यसमन्वितम् ।
ताम्बूलमुखवासं च निवेद्यासीत आसने ॥ ७९ ॥

*भगवन्तं प्रार्थिते यत् यजमानश्च कीर्त्यते* (?) ।
यजमानो गुरुं पश्चाद्दक्षिणाभिः सुतोषयेत् ॥ ८० ॥

शतनिष्कं तदर्धं वा तत्पादं वाथ दक्षिणा ।
पूजार्थमाहृतं सर्वमाचार्यायैव दापयेत् ॥ ८१ ॥

स्वैश्वर्यानुगुणं सर्वान् ऋत्विजः प्रीणयेदपि ।
इदं तु स्नपनं विद्यादधमोत्तमसंज्ञिक(त ?)म् ॥ ८२ ॥

द्वात्रिंशद्भिः कोणसंस्थैः केवलोदकपूरितैः ।
रहितं स्नपनं यत्स्यात् तत्स्यान्मध्यमसंज्ञितम् ॥ ८३ ॥

अधमाधममित्युक्तं शुद्धोदघटवर्जितम् ।
पाद्यार्घ्याचामकुम्भेषु कषायफलयोरपि ॥ ८४ ॥

---

74–90. My. om.

80–(a) A भवन्तं प्रार्थ्यते यवत्

तथैवाक्षतगन्धाढ्यघटेष्वपि पृथक् पृथक् ।
द्रव्याण्येषु क्षिपेदष्टौ तत्प्रमाणं शृणुष्व(?)मे ॥ ८५ ॥

तुलसी पद्मपू(दू ?)र्वाश्च(र्वे च ?) श्यामाकं विष्णुपर्ण्यपि ।
अक्षतं बिल्वपर्णानि चन्दनं चाष्टमं भवेत् ॥ ८६ ॥

विना चन्दनद्रव्याणि(विनैव चन्दनद्रव्यं ?) भवेयुर्मुष्टिमात्रया ।
कुशाग्राक्षतसिद्धार्थं मात्रया पलसंमितम् ॥ ८७ ॥

निष्कत्रयं चन्दनं स्यात् तिलाश्च सयवा अपि ।
पुष्पाणि सुरभीणि स्युः फलं पक्वं भवेदपि ॥ ८८ ॥

मुष्टिमात्राणि शिष्टानि त(क ?)क्कोलं घनसारकम् ।
मुकुलं चम्पकस्यापि जातिरेलाफलान्यपि ॥ ८९ ॥

चन्दनं सलवङ्गत्वक् पुष्पाणि च पृथक् पृथक् ।
एकैकशः पलार्धं स्यात् परिमाणेन काश्यप ॥ ९० ॥

बिल्वं पलाशखदिरशम्य्यश्वत्थकपित्थकाः ।
न्यग्रोधोदुम्बरश्चैव(?) प्रोक्तान्येषां पृथक् पृथक् ॥ ९१ ॥

एताः पलप्रमाणाः स्युराम्रामलकबिल्वकाः ।
नालिकेरं बीजपूरं कदलीपनसाव(से अ?)पि ॥ ९२ ॥

मातुलुङ्गं च भिन्नानि फलान्यन्यानि निक्षिपेत् ।
प्रियङ्गुयवगोधूमकुङ्कुमो(?)ष्टमशालयः ॥ ९३ ॥

वेणुनीवारजाः प्रोक्तास्तण्डुला मुष्टिमात्रकाः ।
काश्मीरं चन्दनं कोष्ठमिङ्गुद्युशिरमूलकम् ॥ ९४ ॥

मांसी मुरं च ह्रीबेरं गैरिकं च पलं क्रमात् ।
वैडूर्यं पद्मरागं च प्रवालं पुष्यरागकम् ॥ ९५ ॥

---

92–(d) My. कपित्थ for कदली
94–(c) AB My. कु° for को°
95–(a) A चन्द्रि° for च ह्री.
My. श्री° for ह्री.

माणिक्यं ब्रह्मरागं च नीलं मरकतं तथा ।
वज्रं च नवरत्नानि कुम्भे तानि द्विजोत्तम ॥ ९६ ॥

हेम(स्वर्णं ?)रजतताम्रं च सीसं त्रपु सकांस्यकम् ।
कालायसं च सप्त स्युर्घटे क्षेप्यानि लोहके ॥ ९७ ॥

निष्कप्रमाणान्येतानि पृथक् पृथगिति द्विज ।
कुशाग्रं सहदेवी च सदाभद्रं शिरीषकम् ॥ ९८ ॥

हरिद्रासूर्यवर्तन्यौ मुष्टिमात्राणि मार्जने ।
व्रीहिर्यवो वेणुयवकुसुम्बानि यवोदके ॥ ९९ ॥

मृत्पात्रेऽभिनवे शुद्धे पञ्चगव्यानि निक्षिपेत् ।
विष्णुगायत्रिया ग्राह्यं गोमूत्रं गोशकृद्रसम् ॥ १०० ॥

गन्धद्वारेति गृह्णीयादाप्यायस्वेति वै पयः ।
दधिक्राविण्णेति दधि ह्याज्यं शुक्रमसीति च ॥ १०१ ॥

गृहीत्वा पृथगेतानि विष्णुगायत्रियाथवा ।
पञ्चोपनिषदा वापि योजयेन्मुनिसत्तम ॥ १०२ ॥

घृताद्दधि स्याद् द्विगुणं त्रिगुणं च पयो भवेत् ।
गोमूत्रं षड्गुणं प्राहुश्चातुर्गुण्यं शकृद्रसम् (सः) ॥ १०३ ॥

मानमेतद्भवेत् स्नाने प्रोक्षणे सकलं समम् ।
समे गोमयगोमूत्रे तस्मात् स्याद्द्विगुणं दधि ॥ १०४ ॥

सर्पिश्चतुर्गुणं तस्माद् घृतमष्टगुणं पयः ।
प्रमाणं पञ्चगव्यानां प्राशने द्विज ईरितम् ॥ १०५ ॥

पञ्चगव्यं द्रोणमानं तादृशं चाज्यमानकम् ।
तत्प्रमाणं दधि क्षीरं तावन्माक्षिकमेव हि ॥ १०६ ॥

---

98 & 99 My. om.

100–(ab) My. om.

–(d) My. ध्रुवम् for रसम्

103–(d) My. ध्रुवम् for रसम्

स्यादर्धमाढकं स्याद्वा न्यूनं चेदासुरं भवेत् ।
स्नपनं(ने ?)तु गृहार्चायाः प्रस्थान्यूनं प्रकल्पयेत् ॥ १०७ ॥

असंभवेऽन्यद्रव्याणां दूर्वैका पाद्यगा भवेत् ।
अर्घ्ये च सर्षपाः कल्यास्तथैवाचमनीयके ॥ १०८ ॥

त(क ?)क्कोलं सहदेवी स्यान्मार्जनाम्भसि चन्दनम् ।
गन्धतोये कषाये स्यादाश्वत्थं शीत उष्णकम् ॥ १०९ ॥

वज्रमेकं रत्नकुम्भे कदल्येका फलोदके ।
लोहोदके हेम चैवमक्षते शालितण्डुलम् ॥ ११० ॥

व्रीहिरेवं यवघटे शस्यते द्विजपुंगव ।
दध्यभावे भवेत्क्षीरं क्षीराभावे दधि स्मृतम् ॥ १११ ॥

मध्वभावे दधि भवेदाज्याभावे तथा मधु ।
पञ्चगव्येष्वलब्धेषु घृतं केवलमिष्यते ॥ ११२ ॥

पञ्चगव्येषु यस्य स्यादलाभः स्याद् घृतेन तत् ।
अतः परं मध्यमस्य स्नपनस्य विधिं शृणु ॥ ११३ ॥

घटानां पूर्वमुक्तानां विहिते स्न(स्था ?)पने द्विज ।
संमृज्य पंक्तियुगलं बहिः कुर्यात्तु वीथिकाम् ॥ ११४ ॥

बहिर्घटास्पदं कृत्वा प्राच्यादिषु चतुर्ष्वपि ।
घटानेकोनपञ्चाशत् स्थापयेद् द्विजपुंगव ॥ ११५ ॥

चत्वारो द्रव्यकलशास्तेषु शुद्धजलाः परे ।
गुळ(ड ?)श्चेक्षुरसः पश्चान्नालिकेरजलं ततः ॥ ११६ ॥

शान्तिवारि क्रमादेतान् कुम्भान् पूर्वादि विन्यसेत् ।
गुळा(डा ?)भावे चेक्षुसारं तदभावे गुळं(डो ?) भवेत् ॥ ११७ ॥

---

107–(b) ABKM यद्वा समं ततः for चेदासुरं भवेत्
108–(c) BKM सर्पिषः for सर्षपाः
109–(d) My. °कम् for °त्थम्
117–(c) My. च क्षौदं(द्रं ?)स्यात् for चेक्षुसारम्

अभावे नालिकेरस्य गव्यं क्षीरं तु गृह्यते ।
यवनीवारतुलसीवेणु—(स्या ?)त् श्वेतसर्षपा(प ?): ॥ ११८ ॥

द्रव्याणि शान्तिकलशे सतिला....(तुलसी ?) भवेत् ।
....(द्रव्यं च ?)मुष्टिमात्रं स्यादन्यत्कुडुबमानकम् ॥ ११९ ॥

शेष(षा ?) लाभे तु तुलसी ग्राह्यैका कश्यपात्मज ।
गुलो(डो ?)दकघटास्तै(थैस्तु ?)....(विहि ?) ते स्नपने ततः ॥ १२० ॥

पाद्यद्रव्यादिभि................(द्रव्यैर्घृतान्तैर ?)भिषेचयेत् ।
स्नपनं................(मधुवातेतिमन्त्रेण गुडवारिणा ?) ॥ १२१ ॥

[मधु नक्तेतिमन्त्रेण स्नानं चेक्षुरसेन वै ।
नालिकेरजलस्नानं मधुमानितिमन्त्रतः ॥ १२१ *a* (?) ॥]

शान्तिद्रव्यघटस्नानं वेदाहमिति कारयेत् ।
गुड....(शुद्धवारि ?)घटस्नानं जितं त इति चेष्यते ॥ १२२ ॥

मध्य........(मोत्तममेवं ?)स्यात् स्नपनं मधुविद्विषः ।
अतः परं प्रवक्षामि मध्यमे........(मध्यमं विधिम् ?) ॥ १२३ ॥

*कूर्चो*(शुद्धो ?)दक-(वि ?)हीनो यश्चतुर्द्रव्यघटाप्लवः(?) ।
*मध्यमामथ(?)मारुह्य* (मध्यमाधममित्युक्तं ?) सर्वशुद्धोदवर्जितम्
॥ १२४ ॥

द्रव्यकुम्भैस्ततः सर्वैः .... .... (स्नपनं ?) परमेष्ठिनः ।
उत्तमं स्नपनं .... .... .... (वक्ष्ये यथावदवधारय ?) ॥ १२५ ॥

.... .... (प्राच्यादिषु चतुर्दिक्षु ?) कलशानां समर्पणम् ।
एतावत्कलशान् कोणदिक्षु निक्षिप्य तेष्वपि ॥ १२६ ॥

---

118–(a) My. Adds (पलान्यशीतिरर्धं वा तदर्धं वा गुलं(डो ?) भवेत्) after 117-d and before 118-a.

118–(cd) ABKM. om.

119–130 ABKM, om.

चन्दनं कुङ्कुमं कुष्ठमेतान्येकैकशः पलम् ।
*आढ घि ? का .... .... .... (?) तया तथा* ॥ १२७ ॥

केतकी चम्पकं मुष्टिः पुष्पा*ण्यष्ट*/ह्यष्टोः पृथक् पृथक् ।
अश्वत्थेन्द्रलतापद्ममेकपत्रं तथाम्बुजम् ॥ १२८ ॥

एतेषां .... (चापि प ?) त्राणां मुष्टिमात्रं पृथक् पृथक् ।
कलशे मङ्गलाख्ये तु द्रव्याण्येतानि निक्षिपेत् ॥ १२९ ॥

सर्वौषधिघटं न्यस्येत्कोणे नैर्ऋतसंज्ञके ।
मुरा हरिद्रायुगलमांसीकुष्ठमयं फलम्(?) ॥ १३० ॥

वचा मुस्ता च कर्पूरं प्रत्येकं पलमात्रया ।
शतमूलं वचा शुण्ठी गोरण्डं बिल्वमूलकम् ॥ १३१ ॥

शतपुष्पा शतावर्या बला व्याघ्रीद्वयं तथा ।
पिष्ट्वा पलमिताश्चैव मूलौषधिघटे न्यसेत् ॥ १३२ ॥

सर्वमङ्गलवस्तूनामलाभे चन्दनं भवेत् ।
असंभवे चौषधीनां सर्वासां कुष्ठमुच्यते ॥ १३३ ॥

चन्दनं सर्वगन्धानामलाभे चैकमेव वा(?) ।
अलाभे सर्वमूलानां बलैकैव प्रशस्यते ॥ १३४ ॥

अधिदेवार्चनं कृत्वा पश्चात्कुम्भान् समुद्धरेत् ।
इन्द्रादीशानपर्यन्तमुद्धरेत् कुम्भसंचयम् ॥ १३५ ॥

मङ्गलाम्भोघटस्नानं विष्णोर्नुकमिति द्विज ।
सर्वौषधिघटस्नानमोषध्य इति मन्त्रतः ॥ १३६ ॥

नारायणानुवाकेन गन्धाम्भःस्नपनं हरेः ।
मन्त्रेण या ओषधीभिर्मूलकुम्भाभिषेचनम् ॥ १३७ ॥

अष्टाक्षरेण मन्त्रेण शुद्धोदकपरिप्लुतः (प्लवः ?) ।
पाद्यादिघृतपर्यन्तं स्नापयेत् पूर्ववद्धरिम् ॥ १३८ ॥

---

131–(ab) ABKM om.

एतच्च स्नपनं ब्रह्म(प्रोक्त ?) ब्रह्मन्नुत्तमसंज्ञितम् ।
पाश्चात्य(?)शुद्धसलिलहीनमुत्तममध्यमम् ॥ १३९ ॥

हीनं शुद्धोदकैः सर्वैरुत्तमाधमसंज्ञितम् ।
संक्षेपकलशाश्चैव पञ्चविंशतिसंख्यकाः ॥ १४० ॥

त्रिसप्तत्यधिकं चतुःशतसंख्याश्च विस्तृतौ ।
घृतादिद्रव्यदेवांस्त्वं शृणुष्व(?)द्विजसत्तम ॥ १४१ ॥

वासुदेवश्च पुरुषः सत्यश्चाच्युत एव च ।
अनन्तः केशवाद्याश्च द्वादश क्रमशो मुने ॥ १४२ ॥

वाराहो नारसिंहश्च श्रीधरो हयवक्त्रकः ।
चत्वारो वासुदेवाद्या नारायणवसुन्धरे ॥ १४३ ॥

घृतमुष्णोद फलोद(?)मार्जनाक्षत*रत्नवा(?)* ।
लोहगन्धोदकयवपाद्यार्घ्याचामवार्यपि ॥ १४४ ॥

पञ्चगव्यं दधि क्षीरं मधु क्षार(?) यवोदकम् ।
इक्षुसारं(रो ?) नालिकेरशान्तिमङ्गलवारि च ॥ १४५ ॥

सर्वौषध्यम्बु गन्धाम्बु मूलाम्भः केवलं जलम् ।
धान्याम्भश्च क्रमादेषां कुम्भानां देवता इमाः ॥ १४६ ॥

एतानेतेषु कुम्भेषु साङ्गपीठान् समर्चयेत् ।
सुदर्शनं(नः ?) चक्रिकाणां कूर्चानामस्त्रमेव च(?) ॥ १४७ ॥

विष्णुर्देवो वाससां स्यात् सर्वेषां वा जनार्दनः ।
एतानभ्यर्च्य कुर्वीत कलशैः स्नपनं हरेः ॥ १४८ ॥

इत्येतत्स्नपनं प्रोक्तं नवधा तव काश्यप ।
अष्टोत्तरशतैः कुम्भैः स्नपनं शृणु सुव्रत ॥ १४९ ॥

---

145–(b) My. गुळो° for यवो°
148–(a) My. °वः for °साम्
149–(ab) ABKM om.

कलशस्थापनस्थानं त्रिधाकृत्य द्वयोर्द्वयोः ।
ब्रह्मदेवतयोः सूत्राण्येकादश निपातयेत् ॥ १५० ॥

प्राच्योदीच्यादिप्रसक्तं मध्ये वा दिक्षु चाष्टसु ।
चत्वारि चत्वारि पृथक् कुम्भस्थानानि वीथयः ॥ १५१ ॥

शिष्टानि कार्याण्येवं स्यात् षट्त्रिंशत्कोष्ठसंभवः ।
प्रमाणान् घटसंस्थेषु(?) विन्यसेन्मानुषे पदे ॥ १५२ ॥

स्थापयेद्दिक्षु चाष्टासु पृथङ् नवघटान् न्यसेत् ।
एवमष्टोत्तरशतं घटा स्थाप्या द्विजोत्तम ॥ १५३ ॥

चतुष्टयं घटानां स्यात् पदे ब्राह्मे तु मध्यमे ।
एकं त्याज्यं(?)त्रिकं शिष्टं शुद्धाम्भोभिः प्रपूरयेत् ॥ १५४ ॥

दिव्ये पदे चाष्टदिक्षु चतुष्केष्वष्टसु क्रमात् ।
ऐन्द्रादीशानपर्यन्तमेकैकस्मिन् क्षिपेद् घटान् (टे ?) ॥ १५५ ॥

उष्णोदरत्नसलिलं फलाम्भो लोहवारि च ।
मार्जनं गन्धसलिलमक्षताम्भो यवोदकम् ॥ १५६ ॥

मानुषे च यथापूर्वं पाद्याद्याः कलशाः पृथक् ।
अवशिष्टान् घटाञ्छुद्धतोयैः संपूरयेद् द्विज ॥ १५७ ॥

एतैः कार्यं यथापूर्वं स्नानं मधुघटादितः ।
शृणुष्वैकोनपञ्चाशद्घटैराप्लावनं हरेः ॥ १५८ ॥

पातयेद्दशसूत्राणि प्राच्योदीच्यानि काश्यप ।
स्थापयेन्मध्यनवके नवकुम्भान् द्विजोत्तम ॥ १५९ ॥

ऐन्द्रादिषु बहिर्दिक्षु सौम्यान्तेषु पृथक् पृथक् ।
स्थापनीयं कुम्भषट्कं चतुष्कोणेषु च द्विज ॥ १६० ॥

प्रत्येकं चतुरः कुम्भान् स्थापयेद्देशिकोत्तमः ।
अन्यानि कल्पयेद्वीथीः पूर्ववद् द्रव्यसंस्थितिः ॥ १६१ ॥

# एकोनपञ्चाशत्कलशस्नपने कलशकल्पनम्

१९.१५८-६१

उ-





प-





पू-





द-

 = द्रव्यकलशः  = शुद्धोदकलशः

पञ्चविंशतिभिः कुम्भैः स्नपनं श्रूयतां द्विज ।
यथापूर्वं पातयित्वा सूत्राणां दशकं भुवि ॥ १६२ ॥

कोष्ठानां नवके मध्ये स्थापयेत् कलशान् नव ।
चतुर्दिक्षु च निक्षिप्य प्रत्येकं कलशत्रिकम् ॥ १६३ ॥

चतुष्कोणेषु चैकैककलशानां प्रकल्पनम् ।
चतुर्दिक्षु च पार्श्वस्थौ द्वौ च कुम्भौ तु केवलौ ॥ १६४ ॥

अष्टौ तान् वर्जयित्वान्ये द्रव्यकुम्भाः प्रचोदिताः ।
मध्यस्थकोष्ठनवकं द्रव्यैः प्राग्वत् प्रपूरयेत् ॥ १६५ ॥

अथवा कलशान् पञ्चविंशति(?)र्गन्धवस्तुभिः ।
पूरयेद्वा क्रमात्तासां (?) शृणु द्विजवरोत्तम ॥ १६६ ॥

वीरणोदकसुश्वेतागरुकाश्मीरसंभवम् ।
कुष्ठं तगरुकोशीरकार्ष्णं चागरुचन्दनम् ॥ १६७ ॥

*बहिष्ठपङ्क्त्यश्वै*(ह्रीबेरपङ्कमे ?)तानि मध्यमे नवके नव ।
मध्याद्यैशान्तमेतानि घटेषु प्रक्षिपेद् द्विज ॥ १६८ ॥

तमालं श्वेतकुष्ठं च रजश्च सुरपर्णजम् ।
कर्पूरनागसुमनोघनचम्पककुड्मलम् ॥ १६९ ॥

प्रियङ्गवं केसरं च कालेयं ग्रन्थिपल्लवम् ।
मांसी खर्जूरसहिता शिलाजतु सशालकम् ॥ १७० ॥

देवदारुर्मुरा चैते(तैः?) बाह्याः (ह्यान् ?) षोडश पूरयेत् ।
*अथवा कोणदिक्कुम्भरहितं स्नापयेद्धरिम्* ॥ १७१ ॥

---

167–(a) My. हरिचन्दन for वीरणोदक
168–(a) AKM पङ्क for पङ्क्त्य°
–(c) KM °ध्योदैः शान्ति °B My. °ध्याद्यैः शान्ति for ° मध्याद्यैशान्त°
171–(cd) My. om.

*यद्वा सप्तोत्तरैः कुम्भै रहितैः स्नापयेद्धरिम्* (?) ।
यद्वा सप्तोत्तरैः कुम्भैर्दशभिः स्नापयेद्धरिम् ॥ १७२ ॥

पातयित्वाष्टसूत्राणि प्राच्युदञ्चि च सुव्रत ।
तन्मध्ये च यथापूर्वं नवभिः कल्पयेद् घटैः ॥ १७३ ॥

दिक्ष्वष्टासु तथाष्टौ च घटाः स्युर्द्विजसत्तम ।
यथापूर्वं सप्तदशवस्तुभिः कल्पयेदिमान् ॥ १७४ ॥

अथ वा सूत्रनवकं प्राच्योदीच्यां(?) निपातयेत् ।
मध्यमे तु चतुष्कोष्ठे कुम्भानां स्याच्चतुष्टयम् ॥ १७५ ॥

द्वौ द्वौ चतुर्दिशि स्यातां कोणेष्वेकैकमेव हि ।
रत्नं लोहं तथा गन्धमाज्यं चापि यथाक्रमम् ॥ १७६ ॥

आग्नेयादिषु कोणेषु मध्यस्थेष्वनुपूर्वशः ।
बाह्ये कोष्ठद्वये चैन्द्रे पाद्यार्घ्ये कुम्भसंस्थितिः ॥ १७७ ॥

वह्नौ दधिघटं(टो ?) याम्यकुम्भे च द्वितयेऽपि च ।
आचामं पञ्चगव्यं च क्षीरं नैर्ऋतकोणके ॥ १७८ ॥

पाश्चात्यघटयुग्मे तु साक्षताम्भस्तु मार्जनम् ।
वायुकोणे मधुघटं(टः ?) सौम्ययुग्मे कषायकम् ॥ १७९ ॥

कुशाम्भो यवकुम्भः स्याच्छर्वकोणे द्विजोत्तम ।
पाद्यादिषोडशघटान्नृभिः पुरुषसूक्तकैः ॥ १८० ॥

स्नापयेद्दधिकुम्भैर्वा क्रमाद् द्वादशभिर्विभोः ।
स्नपनं मध्यमस्थेषु कुम्भेष्वथ चतुर्ष्वपि ॥ १८१ ॥

रत्नेन लोहेन तथा गन्धेनैव च सर्पिषा ।
यथा दिक्ष्वष्टसु तथा कोष्ठेष्वारभ्य पूर्वतः ॥ १८२ ॥

---

172–174 My. om.
174–(ab) K. om.
175–(ab) My. om.

पाद्यदध्यर्घ्यसपयः साचाममधुगव्यकैः ।
फलाम्भसा च कुर्वीत स्नानं विष्णोरनुक्रमात् ॥ १८३ ॥

यद्वा द्वादशभिः स्नानं विष्णोः कुर्याद् द्विजोत्तमः ।
अग्न्यादीशान(न्त ?)कोणे( ष्ठे ?)षु कोष्ठेनागरुणापि च ॥ १८४ ॥

ग्रन्थिपल्लवबीजेन चन्दनाम्भोघटेन च ।
बहिरष्टासु पूर्वादिदिक्ष्वीशावधिकेषु(कासु ?) च ॥ १८५ ॥

काश्मीरजेन मांसीभ्यां तमालेन मुरेण च ।
शैलेयसुरपर्णीभ्यां चम्पकप्रसवेन च ॥ १८६ ॥

खर्जूरेण घटाम्भोभिः पूरितैः स्नापयेद्धरिम् ।
नवभिर्वा घटैः कुर्यान्मध्ये दिक्ष्वष्टसु क्रमात् ॥ १८७ ॥

पाद्यदध्याज्यगो*क्षीरमा(?)*चाममधुपूरितैः ।
पञ्चगव्यफलाम्ब्वाद्यैरगरुतोयैरपि क्रमात् ॥ १८८ ॥

नवरत्नैः सुपूर्णैर्वा घटैर्नवभिना-(राप्लु ?)वः ।
मध्ये चतुर्दिक्षु कुर्यादाप्लवं पञ्चभिर्घटैः ॥ १८९ ॥

मणिप्रवालमुक्ताभिर्वज्रवैडूर्यकुम्भकैः ।
पञ्चलोहघटैर्वापि यद्वा पञ्चामृतैर्भवेत् ॥ १९० ॥

मधुना गुळ(ड ?)युक्तेन क्रमादाज्येन पूरितैः ।
दध्ना च पयसा यद्वा पञ्चगव्यैः क्रमाद्भवेत् ॥ १९१ ॥

एकेन वा हरेः स्नानघटेन स्नापयेद्धरिम् ।
द्रव्यैः समस्तैर्व्यस्तैर्वा प्रागुक्तैः सघृतेन च(?) ॥ १९२ ॥

---

184–(b) ABM. °जाग्रिम for °जोत्तमः

188–(a) ABM °ध्यर्घ्य for °ध्याज्य ; सं for गो,

189–(ab) ABM My. om.

190–(d) AB °ञ्चगतै° K °ञ्चमूतै° M °ञ्चशतै for °ञ्चामृतै°

एकस्य कलशस्यैकनिष्कं स्याद्दक्षिणा गुरोः ।
तदर्धं वा तदर्धं वा यथावित्तानुरूपतः ॥ १९३ ॥

निष्फलं दक्षिणाहीनं स्नपनं फलकामिनाम् ।
तस्मात् फलार्थिभिर्देया दक्षिणाल्पापि काश्यप ॥ १९४ ॥

इति पञ्चरात्रे महोपनिषदि विश्वामित्रसंहितायां
स्नपनविधिर्नाम एकोनविंशोऽध्यायः ॥

## विंशोऽध्यायः

विश्वामित्रः—

कृत्वा वृत्रस्य निध(हन ?)नं देवेन्द्रो ब्रह्महत्यया ।
अभिभूतः परिभ्रष्टः पदात् स्वस्मात् सह श्रिया ॥ १ ॥

आराध्य जगतामीशं नारायणमनन्यधीः ।
सहस्रकलशस्नानविधिना स्वपदं पुनः ॥ २ ॥

लब्धवाँस्तद्द्विजश्रेष्ठ विधानं कथयाम्यहम् ।
अन्येऽपि बहवो देवं समाराध्य श्रियः पतिम् ॥ ३ ॥

अनेन विधिना कामान् दुर्लभानपि लेभिरे ।
एकाधिकैः सहस्रैस्तु कलशैरभिषेचनम् ॥ ४ ॥

संप्रीणनं भगवतः सर्वपापापनोदनम् ।
जयप्रदं पुष्टिकरं पुत्रसंपत्प्रदायकम् ॥ ५ ॥

आयामेन चतुःपष्टिहस्तयुक्तं द्विजोत्तम ।
तदर्धेन तु विस्तीर्णं मण्डपं कल्पयेन्मुने ॥ ६ ॥

द्वारतोरणकुम्भादिप्रक्लृप्तिः पूर्ववद् भवेत् ।
प्रतिष्ठोक्तप्रकारेण मङ्गलाङ्कुररोपणम् ॥ ७ ॥

---

3–(c) My. °वाः for वम्

4–(b) K. °भि for °पि

बध्वा च कौतुकं शय्यां कृत्वा तत्राधिवासयेत् ।
कलशास्पदभूभागं पञ्चविंशतिभेदतः ॥ ८ ॥

विभजेत् सूत्रपातेन ब्रह्मस्थाने तु मध्यमे ।
एकोत्तराशीतिघटस्थानं संकल्पयेत्ततः ॥ ९ ॥

तद्बाह्ये दैविके भागे दिक्ष्वष्टसु पृथक् पृथक् ।
दश सप्तोत्तरान् कुम्भान् स्थापयित्वा विचक्षणः ॥ १० ॥

बाह्ये तु मानुषे भागे कृते षोडश वा पुनः ।
घटानेकोनपञ्चाशत् प्रतिभागं निवेशयेत् ॥ ११ ॥

वीथीः प्रकल्पयेदेतदनुकूलं विचक्षणः ।
मध्यमे ब्रह्मभागे तु मध्यमे नवके द्विज ॥ १२ ॥

घृतोष्णोदकरत्नाम्भः फललोहाम्बुमार्जनम् ।
गन्धाक्षतयवाम्बूनि विन्यस्य तदनन्तरम् ॥ १३ ॥

नवकेष्वष्टसु प्राच्यादीशानान्तेषु च क्रमात् ।
पाद्यार्घ्याचमनीयानि पञ्चगव्यं चतुर्दिशम् ॥ १४ ॥

मध्यकुम्भेषु विन्यस्य कोणेषु च पयो दधि ।
क्षौद्रं कषायं क्रमशो मध्यकुम्भेषु विन्यसेत् ॥ १५ ॥

शेषान् कुम्भाँश्चतुःषष्टि शुद्धाम्भोभिः प्रपूरयेत् ।
ऐन्द्रादिसप्तदशके चतुष्के मध्यमे घटे ॥ १६ ॥

मलयोद्भवकाश्मीरकर्पूरोशीरकर्दमम् ।
कोणस्थसप्तदशके चतुष्के विन्यसेत् क्रमात् ॥ १७ ॥

तिलामलकसिद्धार्थतैलानि घनसारजम् ।
तैलं च शेषान् कलशानष्टाविंशच्छतं बुधः ॥ १८ ॥

पूरयेच्छुद्धपयसा चन्दनाद्यधिदैवतम् ।
पुरुषं सत्यमौपेन्द्रं नरनारायणावपि ॥ १९ ॥

अच्युतं चानिरुद्धं च हरिकृष्णौ क्रमाद्यजेत् ।
मानुष्यैकोनपञ्चाशद्घटपुञ्जेषु मध्यमे ॥ २० ॥

ऐन्द्रादिषु चतुष्कस्थं गुळ(ड ?)मिक्षुरसं तथा ।
नालिकेरजलं शान्तिवारि कुम्भे तु विन्यसेत् ॥ २१ ॥

वाराहो नारसिंहश्च श्रीधरो हयशीर्षकः ।
गुळा(डा ?)दीनां क्रमादेतानधिदेवान् सभाजयेत् ॥ २२ ॥

चतुर्षु कोणकुम्भेषु मङ्गलाम्भः प्रपूरयेत् ।
तत्रैव वासुदेवाद्या मूर्तयस्तेषु देवताः ॥ २३ ॥

इन्द्राग्निमध्यभागेषु कुम्भसंघेषु च क्रमात् ।
हिमतोयं तिलाम्भश्च तण्डुलं तिलजं जलम् ॥ २४ ॥

वृष्टितोयं कुशाम्भश्च तुलस्यम्भः समुद्रजम् ।
क्रमशो विन्यसेन्मध्यकुम्भेषु द्विजसत्तम ॥ २५ ॥

केशवं माधवं चैव गोविन्दं विष्णुमेव च ।
मधुसूदनं वामनं च पद्मनाभमनन्तरम् ॥ २६ ॥

दामोदरमिमान् देवान् कुम्भेष्वष्टसु पूजयेत् ।
शेषान् सप्तदशा(शता?)न् षष्टिकुम्भानष्टाधिकान् द्विज ॥ २७ ॥

गालितैर्गन्धसंयुक्तैः शुद्धाम्भोभिः प्रपूरयेत् ।
ब्राह्मे मध्यस्थनवके श्रीवत्सं वनमालया(लिकाम्?) ॥ २८ ॥

शङ्खं चक्रं गदां पद्मं खड्गं शार्ङ्गं श्रियं तथा ।
द्रव्यैर्हेमादिभिः कृत्वा क्रमान्निक्षिप्य तेष्वपि ॥ २९ ॥

एतानेव यजेत्तेषु कुम्भेषु द्विजपुंगव ।
ऐन्द्रादिमध्यमान्तं तु कुम्भानामुद्धृतिर्भवेत् ॥ ३० ॥

---

25-(a) K. My. पु° for वृ°

27-(c) ABM सप्तदशशतान् for सप्तदशा(शता ?)न् षष्टि

-(d) ABM °कम् for °कान्

सहस्रकलशस्नाने देशिको वृणुयाद्बहून् ।
चतुरो द्विगुणान् वापि ऋत्विजो द्विगुणाँस्तथा ॥ ३१ ॥

पुण्याहवाचनं पूर्वं कृत्वान्वगधिदेवताः ।
इष्ट्वा पञ्चोपनिषदैः सहस्रं सर्पिषाहुतीः ॥ ३२ ॥

मूलमन्त्रेण शान्त्यर्थं समिदाद्यैर्हुने(?)त्ततः ।
पूर्वोक्तेन क्रमेणैव कलशानधिवास्य च ॥ ३३ ॥

धान्यपीठेषु संस्थाप्य कूर्चं निक्षिप्य तेष्वपि ।
अपिधाय च वासोभिर्वेष्टयित्वा समन्ततः ॥ ३४ ॥

वेदिकायां च देवेशमारोप्यार्घ्यादिभिस्ततः ।
मूर्तिपः कुम्भमुद्धृत्य गुरोर्दद्यात् करे गुरुः ॥ ३५ ॥

कुम्भस्थं कूर्चमादाय *नावाक्र* रयुगेन च (?) ।
स्नापयेद्देवदेवेशं पूर्वादिब्रह्मपश्चिमम् ॥ ३६ ॥

पाद्यं गायत्रिया विष्णोरर्घ्याम्भःस्नपनं विभोः ।
प्रतद्विष्णिवतिमन्त्रेण न ते विष्णोरि(इ?)ति प्रभुम् ॥ ३७ ॥

उपस्पर्शनपानीयैर्विष्णोः कर्मेतिमन्त्रतः ।
पञ्चगव्यैर्दधिक्राविण्ण(क्रेति?) संस्नायादभिषेचनम् ॥ ३८ ॥

पयोव्रतेन संस्नायात् क्षीरकुम्भाभिषेचनम् ।
मधुवातेति मधुना कषायजलसेचनम् ॥ ३९ ॥

ओषध्य इतिमन्त्रेण त्वं विष्णुरिति चोष्णकैः ।
फलाम्भःस्नपनं कुर्यात् फलिनीत्यनुवाकतः ॥ ४० ॥

मार्जनाम्भोऽभिषेकः स्याच्छं नो देवीरिति द्विज ।
अक्षताम्भोऽभिषेकः स्यात् सावित्र्या द्विजसत्तम ॥ ४१ ॥

त्रातारमिति साम्ना स्याद्रत्नकुम्भजलाप्लवः ।
लोहस्नानं प्रकुर्वीत महाव्याहृतिभिस्तथा ॥ ४२ ॥

---

36-(b) A मा° for ना° KM °ल for °र

गन्धवार्यभिषेकः स्याद्गन्धद्वारेतिमन्त्रतः ।
मन्त्रेण शतधारेण यववार्यभिषेचनम् ॥ ४३ ॥

घृतस्नानं विदध्याच्च घृतस्नातेति काश्यप ।
अष्टार्णविद्यया चापि द्वादशाक्षरविद्यया ॥ ४४ ॥

विष्णुगायत्रिया वापि स्नापयेत् कलशैर्हरिम् ।
उष्णाम्भसा क्षालयेच्च घृतस्नानादनन्तरम् ॥ ४५ ॥

द्रव्यकुम्भाप्लवविधेर्मध्ये मध्ये च देशिकः ।
अभिषिञ्चेच्छुद्धजलैः शुद्धकुम्भाम्भसापि च ॥ ४६ ॥

प्रतिद्रव्यमुपस्नानं प्रोक्तं वस्त्रोत्तरीयके ।
दत्वार्घ्यादीनि दीपान्तान्(न्तं?) सभाज्यैवाभिषेचयेत् ॥ ४७ ॥

हरिद्राचूर्णकुम्भं च धाम नीत्वा प्रदक्षिणम् ।
आनीय देवपुरतस्तण्डुलेषु निधाय च ॥ ४८ ॥

श्रियं देवीं समभ्यर्च्य श्रीसूक्तेनाभिषेचयेत् ।
यथा पूर्णाहुतिर्होमे तथा स्नपनकर्मणि ॥ ४९ ॥

चूर्णाभिषेको विहितो देवदेवस्य शार्ङ्गिणः ।
महापातकयुक्तोऽपि न्यस्तचूर्णं स(तु?)धारयेत् ॥ ५० ॥

पूतात्मा यतिमुख्यैस्तु समानो भवति द्विजः ।
प्रदक्षिणं विधायाथ प्रणम्य च पुनः पुनः ॥ ५१ ॥

सहस्रधारापाथोभिरभिषिच्य जगद्गुरुम् ।
अलंकारासनं नीत्वा देवदेवेश्वरं हरिम् ॥ ५२ ॥

---

46–(a) BKM घृत for द्रव्य
My. °भं पूर्व for °भाप्लव
47–(a) A °मपि for °मुप
52–(b) My त्पतिम् for °द्गुरुम्

अलंकृत्य च वासोभिर्विविधैर्भूषणैरपि ।
सुमनोमालिकाभिश्च विचित्राभिर्विभूष्य च ॥ ५३ ॥

इष्ट्वा च मात्रादानान्तं भोजनासनगे हरौ ।
चतुर्विधं च नैवेद्यं निवेद्य च महाहविः ॥ ५४ ॥

हुत्वा पूर्णां विधायाथ यजमानस्य कामितम् ।
*देवे*(?)च दापयित्वा च प्रदक्षिणनमस्कृती ॥ ५५ ॥

*पूर्वदिक्ष्व*(?)पि कुर्वीत देवं विज्ञाप्य पादुके ।
प्रदाय यानमारोप्य धाम्नोऽन्तः संप्रवेशयेत् ॥ ५६ ॥

यजमानश्च गुरवे दक्षिणां शतनिष्ककाम् ।
अन्येभ्योऽपि तदर्धार्धसंमितां संप्रदाय च ॥ ५७ ॥

पूजयित्वा सदस्यांश्च वित्तश्रद्धानुरूपतः ।
इह भुक्त्वाखिलान् भोगानन्ते च परमं पदम् ॥ ५८ ॥

सपुत्रदारस्वजनः प्राप्नुयाद् द्विजपुंगव ।
एवमाराधनविधिं यः कुर्याद् द्विजसत्तम ॥ ५९ ॥

उत्तारयेच्चापि पितॄन् दश पूर्वान् दशावरान् ॥

**इति पञ्चरात्रे महोपनिषदि विश्वामित्रसंहितायां**
**सहस्रकलशस्नपनविधिर्नाम विंशोऽध्यायः ॥**

# एकविंशोऽध्यायः

**काश्यपः—**

देवालयस्य निर्माणं देवस्य च विनिर्मित(ति ?)म् ।
श्रोतुमिच्छामि भगवन् किंचित् संक्षिप्य *वक्ष्य*(चोच्य ?)ताम् ॥ १ ॥

**विश्वामित्रः—**

देवधाम्नो विनिर्माणप्रकारं शृणु काश्यप ।
यस्य श्रवणमात्रेण निर्माणफलमश्नुते ॥ २ ॥

अश्वमेधादिभिर्यज्ञैरिष्ट्वा यत्फलमाप्नुयात् ।
देवधामविनिर्माणसंकल्पेन लभेत तत् ॥ ३ ॥

शिलेष्टकाकाष्ठकृतमुत्तमाधममध्यमम् ।
शिला वै चोत्तमं मध्यमिष्टकारचितं द्विज ॥ ४ ॥

अधमं काष्ठरचितं क्षुद्रं मृण्मयमुच्यते ।
यजमानानुकूलर्क्षे शुभे चैवोत्तरायणे ॥ ५ ॥

शुभे योगे शुभे लग्ने भूमिभागस्य संग्रहम् ।
विधाय तत्र देवेशं वराहतनुमच्युतम् ॥ ६ ॥

प्रणम्य खातयेद्यावज्जलस्योद्गमनं भवेत् ।
शल्यादीनपि चोद्धृत्य बहिः प्रक्षेपयेद् द्विज ॥ ७ ॥

शुभसंदर्शने सिद्धिरशुभे शान्तिमाचरेत् ।
सौदर्शनेन मन्त्रेण हुने(?)दष्टसहस्रकम् ॥ ८ ॥

वास्तुदेशस्थितान् देवान् पूजयेदवटे ततः ।
पाषाणवालुकाद्यैस्तं पूरयेदवटं ततः ॥ ९ ॥

दक्षिणेनोन्नतं कृत्वा निम्नमुत्तरतोऽपि च ।
तं देशं गोमयाम्भोभिः समीकृत्य विशोध्य च ॥ १० ॥

---

2-(bcd) My. Om.
3-(ab:) My. Om.

जुहुयान्मूलमन्त्रेण समिदाज्यचरून् पृथक् ।
अष्टोत्तरशतं मन्त्री पुण्डरीकाक्षमन्त्रकम् ॥ ११ ॥

जपित्वा वाचयेत्पश्चात् पुण्याहं ब्राह्मणोत्तमैः ।
स्थपतिस्थापकयुतो मतिमान् गणकैः सह ॥ १२ ॥

तन्मध्ये स्थापयेच्छङ्कुमृजुं ग्रन्थिविवर्जितम् ।
शङ्कुद्विगुणविस्तारं तद्बहिर्मण्डलं लिखेत् ॥ १३ ॥

प्रातः सायं च यच्छाया मण्डलान्ते द्विजोत्तम ।
तत्र बिन्दुद्वयं कृत्वा प्राक्प्रत्यक् सूत्रयुग्मकम् ॥ १४ ॥

क्षिप्त्वा बिन्द्वन्तरे भ्राम्येत् कच्छपाननपुच्छवत् ।
प्रागुदग्दिग्द्वयं ज्ञात्वा समीकृत्य च तत्पुनः ॥ १५ ॥

उत्तरार्धपरं सूत्रं द्विहस्तं भ्रामयेत्ततः ।
त्रिहस्तं पञ्चहस्तं वा सप्तहस्तमथापि वा ॥ १६ ॥

अधिकं वा यथेष्टं तत्सूत्राणि स्फालयेत् पृथक् ।
दिक्सूत्रं भ्रामयित्वा च लाञ्छयेत् कोणसूत्रकम् ॥ १७ ॥

कोणदिक्संप्रसिद्ध्यर्थं कोणसूत्रं क्षिपेत्ततः ।
सूत्रस्य वृत्तभ्रमणात् समतां परिकल्प्य च ॥ १८ ॥

सूत्रद्वयं समालम्ब्य कोटिं निर्णीय च द्विज ।
क्रमेणैव दिशश्चाष्टौ निर्णयेच्च पृथक् पृथक् ॥ १९ ॥

तक्षव(वा ?)स्तुविधिज्ञेन चतुरश्रं विधाय च ।
निनादयेदष्टशङ्कून् निमित्तानि च लक्षयेत् ॥ २० ॥

---

14–(c) AKM My. बीज for बिन्दु
15–(a) ABKM बीजा° for बिन्द्व°
16–(b) My. स्वहस्तात् for द्विहस्तम्
18–(c) B सूत्रस्य/जलस्य for सूत्रस्य
20–(a) My. कक्षायां तु for तक्षव(वा ?)स्तु
(c) My. °धान° for °नाद°

निमित्ते तु शुभे कार्यमशुभे शान्तिमाचरेत् ।
सौदर्शनेन जुहुयान्मन्त्रेणाष्टसहस्रकम् ॥ २१ ॥

वह्न्यादियाम्यकोणान्तमष्टौ देवाः स्थिताः पदे ।
मारुतादीशपर्यन्तं तथैवाष्टौ पदे स्थिताः ॥ २२ ॥

अबाद्याः पृथ्विपर्यन्ताः स्थिताः शिष्टाः पदेष्वपि ।
उक्तैः संख्यैः (?) समाराध्य यथान्यायं गुरुर्द्विज ॥ २३ ॥

पूरयेच्चैव तं देशं वालुकाभिर्यथा समम् ।
आरभेत ततः प्राज्ञ अधमं *दारुणा च यम्* ॥ २४ ॥

गृहीतस्थानकं प्राच्यां दक्षिणे चोत्तरेऽपि वा ।
यथैवाभिमतस्थानं कुर्यात् कृत्रिममालयम् ॥ २५ ॥

प्राकारं परितः कृत्वा कुर्यादग्रे च मण्डपम् ।
हैमं वा रूप्यमथवा तथौदुम्बरमेव वा ॥ २६ ॥

ह्रस्वकायधरं देवं चतुर्बाहुधरं हरिम् ।
विधाय जलवासादि क्रमात् कृत्वाथ मण्डपम् ॥ २७ ॥

अधिवास्य तथा कृत्वा मूर्तिहोमं च शान्तिकम् ।
सुप्रभाते सुलग्ने च विमले च तथाम्बरे ॥ २८ ॥

प्रदक्षिणं धाम नीत्वा गर्भगेहं प्रवेशयेत् ।
एकहस्तसमायामविस्तारे तत्समोच्छ्रयम्(ये ?) ॥ २९ ॥

वेदिमध्ये च संस्थाप्य मूलमन्त्रेण देशिकः ।
निश्चलं स्थापयित्वा च तत्र देवं सनातनम् ॥ ३० ॥

आदित्यमण्डलान्तःस्थं नारायणमनन्यधीः ।
आवाह्य च जितं तेन बिम्बमध्ये निवेशयेत् ॥ ३१ ॥

---

23-(d) My ख्यम् ? for °ख्यैः

24-(d) My. द्रु° for च

25-(d) My कर्तव्य° for कृत्रिम°

संपूज्य च यथाशास्त्रं ततो विज्ञापयेदिदम् ।
यावद्धामसमाप्तिः स्यात् तावत्कालं सुरोत्तम ॥ ३२ ॥

अल्पगेहेऽत्र वस्तव्यमस्मत्प्रीत्या जनार्दन ।
इति विज्ञाप्य देवेशं दण्डवत् प्रणिपत्य च ॥ ३३ ॥

प्राप्ते चतुर्थदिवसे स्नापयित्वोत्तमेन तु ।
उत्सवं कारयित्वाथ तीर्थयात्रां च कारयेत् ॥ ३४ ॥

यजमानानुकूले तु शुभेऽहनि समाहितः ।
इष्टका द्वादशाष्टौ वा चतस्रो वा शिवाः शिलाः ॥ ३५ ॥

गृहीत्वा शिक्ष(तक्ष ?)यित्वा च तक्षकैः शि(त ?)क्षित(ता ?)स्ततः ।
पञ्चगव्यैः क्षालयित्वा मण्डपे चाधिवासयेत् ॥ ३६ ॥

इष्टकानां दक्षिणतः कलशान् धान्यराशिषु ।
स्थापयित्वा विधानेन दिगीशान् पूजयेदथ ॥ ३७ ॥

कुम्भं मध्ये च संस्थाप्य प्रागुक्तविधिना द्विज ।
तन्मध्ये पूजयित्वाथ ब्रह्माणं कमलासनम् ॥ ३८ ॥

क्षौमैः शुद्धैर्नवैः कुम्भैः(म्भं ?) कलशानिष्टका अपि ।
संवेष्ट्योत्तरतो वह्निमाधाय विधिना द्विज ॥ ३९ ॥

समीकृत्य चरून् हुत्वा पृथगष्टोत्तरं शतम् ।
देशिको मूलमन्त्रेण जागरेण नयेन्निशाम् ॥ ४० ॥

उदिते विमले सूर्ये सुमुहूर्ते समागते ।
द्वारदेशं तु संकल्प्य दक्षिणेन समाहितः ॥ ४१ ॥

कुम्भोदकेनाभिषिच्य ब्राह्मणानुमतेष्टकाः ।
मनुना लोकपालानां कलशैरष्टभिः क्रमात् ॥ ४२ ॥

---

39–(c) My. °ष्ट्यान्त° for °ष्ट्योत्त°

प्रासादमध्यगो भूत्वा जपेदष्टाक्षरं मनुम् ।
नरनारायणं देवं श्रिया सार्धं जगद्गुरुम् ॥ ४३ ॥

प्रणामं दण्डवत्कृत्वा प्रणवं मनुमुच्चरन् ।
द्वारदक्षिणभागे तु स्थापयेत् प्रथमेष्टकाम् ॥ ४४ ॥

वह्निकोणं समारभ्य प्रादक्षिण्येन विन्यसेत् ।
ऐन्द्राग्नि(न्त ?)मिष्टकाश्चाष्टौ रक्षार्थं मन्दिरस्य च ॥ ४५ ॥

जपेत्सौदर्शनं मन्त्रमष्टोत्तरशतं सुधीः ।
अष्टाक्षरं च मन्त्रेशं वाराहं नारसिंहकम् ॥ ४६ ॥

जपेदष्टोत्तरशतं पृथक् पृथगुदारधीः ।
प्रीणयित्वा च विप्रग्र्यान् शिल्पिसंघं च तोषयेत् ॥ ४७ ॥

वासोभिर्भूषणैश्चैव साधनैर्धान्यराशिभिः ।
आचार्याय च ऋत्विग्भ्यः क्रमाद्दत्वा च दक्षिणाम् ॥ ४८ ॥

भेरीकाहलशङ्खादिवादकानपि तोषयेत् ।
श्वभ्रमद्भिश्च संपूर्य रत्नैर्धान्यैश्च देशिकः ॥ ४९ ॥

गन्धाक्षतं च निक्षिप्य प्रणवं मन्त्रमुच्चरन् ।
परीक्षेत जलावर्तं शुभं चेज्जायते शुभम् ॥ ५० ॥

अशुभे जुहुयादग्नौ मनुनाष्टाक्षरेण तु ।
पूरयित्वावटं तच्च वालुकाभिः समन्ततः ॥ ५१ ॥

ततः प्रभृति तं देशं रक्षेच्चैकाग्रमानसः ।
हस्तत्रयं समारभ्य नवहस्तावधि द्विज ॥ ५२ ॥

हस्तैरयुग्मैः कुर्वीत क्रमादेकतलं द्विज ।
कुर्यात्ततश्च द्वितलं यत् त्रयोदशहस्तकम् ॥ ५३ ॥

---

44–(a) My. प्रणम्य दण्डवद् भूमौ
48′ My. Om.
49–(ab) My. Om.

हस्तैर्दशाधिकैर्वापि पञ्चोर्ध्वैर्वास्तुभूमिकाम् ।
प्रासादस्याधिकं कुर्यात् षड्ढस्तं तु विशेषतः ॥ ५४ ॥

एवमा द्वादशतलाद् विस्तारं विदधीत च ।
उत्तमं द्विगुणोच्छ्रायं विस्तारादुच्यते द्विज ॥ ५५ ॥

सप्तधा विहिते चैव विस्ताराद् द्वादशाङ्गुलम् ।
मध्यमं प्राहुरधममेकादशभिरंशकैः ॥ ५६ ॥

एवमा द्वादशतलादुत्सेधे विहिते सति ।
पदा च (नि?) सूत्रपातेन विदधीत च षोडश ॥ ५७ ॥

चतुष्पदं गर्भगेहं मध्यं स्याद्बाह्यतस्ततः ।
भित्त्यर्थं द्वादशपदान्यन्यानि परिकल्पयेत् ॥ ५८ ॥

प्राच्योदीच्यैश्च षट्सूत्रैः पञ्चविंशतिसंख्यया ।
पदानि स्युर्नवपदं गर्भगेहान्तरं भवेत् ॥ ५९ ॥

पदैः षोडशभिः कुर्याद्भित्तीः सर्वाः समन्ततः ।
प्रासादस्त्रिविधः प्रोक्तस्त्वाकृतीनां विभेदतः ॥ ६० ॥

नागरं चतुरश्रं स्यादास्थूप्यन्तं द्विजोत्तम ।
प्रासादं कण्ठदेशान्तमष्टाश्रं द्राविळं(डं?) भवेत् ॥ ६१ ॥

वृत्तमाकण्ठदेशान्तं तद्वेसरसुदाहृतम् ।
आयामे चतुरश्रं च व्यायामे वर्तुलं तथा ॥ ६२ ॥

चतुरश्रं तु वृत्तं वा चतुर्धा स्यात् पुनर्द्विज ।
कृत्वा तु धाम्नो विष्कम्भं पञ्चभागविभाजितम् ॥ ६३ ॥

---

56–(a) ABKM °यो for °धा
–(b) A °शांशकः for °शाङ्गुलम्
BKM विस्तारो द्वादशांशकः ।
61–(d) ABM तु विळम्बयेत् for द्राविळं(डं ?) भवेत्
62–(a) ABM °द्यत् for °न्तम्
–(b) ABM °द्वै° for °द्वे°

तेषु त्रिषु विभागेषु सप्तधा त्रिभिरेव वा ।
अथवा नवभागेषु चतुर्भिर्वा प्रकल्पयेत् ॥ ६४ ॥

विस्तारं द्वारदेशस्य यद्वा गर्भगृहं द्विज ।
कृत्वा त्रिधैकभागेन तदर्धैकेन वा पुनः ॥ ६५ ॥

पञ्चस्वेकेन वा कुर्याद् द्वारदेशस्य विस्तृतिः(तिम्?) ।
विस्ताराद् द्विगुणं कुर्यादुत्सेधं भूसुरोत्तम ॥ ६६ ॥

प्रासादेष्वेवमेवाथ विहितं स्याद् द्विजोत्तम ।
मूर्तीनां स्थापनं वक्ष्ये समाहितमनाः शृणु ॥ ६७ ॥

आद्ये तले तूपरिष्टात् स्थापयेच्च चतुर्दिशम् ।
वाराहं नारसिंहं च श्रीधरं हयवक्त्रकम् ॥ ६८ ॥

चतुर्षु कोणदेशेषु गरुडं तन्निभाननम् ।
आसीनं वा स्थितं वापि कुर्यात्तद्दिगाननम् ॥ ६९ ॥

अथवा कोणदेशेषु कल्पयेत् सिंहमेव वा ।
कर्णकूटेषु शालासु तथा द्वारान्तरेष्वपि ॥ ७० ॥

कुमुदादीनुपेन्द्रादीन् सगणान् परिकल्पयेत् ।
सिद्धविद्याधरादींश्च नृत्यतो गायतोऽपि वा ॥ ७१ ॥

वाद्यवादनकारांश्च पश्यतोऽन्योन्यमेव तान् ।
कल्पयेद्भित्तिभागेषु शिल्पिशास्त्रविशारदः ॥ ७२ ॥

द्वितीये तु तले ब्रह्मन् शृणु देवान् पृथक् पृथक् ।
नरं नारायणं चैव हरिं कृष्णं यथाक्रमम् ॥ ७३ ॥

कल्पयेत्तच्चतुर्दिक्षु पूर्वाद्युत्तरपश्चिमम् ।
अन्येषु चावकाशेषु केशवादीन् सशक्तिकान् ॥ ७४ ॥

---

69-(b) KMy. °द्दिगा° for °न्निभा°
70-(d) A भारा° My. °गारा° for द्वारा°

कल्पयेद् द्विजशार्दूल भित्तिभागेषु पूर्ववत् ।
तले तृतीये कुर्वीत चतुर्दिक्षु यथाक्रमम् ॥ ७५ ॥

पुरुषं सत्यमनु च तथाच्युतमनन्तरम् ।
अनन्तमपि कुर्वीत शेषेषु च यथापुरम् ॥ ७६ ॥

इन्द्रादींश्चैव लोकेशानादित्यान् द्वादशापि च ।
गन्धर्वाप्सरसंघं च सकिंनरमहोरगम् ॥ ७७ ॥

नर्तनादिकृतः कुर्यात् सर्वानपि समन्ततः ।
चतुर्थेऽपि तले विप्र स्थितं देवगणं शृणु ॥ ७८ ॥

पूर्वे वा वामनं कुर्याद्दक्षिणस्यां त्रिविक्रमम् ।
पश्चिमायां जामदग्नि(ग्न्य ?)मुत्तरस्यामपि द्विज ॥ ७९ ॥

बलदेवं विदध्याच्च शेषेष्वपि समन्ततः ।
वैभवं देवसंघातं पद्मनाभादिकं द्विज ॥ ८० ॥

पञ्चमेऽपि तले कुर्याच्चतुर्दिक्ष्वपि काश्यप ।
सुदर्शनं पाञ्चजन्यं गदां पद्मं तथैव च ॥ ८१ ॥

मूर्धभिः स्वायुधधरान् कृताञ्जलिपुटान् क्रमात् ।
अवशिष्टेषु देशेषु कृष्णस्यापि विचेष्टितम् ॥ ८२ ॥

सप्तमेऽपि तले कुर्याच्चतुर्दिक्षु यथाक्रमम् ।
वासुदेवादिकान् देवाँश्चतुरोऽपि महामुने ॥ ८३ ॥

कर्णकूटेषु धर्मादीन् पञ्जरेषु यथाक्रमम् ।
*महाँश्च*(?) चतुरो वेदान् कृतत्रेतादिकानपि ॥ ८४ ॥

दिव्यायुधानि कुर्वीत *हाराणा(?)*मन्तरेषु च ।
कोणेषु गरुडं कुर्यान्मुने सप्ततलेष्वपि ॥ ८५ ॥

सिंहानेव तथा कुर्याद्वीरसेनं सुषेणकम् ।
वीरनाथं सुभद्रं च भुजैः प्रासादधारिणौ ॥ ८६ ॥

कुर्याच्चतुर्दिशं विप्र चण्डादीन् द्वारपार्श्वतः ।
शङ्खपद्मनिधीन्(धी ?) कुर्यादेवं प्रासाददेवताः ॥ ८७ ॥

कारयेद् द्विजवर्यास्य प्रासादस्य चतुर्दिशम् ।
संभवेयुर्यदि पुरा प्रथमादितलेष्वपि ॥ ८८ ॥

तृतीयादितलेषूक्तदेवता एव कल्पयेत् ।
गोपुरेषु कृतेष्वेवं देवतान्यासमाचरेत् ॥ ८९ ॥

*प्रते*(?)रूर्ध्वप्रदेशे तु भूतमालां विधापयेत् ।
हंसमालां च विप्राग्र्य यथेष्टं विदधीत च ॥ ९० ॥

अधिष्ठानेऽपि चाधस्ताल्लोहिताक्षादि चाष्टकम् ।
चक्रादि चाष्टकं चैव कल्पयित्वा तदन्तरे ॥ ९१ ॥

आरभे(लिखेत् ?)द्भित्तिभागेऽपि प्रादुर्भावगणानपि ।
धाम्नः समन्तात्कुर्वीत मालिकाविस्तृतिं द्विज ॥ ९२ ॥

कारयेत् स्नपनार्थं च तद्बहिर्मण्टपं द्विज ।
पानीयशालां कुर्वीत विशालां शीतकारिणीम् ॥ ९३ ॥

वारुणे वाहनस्थानं मारुते वासुमन्दिरम् ।
शयनस्योत्तरे स्थानमीशे कुसुममण्डपम् ॥ ९४ ॥

तृतीयावरणे कुर्यादाग्नेये नृत्तमण्डपम् ।
याम्ये गानालयं कुर्यात् सभां निर्ऋतिकोणके ॥ ९५ ॥

वारुणे पुस्तकस्थानं वायौ धान्यालयं(यो ?)भवेत् ।
उत्तरस्यां दिशि भवेदधिकं(को ?) वैष्णवालयम् (यः ?) ॥ ९६ ॥

गोशालां मध्यतः कुर्यात् सोमेशानदिशि द्विज ।
मातॄणामालयं कुर्यात् प्रासादस्य च दक्षिणे ॥ ९७ ॥

---

91–(c) ABM गत्यष्टकं च for चाष्टकं चैव

93–(d) ABM °रिणा for °रिणीम्

महानसस्य च पुरः कूपः कार्यो विजानता ।
एवं विदध्यात्प्रासादं गर्भन्यासमथो शृणु ॥ ९८ ॥

हैमं रौप्यं तथा ताम्रपात्रमायसमेव वा ।
षोडशाङ्गुलविस्तारमथवा द्वादशाङ्गुलम् ॥ ९९ ॥

अष्टाङ्गुलं वा कुर्वीत यथेष्टं द्विजपुंगव ।
विस्तारस्यो(मु?)च्छ्रयं कुर्यात् तदर्धेन द्विजोत्तम ॥ १०० ॥

वृत्तं वा चतुरश्रं वा चतुष्पादं द्विजाथवा ।
त्रिपादमथवा कुर्याद्यथेष्टं द्विजसत्तम ॥ १०१ ॥

अथवा गर्तनवकं विदधीत विचक्षणः ।
वेदिकां तत्पुरः कुर्यात् तामालिप्य च गोमयैः ॥ १०२ ॥

शालिभिर्मण्डलं कुर्यादष्टभारप्रमाणकैः ।
तदर्धतण्डुलयुतं वस्त्रैराच्छाद्य चापि तत् ॥ १०३ ॥

कुम्भं चोपरि विन्यस्येदम्भःपूर्णं सरत्नकम् ।
पञ्चायुधं स्वर्णमयं कुम्भमध्ये च विन्यसेत् ॥ १०४ ॥

अर्चयेद्गन्धपुष्पाद्यैर्ब्रह्मबीजेन देशिकः ।
परितस्तस्य कलशान् निधायाष्टौ सभाजयेत् ॥ १०५ ॥

इन्द्रादीशानपर्यन्तं कलशेष्वष्टकेषु च ।
क्षालयित्वा पञ्चगव्यैः पात्रं पूर्वं प्रकल्पितम् ॥ १०६ ॥

कलशैः कुम्भसहितैः प्रणवेनाभिषेचयेत् ।
स्थण्डिलं पूर्ववत्कृत्वा वस्त्रैराच्छाद्य दर्भकैः ॥ १०७ ॥

तन्मध्ये वेष्टयेत्पात्रं(?) वेष्टयित्वाम्बरैरपि ।
अद्रेर्मृदादि स्वर्णं च न्यसेत्पात्रावटेष्वथ ॥ १०८ ॥

---

99–(cd) & 100 KMy. Om.

108–(a) My. °त्सू° for °त्पा°

–(c) AB अस्थे° KM अस्त्रै° for अद्रे°

–(d) ABM पात्रं घटे° for पात्रावटे°

सर्वेषु च सुवर्णादीन् ध्यात्वा ब्रह्माणमत्र च ।
अष्टाक्षरं जपन् मन्त्रं प्रसृतेन स्पृशेच्च तत् ॥ १०९ ॥

देशिकः शीलसहितो जनान् सर्वान् विलम्ब्य च ।
गर्भगेहं प्रविश्याथ प्राङ्मुखो वाप्युदङ्मुखः ॥ ११० ॥

दक्षिणे द्वारपार्श्वे तु भागौ द्वौ परिशिष्य च ।
तृतीयभागे विन्यस्य विशेषेणोरुमूलके ॥ १११ ॥

पट्टिकायां तु देवानां गर्भन्यासः प्रशस्यते ।
द्विजानां पट्टिकाधस्तान्नृपाणां कुमुदोपरि ॥ ११२ ॥

वैश्यानां कुमुदाधस्तात्तुर्याणां *जगतोपरि* (?) ।
गायत्र्या प्रोक्षणं कृत्वा वारुणे होममाचरेत् ॥ ११३ ॥

स्वनाम्ना केशवादींश्च घृतेन जुहुयात्ततः ।
इन्द्रादीन् ब्रह्मपर्यन्तान् पृथगष्टाहुतीर्हुनेत् (?) ॥ ११४ ॥

हुत्वा व्याहृतिभिश्चान्ते शास्त्रचोदितवर्त्मना ।
वैष्णवं शिल्पशास्त्रज्ञं क्रियासु कुशलं गुरुः ॥ ११५ ॥

एवंगुणसमायुक्तं *शृणुयाद्*द्विजपुंगव (?) ।
संपाताज्येन सिक्त्वाथ मूलविद्यां जपन् सुधीः ॥ ११६ ॥

अपिधाय च तत्पात्रं प्रणवेन समाहितः ।
दक्षिणाङ्गुष्ठशिरसा स्पृशन्नष्टाक्षरं जपेत् ॥ ११७ ॥

प्राङ्मुखः सेचने तत्र स्मरन् भूमिं कृताञ्जलिः ।
इमां गाथां जपेन्मन्त्ररूपिणीं देशिकोत्तमः ॥ ११८ ॥

---

110–(c) ABM Om.
112–(ab) ABM Om.
–(c) ABM कोर्ध्वे स्यात् for °काधस्तात्
–(d) ABM राज्ञां च for नृपाणाम्
113–(a) ABM च जगत्यूर्ध्वे for कुमुदाधस्तात्
–(b) ABM जननोर्ध्वतः for *जगतोपरि*
118–(a) My. सजनः for सेचने

सर्वभूतधरे कान्ते पर्वतस्तनमण्डिते ।
समुद्रपरिधानीये देवि गर्भं समाश्रय ॥ ११९ ॥

अनेन विधिना रात्रौ गर्भन्यासं समाचरेत् ।
मूर्धेष्टकां विधायाथ शिल्पशास्त्रोक्तवर्त्मना ॥ १२० ॥

स्थूपिकां संनिवेश्याथ स्थापयित्वा शिखाघटम् ।
वर्णकैर्लेपयित्वा च प्रासादं चापि सर्वतः ॥ १२१ ॥

पूजयित्वा गुरुं पूर्वं पूजयेच्छिल्पिनं बुधः ।
प्रासादं यो विधानेन वासुदेवस्य कारयेत् ॥ १२२ ॥

सर्वं कुलं समुद्धृत्य विष्णुलोके सुपूज्यते ॥

**इति पञ्चरात्रे महोपनिषदि विश्वामित्रसंहितायां प्रासादनिर्माणं(णविधिः?)नाम एकविंशोऽध्यायः ॥**

---

## द्वाविंशोऽध्यायः

विश्वामित्रः—

बिम्बस्य लक्षणं वक्ष्ये द्रव्यसंग्रहसंयुतम् ।
मणिजं लोहजं शैलं त्रिविधं बिम्बमुत्तमम् ॥ १ ॥

वज्रं च पद्मरागं च *वालवायो*(?)द्भवं तथा ।
ताम्रजं पैत्तलं चैव लोहान्येतानि सुव्रत ॥ २ ॥

शिला चतुर्विधा ज्ञेया वर्णयोगान्महामते ।
वारुणी च तथाग्नेयी माहेन्द्री वायवीति च ॥ ३ ॥

तासु वै द्विविधा ग्राह्या माहेन्द्री वारुणी तथा ।
आग्नेय्याख्या शिला चैव वायव्या[व्य]शिला तथा ॥ ४ ॥

---

123-(b) ABKMy. स for सु
2-(b) K My. पालवायेद्भवाः for *वालवायो*द्भवम् (?)
4 ABM. om.

वर्ज्या स्याद् द्विविधा ब्रह्मन् गर्भादीनपि वर्जयेत् ।
दृष्ट्वाथ शैलं विधिवदधिवासनमाचरेत् ॥ ५ ॥

शैलस्य पश्चिमे भागे गोमयेन विलेपयेत् ।
पुरतस्तस्य शैलस्य षड्भारैः स्थण्डिलं द्विज ॥ ६ ॥

कारयित्वा च तन्मध्ये न्यस्य कुम्भं सलक्षणम् ।
कलशानष्ट परितो दिक्ष्वष्टासु प्रकल्प्य च ॥ ७ ॥

यथापुरं कुम्भमध्ये हेमरत्नादिकं न्यसेत् ।
क्षौमाभ्यां वेष्टयित्वा च तत्र ब्रह्माणमर्चयेत् ॥ ८ ॥

कलशेषु तथेन्द्रादीनर्चयित्वा विचक्षणः ।
क्रूरभूतप्रशान्त्यर्थं सर्वदिक्षु बलिं हरेत् ॥ ९ ॥

चतुर्दिशं विदध्याच्च होममष्टशताहुतीः ।
जुहुयान्मूलमन्त्रेण समिदाज्यचरूनपि ॥ १० ॥

कारयित्वा च पुण्याहवाचनं द्विजपुंगवैः ।
पश्चादवहितो भूत्वा मन्त्रमेतमुदीरयेत् ॥ ११ ॥

ओं नमः सर्वलोकाय विष्णवे प्रभविष्णवे ।
विश्वाय विश्वरूपाय स्वप्नाधिपतये नमः ॥ १२ ॥

उत्सार्य च जनान् सर्वान् मन्त्रं चोदीरयेदिमम् ।
यक्षरक्षःपिशाचाश्च येऽत्र तिष्ठन्ति नित्यशः ॥ १३ ॥

ते सर्वेऽप्यपगच्छन्तु संनिधत्तां सदा हरिः ।
अभिधायोत्तमाकारं स्वप्नं पश्येत्तथा निशि ॥ १४ ॥

यजमानेन सहितो देशिको मुनिपुंगव ।
यदि पश्येच्छुभं स्वप्नं शिलां गृह्णीत सुस्वराम् ॥ १५ ॥

वर्जयेदशुभे दृष्टे प्रभाते चोत्थितो द्विज ।
अदृष्टेऽपि च गृह्णीयादिति शास्त्रस्य निश्चयः ॥ १६ ॥

आचार्यः शिल्पिभिः सार्धं गत्वा भूमिं विलोकयेत् ।
ऐन्द्राद्यग्रा शिला ग्राह्या तथोर्ध्वाग्रापि चोत्तमा ॥ १७ ॥

कोणदिक्छिरसो वर्ज्या ग्राह्या लक्षणसंयुताः ।
उत्पाट्य शैलं मतिमान् कुम्भैः समभिषिच्य च ॥ १८ ॥

कलशैश्च ततः स्नाप्य वस्त्रैरावेष्ट्य तत्र च ।
अभ्यर्च्य मूलमन्त्रेण गन्धपुष्पादिभिः क्रमात् ॥ १९ ॥

गृहीत्वा लक्षणोपेतां शिलां होमं प्रकल्पयेत् ।
पुंस्त्रीनपुंसकाख्या च शिला च त्रिविधा मता ॥ २० ॥

पुंलिङ्गेन तथा बेरं स्त्रिया वै पीठिका भवेत् ।
इत्येवं बिम्बक्लृप्तिः स्याद्यत्नैरपि च कारयेत् ॥ २१ ॥

प्रतिमायाः प्रवक्ष्यामि प्रमाणं सविशेषतः ।
गेहं च बिम्बानुगुणं विदध्यान्मन्त्रवित्तमः ॥ २२ ॥

यजमानानुरूपं स्यात् प्रमाणं तस्य काश्यप ।
चतुरङ्गुलमारभ्य चतुरङ्गुलवृद्धितः ॥ २३ ॥

यावदष्टोत्तरशतमङ्गुलीनां भवेद् द्विज ।
बिम्बं सौवर्णकं कार्यमत ऊर्ध्वं न कारयेत् ॥ २४ ॥

रूप्यताम्रशिलाबिम्बं यत्तद्धामाश्रयं भवेत् (?) ।
गर्भगेहप्रमाणा या प्रतिमा सोत्तमा भवेत् ॥ २५ ॥

नवभागादेकहीना मध्यमा प्रतिमा द्विज ।
पञ्चभागादेकहीना अधमा विद्धि काश्यप ॥ २६ ॥

गर्भविस्तारमाने तु सर्वदा(सधा?) विजितेन्द्रियः ।
गृहीत्वा पञ्चभागे(गं?)तु पञ्चभागात् त्रिभागकम् ॥ २७ ॥

---

22-(d) ABM My. °त्त° for °न्म°
26-(b) B अधमा विधि काश्यप ।
-(cd) B. om.

त्रिभागेभ्यो द्विभागं वा श्रेष्ठं मध्याधमं विदुः ।
द्वारप्रमाणमुदितं पादार्धाधिकमेव वा ॥ २८ ॥

उत्तमाधममध्यानां प्रमाणमिति कीर्तितम् ।
शुद्धद्वारसमानं वा पादाधिकमथापि वा ॥ २९ ॥

अध्यर्धद्वारदेशं स्यादुत्तमाधममध्यमम् ।
शुद्धद्वारप्रमाणे तु द्व्यष्टभागविभाजिते ॥ ३० ॥

उत्तमं त्वेकभागं स्याद् द्विभागं मध्यमं भवेत् ।
अथवा स्तम्भमानेन कौतुकं कारयेद् बुधः ॥ ३१ ॥

स्तम्भादध्यर्धमानं वा बिम्बं कुर्यान्महामते ।
स्थानकस्योच्छ्रयं विद्धि द्वारमासन(नस?)मानकम् ॥ ३२ ॥

नवभागैकहीनं वा पञ्चभागैकहीनकम् ।
उत्तमाधममध्यं स्यात् स्थानकोच्छ्रायमित्यपि ॥ ३३ ॥

आसनस्य द्विजश्रेष्ठ विद्धि मानं महामते ।
द्वारार्धमधिकं पादादधिकं वा तथापि च ॥ ३४ ॥

निबोध शयनं विप्र द्वाराद् द्विगुणमेव च ।
अध्यर्धं वापि कुर्वीत न्यूनाधिक्यं न कारयेत् ॥ ३५ ॥

यथाकामं प्रकुर्वीत स्थानयानासनादिकम् ।
मूलबेरस्यानुगुणं कर्मार्चां विदधीत च ॥ ३६ ॥

द्वादशाङ्गुलमानं वा न्यूनं वा चतुरङ्गुलैः ।
कर्मबेरं विदध्याच्च बलिबेरं तथैव च ॥ ३७ ॥

तत्प्रमाणं विदध्याच्च यात्राया द्विजसत्तम ।
कृत्रिमाल्यबिम्बं स्यादष्टाङ्गुलमिति द्विज ॥ ३८ ॥

---

34–(c) BKM My. °थवा for °धिकम्

37–(d) ABM. विधि for बलि

यागबेरचतुर्भागं त्रिभागं वापि कारयेत् ।
कल्पयेत् स्नानबिम्बं च द्वितालोच्छ्रायसंयुतम् ॥ ३९ ॥

शङ्खचक्रगदापद्मचतुर्लक्षणलक्षितम् ।
यथालक्षणसंयुक्तं पीठिकोपरि विन्यसेत् ॥ ४० ॥

मूर्तीनामेव सर्वासां कर्मार्चा स्याच्चतुर्भुजा ।
बिम्बं सुशोभनं चैव प्रसन्नं पूज्यमेव च ॥ ४१ ॥

ध्रुवबेरसमुच्छ्रायं त्रिधा भक्त्वाथवा द्विज ।
चतुर्धा वा मुनिश्रेष्ठ तेष्वेकोच्छ्राय(यि?)का भवेत् ॥ ४२ ॥

कल्याणकौतुकस्यैवमुत्सवार्चाप्रमाणतः ।
तृतीयांशेन वा कुर्याच्चतुर्थांशेन वा पुनः ॥ ४३ ॥

कर्मार्चा बहुबेरस्य क्रमोऽयं परिकीर्तितः ।
एकबेरे तदर्धा तु तत्तुर्यांशाधिकापि वा ॥ ४४ ॥

उत्सवार्चा तृतीयांशा(श?)समुच्छ्राया त्रिधा भवेत् ।
शयनासनस्थानविधौ ध्रुवार्चा विहिता यथा ॥ ४५ ॥

तथाविधानि कार्याणि कर्मार्चाप्रभृतीन्यपि ।
शयाने ध्रुवबेरे तु स्थितं वासीनमेव वा ॥ ४६ ॥

कर्मादिकौतुकं कुर्यान्नित्यकल्याणकौतुकम् ।
सर्वत्रैव स्थितं कुर्यात् पीठक्लृप्तिं मुने शृणु ॥ ४७ ॥

बिम्बायामे त्रिधा क्लृप्ते कार्यमेकेन पीठकम् ।
उपानहादिभिर्युक्तं पञ्चांशैर्वर्तुलं शुभम् ॥ ४८ ॥

विस्तारतुलितायामं चतुरश्रं मनोहरम् ।
तृतीयांशे सुसंक्लृप्तप्रभाशङ्कुद्वयं द्विज ॥ ४९ ॥

---

39–(d) A °म्ि° for °यु°

44–(a) K बलि for बहु

पीठोच्छ्रायं त्रिधा कृत्वा कुर्यादेकेन पङ्कजम् ।
युक्तं दलैर्द्वादशभिरष्टाभिर्वा यथेच्छया(कम् ?) ॥ ५० ॥

तदुच्छ्रायदलं कुर्यान्मध्यमे शुभकर्णिकम् ।
उपच्छदयुतं चैव फुल्लपङ्कजसंनिभम् ॥ ५१ ॥

अङ्घ्रिमानं दलोपेतं केवलं वाथ पङ्कजम् ।
पीठं वा पद्ममथवा *सुषि*युक्तं(?) तु कारयेत् ॥ ५२ ॥

स्थितार्चापीठसंक्लृप्तिरुदितेयं द्विजोत्तम ।
चतुरश्रायतं वापि स्याद्वृत्तायमथापि वा ॥ ५३ ॥

प्रतिमांशोच्छ्र्यं वापि तत्तृतीयांशमेव वा ।
आसीनस्य भवेत्पद्मं दलैर्बहुभिरन्वितम् ॥ ५४ ॥

मनोज्ञया *तया*(?)युक्तं विपुलं वाथवा द्विज ।
प्रसव्याङ्घ्रिं तु संकुच्य लम्बयित्वेतरं पुनः ॥ ५५ ॥

यथोक्तमासनं देवं समध्यासितसुस्थितम् ।
आधारलम्बितस्याग्रे कल्पयेत् पङ्कजं द्विज ॥ ५६ ॥

देवस्य दक्षिणे पार्श्वे लक्ष्मीं वामे वसुन्धराम् ।
आसीने कल्पयेद्देव्यावासीनस्य द्विजोत्तम ॥ ५७ ॥

विम्बषट्कस्य कर्मादेः श्रीभूम्यौ पार्श्वगे सदा ।
एकासनस्थितस्याग्रे(?)देवेन पृथगेव वा ॥ ५८ ॥

लक्ष्मीं स्थितां वा संकल्प्य वामाङ्घ्रिं लम्बयेत वा ।
अथासीनां तथा पृथ्वीं स्थितस्योभे अभिस्थिते ॥ ५९ ॥

बिम्बानुसारतो वृत्ता प्रभां वृत्तायतां तु वा ।
मनोहरां विदध्याच्च तेजोराशिभिरन्विताम् ॥ ६० ॥

---

51–(a) ABKM ° त for °द°
56–(b) My. °सीत उच्छ्रितम् for °सितसुस्थितम्
–(c) My. रं लम्ब्रितः शाग्रे for °रलम्बितस्याग्रे
59–(ab) My. om.
–(c) My. श्रियम् for तथा

प्रतिमामानमधुना शृणु काश्यप सुव्रत ।
एकाङ्गुलं स्यादुष्णीषं केशान्तं स्यात् त्रियङ्गुलम् ॥ ६१ ॥

ततः प्रभृति षट्त्रिंशद्यवमानं भवेद् द्विज ।
दृक्सूत्रान्तं तु तद्वत्स्यान्नासापुटयुगान्तिमम् ॥ ६२ ॥

चुबुकान्तं च तद्वत् स्यात् केशान्तादि द्विजोत्तम ।
चुबुकान्तं वक्त्रमानमष्टोत्तरशतं यवम् ॥ ६३ ॥

आद्याङ्गुलं स्यात् त्रिस्थानमूरुमानं द्विजोत्तम ।
षड्विंशत्यङ्गुलोच्छ्रायस्तद्वज्जङ्घोच्छ्रयो भवेत् ॥ ६४ ॥

अवशिष्टांशमानं स्यात्तदुक्तमथ शृणु ।
दशतालेऽधमे वक्त्रे मतं शतयवं द्विज ॥ ६५ ॥

तद्वदेव भवेत् स्थानत्रयमूरू शतद्वयम् ।
यवानां कथितं जङ्घा तावदुच्छ्रायसंयुता ॥ ६६ ॥

गलं(लो ?) जानु च गुल्फं च प्रत्येकं चतुरङ्गुलम् ।
उच्छ्रायमानं बिम्बस्य कथितं द्विजपुंगव ॥ ६७ ॥

अनिर्वा(?)हत्वात् सूक्ष्मं ते मया चाभिहितं द्विज ॥

**इति पञ्चरात्रे महोपनिषदि विश्वामित्रसंहितायां**
**बिम्बमानं(नविधिः ?)नाम द्वाविंशोऽध्यायः ॥**



62–(b) My. °देव for °द्यव
63–(a) My. बिम्बे कान्तं वक्त्रमानम्
65–(a) A °ष्टं स° for °ष्टांश°
–(b) A °दुत्तमामथ च for °त्तदुक्तमथ
66–(b) A °ल° BM °न° for °रू°
67–(abc) ABM om.
68–(a) ABM °सुवा° for °निर्वा°
Colophon :—My. om. पञ्चरात्रे महोपनिषदि विश्वामित्रसंहितायाम्

# त्रयोविंशोऽध्यायः

**काश्यपः—**

प्रासादानां च बिम्बानां जीर्णानां गाधिनन्दन ।
उद्धारं भगवन् मह्यं वक्तुमर्हसि सांप्रतम् ॥ १ ॥

**विश्वामित्रः—**

*स्वायंभुवं च*(वीनां ?) दिव्यानामार्षीणां चैव काश्यप ।
मानुषीणां भगवतः प्रतिमानां द्विजोत्तम ॥ २ ॥

मणिजानां च बिम्बानां हानिरङ्गेषु चेद् द्विज ।
यद्यदङ्गं विहीनं स्यात्तद्धेम्ना च महामते ॥ ३ ॥

समाधातव्यमेव स्यान्न त्याज्यं द्विजपुंगव ।
शैलजानामपि तथा समाधानं विधीयते ॥ ४ ॥

समाधानेऽङ्गमात्रस्य सृष्टौ साकल्यतोऽपि वा ।
बिम्बमध्यस्थितां शक्तिं यथापूर्वं विधाय च ॥ ५ ॥

अधिवासादिकर्मादि प्रतिष्ठावत् समाचरेत् ।
बिम्बानि संस्थितान्येव शक्यन्ते यदि काश्यप ॥ ६ ॥

समाधानं ततः कुर्यान्न त्यजेत् सर्वथा द्विज ।
कौतुकं लोहजं जीर्णं द्रावयित्वा पुनः सृजेत् ॥ ७ ॥

पुनःसृष्टौ तु जातायां जीर्णवेषस्य काश्यप ।
प्राचीना यदि विद्यन्ते देव्यस्ताभिश्च तं प्रभुम् ॥ ८ ॥

*संयोजने*(येत् ?) पुनर्नान्या देव्यः कार्या द्विजोत्तम ।
अविच्छेदो यदि भवेत् तासां पूजनकर्मणि ॥ ९ ॥

---

4-(bcd) K. om.
5 & 6-(a) K. om.
7-(c) K. त्यक्तम् for जीर्णम्

उद्वाहं न पुनः कुर्यादिति शास्त्रविदां मतम् ।
वैकल्यं यदि संजातं प्रभापद्मासनादिषु ॥ १० ॥

*हेतु*(ति ?)ष्वपि न यष्टव्यमसमाधाय तत्पुनः ।
घटे वा मूलबेरे वा शक्तिं तद्बिम्बसंस्थिताम् ॥ ११ ॥

उद्वास्य कारयेत्तेषां समाधानं द्विजोत्तम ।
संप्रोक्ष्य च विधातव्यं पूजनं स्याद्यथापुरम् ॥ १२ ॥

शैलजं वस्तुजं बिम्बं जीर्णं यदि भवेन्मुने ।
बालालयं कल्पयित्वा शक्तिं विन्यस्य तत्र च ॥ १३ ॥

आराधयेच्च तत्त्यक्तं खनेद्भूमौ जलेऽथवा ।
निक्षिपेद् द्विजवर्याग्रे प्रासादे च विधिं शृणु ॥ १४ ॥

शैथिल्ये यदि(सति ?) संजाते प्रासादस्य महामते ।
बालालये स्थापयित्वा देवं सपरिवारकम् ॥ १५ ॥

तत्रैव पूजयेद्यावद्धामसंपादनं भवेत् ।
धाम्नि जीर्णे न जीर्णे च ध्रुवे तद्धामसंस्थितम् ॥ १६ ॥

नान्यत्रोद्वासयेज्जीर्णं समादध्यात् पुनर्द्विज ।
धामादेरङ्गहानौ च न जातायां न कल्पयेत् ॥ १७ ॥

अजीर्णे च पुनः स्थैर्यबुद्ध्या तत् कल्पयेद्यदि ।
यजमानस्य तस्याशु सान्वयस्य च नाशनम् ॥ १८ ॥

पुरा प्रमादादुच्छ्रायं प्रासादादि कृतं यदि(?) ।
पुनर्लक्षणसंयुक्तं कल्पयेद् द्विजपुंगव ॥ १९ ॥

पुनःप्रकल्पनविधौ बहुबेरैकबेरयोः ।
यथापुरं कल्पयेत व्यत्यासं नैव कल्पयेत् ॥ २० ॥

---

16–(d) KMy. °वम् for °वे
18–(b) My. स्थैर्यं विध्युक्तं कारयेद्यदि
19–(a) My. °णा° for °दा°

पूर्वं देवीविनाभूतं भूयःक्लृप्तौ कृतं यदि ।
बहुबेरं तथा तस्य देवीभ्यां सह वा विना ॥ २१ ॥

यथाबुद्धि विधातव्यं यजमानस्य सुव्रत ।
प्रासादं(दो?) बिम्बमथवा स्वयंव्यक्तममानुषम् ॥ २२ ॥

पूर्वं लक्षणहीनं च(चेत्?)जीर्णोद्धारेऽपि तं(तत्?)तथा ।
अन्यथा नैव कर्तव्यं कृते दोषो महान् भवेत् ॥ २३ ॥

स्थितयानशयानेषु बिम्बेषु च यथापुरम् ।
अमानुषेषु कर्तव्यमनघैरेवमेव हि ॥ २४ ॥

मानुषेषु यथेच्छातः पुनःसृष्टौ न दोषभाक् ।
यद्वस्तु यच्च यन्मानं यादृशं देवनिर्मितम् ॥ २५ ॥

विमानं तादृगेवाथ जीर्णोद्धारेऽपि नान्यथा ।
मोहात् प्रकल्पयेत्त*च्च अ*(च्चेद?)न्यथा राजराष्ट्रयोः ॥ २६ ॥

दोषाय जायते विप्र यथापूर्वं प्रकल्पयेत् ।
ऐष्टकं मृण्मयं वा चेन्मानुषं वार्षमेव वा ॥ २७ ॥

धाम जीर्णं यदि भवेत् पुनस्तच्छिलयापि वा ।
अथवेष्टकया कुर्यात् तत्र दोषो न विद्यते ॥ २८ ॥

रक्षार्थमुपपीठादि कल्पयन् वर्धयेद्बहिः ।
तत्रस्थान् परिवारांश्च स्थापयेत् कल्पयेत्पुनः ॥ २९ ॥

तत्र दोषश्च न भवेत्तत्संरक्षणार्थिनः ।
जीर्णं भवेद्यदि पुनर्गोपुरं पीठमेव वा ॥ ३० ॥

---

21–(a) My. °व° for °वी°
22–(d) K My. °क्तं च for °क्तम°
24–(d) K My. °व्यं मानवै° for °व्यमनघै°
26–(a) ABKM ताम्रजे for तादृगे°
28–30 A. om.

नद्यादीनां जलरयैर्नष्टं वा चलितं तु वा ।
धाम बिम्बादि तत्स्थानात् पुनरन्यत्र (तु?) कल्पयेत् ॥ ३१ ॥

येन मन्त्रेण या मूर्तिर्यादृशेनाधिकारिणा ।
कल्पिता तादृशीमेव मूर्तीनां(र्तिं तु ?)परिकल्पयेत् ॥ ३२ ॥

मूर्तिस्तन्त्रं च मन्त्रं च तादृशं चैव देशिकः ।
जीर्णोद्धारे पूर्वविधौ फलं तुल्यं द्वयोर्भवेत् ॥ ३३ ॥

व्यत्यये कल्प्यमाने तु *मूर्तिनात्रा(र्तीनाम?) धिकारिणा* ।
क्षयो भवेदतिमहान् राजराष्ट्रनृणामपि ॥ ३४ ॥

जीर्णोद्धारे कल्प्यमाने बहुबेरे प्रतिष्ठिते ।
स्नापयेत् कर्मबिम्बं च वेदिकायां च शाययेत् ॥ ३५ ॥

न कार्यो जलसंवासो नयनोन्मीलनं विना ।
संहारसृष्टी च विना ह्यन्यत्सर्वं समाचरेत् ॥ ३६ ॥

आसाद्य ध्रुवबेरेण सर्वं विप्र प्रकल्पयेत् ।
बालालयं विधायाथ तद्रात्र्यां प्रार्थ्य सादरम् ॥ ३७ ॥

आवाह्य तद्गतां शक्तिं कुम्भे तद्धान्यमस्तके ।
स्थापयित्वा समभ्यर्च्य प्राप्ते काले च देशिकः ॥ ३८ ॥

निवेश्य मूलबेरे तां शक्तिं शास्त्रोक्तवर्त्मना ।
*कुम्भपातौ*(?) विशेषेण परिवारान् प्रकल्पयेत् ॥ ३९ ॥

तदन्ते चोत्सवं कुर्यात् स हि शान्तिविधिः स्मृतः ।
प्रासादे प्रतिमायां च प्रभापीठादिकेऽपि च ॥ ४० ॥

---

32–(d) ABM द्वितीये कल्पने भवेत् ॥
33–(a) ABM मन्त्रेण तत्रैव for ° स्तन्त्रं च मन्त्रं च
–(d) ABM त° for द्व°
34–(b) My. मूर्तीनां त्रा(?)धिकारिणा
37–(b) ABKM विप्रः for विप्र
39–(c) A पात्रौ for पातौ
40–(a) ABM °द्देशे for °दन्ते

अङ्गभङ्गादिदोषाणां कृते संधानकर्मणि ।
जातायामपि विच्छित्तौ पूजायाश्चैव काश्यप ॥ ४१ ॥

अस्पृश्यस्पर्शने जाते विण्मूत्ररुधिरादिभिः ।
स्पर्शनाद् दूषणे जाते धाम्नो बिम्बस्य वा द्विज ॥ ४२ ॥

संप्रोक्षणं विधातव्यमिति शास्त्रस्य निश्चयः ।
दोषाणां तारतम्येन प्रोक्षणं स्नपनं हरेः ॥ ४३ ॥

होमं च कारयेद्विद्वान् शान्त्यर्थं सर्वकर्मणाम् ॥

**इति पञ्चरात्रे महोपनिषदि विश्वामित्रसंहितायां जीर्णोद्धारविधिर्नाम त्रयोविंशोऽध्यायः ॥**

## चतुर्विंशोऽध्यायः

**काश्यपः—**

भगवन् वैष्णवे यागे क्रियमाणेऽपि नित्यशः ।
राजराष्ट्रादिदोषेण विघ्नश्चेज्जायते गुरो ॥ १ ॥

तद्दोषप्रविघाताय किं कार्यं मानवैर्भुवि ।
मय्यनुग्रहबुद्धिश्चेत्तन्मे वक्तुं त्वमर्हसि ॥ २ ॥

**विश्वामित्रः—**

आराधने भभवतः क्रियमाणे द्विजोत्तमैः ।
मन्त्रलोपे क्रियालोपे शान्त्यर्थं श्रूयतां विधिः ॥ ३ ॥

---

1–(d) A °रोः for °रो
K. विभोः for गुरो
2–(a) K. My. प्रति° for प्रवि°
–(b) K. °र्यमनघै° for °र्यं मानवै°
3–(b) ABKM म for °मैः
–(d) My. °ते for °ताम्

सांवत्सरिकदोषौघप्रायश्चित्तं वदाम्यहम् ।
पवित्रारोपणं नाम सर्वपापप्रणाशनम् ॥ ४ ॥

वर्षे वर्षे तु कर्तव्यमाराधनमिदं परम् ।
श्रावणे मासि वा कार्यं यद्वा भाद्रपदेऽपि वा ॥ ५ ॥

*ऐष्वा(षा ?)दिमासाः सर्वत्र पवित्रारोपणं न च(?)* ।
निर्मितान् विप्रकन्याभिस्तन्तून् कार्पासजानपि ॥ ६ ॥

कौशेयानथवा क्रीतान् समान् दोषविवर्जितान् ।
मुद्गमाषादिभिश्चूर्णैः संमिश्रं क्षालयेज्जलैः ॥ ७ ॥

शुचिभिश्च प्रसन्नैश्च शुद्धेषु फलकादिषु ।
निधाय शोषयेद्विद्वानातपे शोधि(षि ?)तांस्ततः ॥ ८ ॥

परीक्ष्य तृणरोमाणि निरस्य च समाहितः ।
त्रिगुणीकृत्य च पुनस्त्रिगुणानपि कारयेत् ॥ ९ ॥

चतुर्गुणीकृत्य च तान् मातुलुङ्गफलोपमान् ।
विधाय स्थापयेत् पूर्वं मृत्पात्रेषु नवेषु च ॥ १० ॥

गोमयालेपिते शुद्धे भूतले सुसमे शुभे ।
प्रमाणानुगुणं शङ्कुद्वयं यज्ञद्रुमोद्भवम् ॥ ११ ॥

निधाय शङ्कोरारोप्य तद्वत्कुर्यात्प्रवर्त(वित्र?)कम् ।
स्नातैः शुक्लाम्बरधरैर्वेदविद्भिः समाहितैः ॥ १२ ॥

---

6–(a) K. एष्वादिमासिकः सर्वम्
My. °सः for °साः
–(b) K My. °हणं परम् for °पणं न च
8–(b) K. सिद्धे° for शुद्धे°
–(d) ABM My. °ष्य for °धि°
9–(a) K. °क्ष्यारुण° for °क्ष्य तृण°
10–(a) K. चितान् for च तान्
–(c) ABM My. °धिना for °धाय
12–(b) My विवृत्त° for प्रवर्त° (वित्र ?)

धृतोर्ध्वपुण्ड्रैः कुशलैर्वैष्णवैरविकत्थनैः ।
उदङ्मुखैः प्राङ्मुखैर्वा कारयेत्तु पवित्रकम् ॥ १३ ॥

सूत्रैरष्टोत्तरशतं(?) द्वात्रिंशद्ग्रन्थिसंयुतम् ।
मूलबेरादिकानां स्यादधिवासार्थमीदृशम् ॥ १४ ॥

मण्डले पद्ममानं स्यात् कुम्भे तत्कुम्भमानकम् ।
मेखलामानकं कुण्डे पवित्रमधिवासकम् ॥ १५ ॥

चक्राब्जमण्डलस्थेषु पद्मनाभ्यरनेमिषु ।
तत्समानि च कुर्वीत पवित्राणि बहिर्वृते(तौ?) ॥ १६ ॥

तत्समानं पवित्रं स्याद् ग्रन्थितन्तुविधिं शृणु ।
तन्तूंश्चतुःशतं विद्धि ग्रन्थयः सप्तविंशतिः ॥ १७ ॥

पादोना तन्तुसंख्या स्याद् द्विगुणा ग्रन्थयो द्विज ।
तन्तुसंख्या शतयुगं ग्रन्थयस्त्रिगुणात्म(त्मि?)काः ॥ १८ ॥

बाह्यवृत्ते(ह्यावृतौ?) ततस्ताश्च चतुःशतमितास्तथा ।
ग्रन्थयः पञ्चगुणिताः कुम्भस्याष्टोत्तरं शतम् ॥ १९ ॥

तन्तवो ग्रन्थयश्च स्युश्चतुर्विंशतिसंख्यकाः ।
करके तन्तवः कार्या एकाशीतिप्रमाणकाः ॥ २० ॥

सप्तविंशतिसंख्याका ग्रन्थयः करकेऽपि च ।
कौतुकानां पवित्राणि दश तानि क्रमाच्छृणु ॥ २१ ॥

प्रमाणगन्धालंकारपवित्रत्रयमुत्तमम् ।
मध्यमं चाधममिति त्रीणि पश्चात् किरीटकम् ॥ २२ ॥

---

15–(d) My. °येत् for °कम्
16–(b) ABKM °न्त for °र°
–(d) My. °हिः स्तैः for °र्हिर्वृते (तौ ?)
20–(b) My. स्युः सप्तविं° for स्युश्चतुर्विं°
21–(a) KMy. °ता for °का
–(d) K शृणु द्विज for क्रमाच्छृणु
22–(a) My. ग्रन्थालंकारा for गन्धालंकार

श्रीवत्सं कौस्तुभं चैव वनमाला त्रयं तथा ।
इत्थं दशपवित्राणि तन्तुग्रन्थिक्रमं शृणु ॥ २३ ॥

नाभ्यन्तं प्रथमं सूत्रमष्टोत्तरशतं विदुः ।
द्वात्रिंशत् स्याद् ग्रन्थिसंख्या गन्धाख्यं हृदयावधि ॥ २४ ॥

अशीतितन्तवस्तस्य ग्रन्थयः पञ्चविंशतिः ।
अलंकारपवित्रं तु जङ्घामध्योक्तमायतम्(?) ॥ २५ ॥

तन्तवोऽष्टोत्तरशतं द्वात्रिंशद् ग्रन्थयो मताः ।
उत्तमाख्यपवित्रस्य सूत्रसंख्या चतुःशतम् ॥ २६ ॥

ग्रन्थयोऽष्टोत्तरशतं जानुमध्यान्तमायतम्(?) ।
मध्यमस्य च तन्तूनां शतानि त्रीणि काश्यप ॥ २७ ॥

अशीतिग्रन्थयो ज्ञेया ऊरुमध्यं तदायतिः(?) ।
अधमस्य शते द्वे तु तन्तवः परिकीर्तिताः ॥ २८ ॥

ग्रन्थयस्तस्य षष्टिः स्युर्नाभिमध्यं तदायतिः(?) ।
किरीटाख्यपवित्रस्य तन्तवः स्युश्चतुःशतम् ॥ २९ ॥

किरीटमेव मानं स्याद् द्वात्रिंशद्ग्रन्थयोऽस्य च ।
श्रीवत्साख्यपवित्रस्य तन्तवः स्युश्चतुःशतम् ॥ ३० ॥

ग्रन्थयः सप्तविंशत् (?) स्याद्भा(स्युर्हा ?)रान्तं तत्प्रकल्पनम् ।
कौस्तुभस्य शते द्वे तु तन्तूनां परिकीर्तिते ॥ ३१ ॥

द्वात्रिंशद् ग्रन्थयः कार्याः स्तनमध्यं तदायतिः(?) ।
वनमालाह्वयस्य स्युस्तन्तवोऽष्टसहस्रकम् ॥ ३२ ॥

प्रमाणं चरणायामं ग्रन्थिसंख्या न विद्यते ।
पीठस्य च पवित्रं स्यात् पञ्चविंशतिसूत्रकम् ॥ ३३ ॥

---

23-(d) MMy. तत्र for तन्तु

24-(d) ABMMy. हृदयावधिकं द्विज

27-(b) BK °तिः for °तम्(?)

31-(b) ABKM धारान्ताम् for भा(स्युर्हा ?)रान्तम्

दशभिर्ग्रन्थिभिर्युक्तं तदायामसमन्वितम् ।
अर्घ्यपात्रे धूपदीपपात्रे घण्टाक्षमालयो: ॥ ३४ ॥

सर्वेष्वष्टोत्तरशतं सूत्राणि ग्रन्थयोऽपि च ।
यथाशोभं प्रकल्प्या: स्युरायामो द्वादशाङ्गुल: ॥ ३५ ॥

विष्वक्सेनस्य तार्क्ष्यस्य दिक्पालानां च काश्यप ।
दिग्देवतानां च तथा दुर्गाविघ्नेशयोरपि ॥ ३६ ॥

ब्रह्मशंकरयोश्चापि तन्तवोऽष्टोत्तरं शतम् ।
द्वात्रिंशद् ग्रन्थय: प्रोक्ता हस्तायामो(?) द्विजोत्तम ॥ ३७ ॥

चण्डादीनां च सर्वेषां सप्तविंशतिसूत्रकम् ।
हस्तमानं प्रकर्तव्यं यथाशोभमपि द्विज ॥ ३८ ॥

द्वारतोरणकुम्भानां तद्वदेव पवित्रकम् ।
कर्णिकायामसदृशं बलिपीठपवित्रकम् ॥ ३९ ॥

आचार्याणां यतीनां च नाभ्यन्तपरिलम्बितम् ।
अष्टोत्तरशतै: सूत्रैर्बहुभिर्ग्रन्थिभिर्युतम् ॥ ४० ॥

ऋत्विजां पूजकानां च वैष्णवानां तथैव च ।
सूत्रैरेकोत्तराशीतिमितैर्नाभ्यन्तलम्बितम् ॥ ४१ ॥

राज्ञामष्टोत्तरशतै रचितं तन्तुभिर्द्विज ।
निर्मितं तूलगर्भैश्च ग्रन्थिभि: शोभितं यथा ॥ ४२ ॥

नाभ्यन्तलम्बितं कार्यमन्येषामनुजीविनाम् ।
एकाशीतिप्रमाणैश्च सूत्रै: कार्यं द्विजोत्तम ॥ ४३ ॥

वैश्यादीनां च कुर्वीत चतुर्विंशतितन्तुभि: ।
विभवे सति सर्वेषां पवित्राणां तु विस्तृति:(?) ॥ ४४ ॥

---

34–(a) ABMMy. बहु° for दश°
–(c) ABMMy. धूपपात्रे for धूपदीप°
(d) ABMMy: घण्टायामक्षसूत्रके ॥

मणिमुक्ताप्रवालाद्यैर्लोहैः स्वर्णादिभिस्तथा ।
तदभावे च तूलैर्वा ग्रन्थिमध्यं प्रपूर्य च ॥ ४५ ॥

सूत्रैर्ग्रन्थ्यन्तरालानि यथाशोभं तु रञ्जयेत् ।
विभवे सति संकोचो नैव कार्यो विजानता ॥ ४६ ॥

पवित्रेषु कृतेष्वेवं शास्त्रचोदितवर्त्मना ।
निक्षिप्य हेमभाण्डेषु महत्सु बहुषु द्विज ॥ ४७ ॥

अथवा मृण्मयेष्वेव शुभेषु शुचिषु द्विज ।
वस्त्रखण्डैश्च वक्त्राणि सूत्रैर्बध्वा दृढैरपि ॥ ४८ ॥

पूर्वपक्षे दशम्यां च सायाह्ने मूर्तिपैः सह ।
सहैव यजमानेन प्रविश्य सदनं हरेः ॥ ४९ ॥

आराधयित्वा देवेशं भक्त्या विज्ञापयेत् स्वयम् ।
प्रणतः प्राञ्जलिर्भूत्वा गाथामेतामुदीरयेत् ॥ ५० ॥

भगवन् नृहरे तस्मिन् नित्यपूजाविधौ तव ।
न्यूनातिरेकजनितदुरितोत्सारणक्षमम् ॥ ५१ ॥

सर्वासां संपदां चैव समुत्पादनहेतुकम् ।
पवित्रारोह(प?)णं नाम समाराधनमुत्तमम् ॥ ५२ ॥

चिकीर्षामि जगन्नाथ विधिना चोदितेन तत् ।
कारयित्वा त्वविघ्नेन जुषस्व दयया मयि ॥ ५३ ॥

इत्थं विज्ञापनं कृत्वा प्रणम्यालयमध्यतः ।
निर्गत्य मण्टपवरं स्वनुलिप्तं स्वलंकृतम् ॥ ५४ ॥

वितानध्वजमालाभिर्दर्भमालापरिष्कृतम् ।
द्वारपार्श्वेषु(र्श्वसु?)विन्यस्तपूर्णकुम्भयुगं द्विज ॥ ५५ ॥

---

46-(d) K. द्विजोत्तम for विजानता

51-(ab) ABM om.

55-(d) ABMMy. °तम् for °गम्

चक्राब्जमण्डलं तत्र कारयित्वा विधानतः ।
मण्डलस्य समीपे तु दर्भानास्तीर्य देशिकः ॥ ५६ ॥

आसीनः प्राङ्मुखस्तिष्ठन् संकल्प्योपवसेत्ततः ।
जाग्रदेव नयेत्तत्र रात्रिं जपपरस्तदा ॥ ५७ ॥

एकादश्यां निशादौ तु कारयेदधिवासनम् ।
प्रतिष्ठोक्तेन विधिना विधायाङ्कुररोपणम् ॥ ५८ ॥

बन्धनं कौतुकस्यैव कृत्वा कल्याणकौतुकम् (के?) ।
तोरणाद्यर्चनं कृत्वा मण्टपे दिग्विदिक्षु च ॥ ५९ ॥

ऋगादिवेदांश्चतुरो द्विजाग्र्यैर्वेदवित्तमैः ।
शाखामेकायनीं चापि विद्वद्भिरभिघोष्य च ॥ ६० ॥

भेरीपटहकांस्यादि घोषयित्वा समन्ततः ।
कारयित्वा च गीतादीन् सर्वमङ्गलसंयुतम् ॥ ६१ ॥

शालीनां दशभिर्भारैः कृत्वा माहेन्द्रमण्डलम् ।
पवित्रभाण्डमखिलं तत्र संस्थाप्य देशिकः ॥ ६२ ॥

पुण्याहघोषणं कृत्वा दहनाप्यायनादिकैः ।
विशोध्य धूपयित्वा तु कालागरुसमुद्भवैः ॥ ६३ ॥

कलशैश्चन्दनाद्यैश्च घनसारैश्च सर्वतः ।
सर्वतो गन्धपुष्पैश्च सुशुभैरभिषिच्य च ॥ ६४ ॥

क्षौमैरभिनवैस्तानि पात्रण्यावेष्ट्य काश्यप ।
चक्रमुद्रां दर्शयित्वा सभाज्यास्त्रेण मण्टपम् ॥ ६५ ॥

---

57–(b) ABMMy. संस्त° for °सेत्त°.
–(d) ABKM °रः स° for °रस्त°
60–(b) ABK. °ग्रै° for °ग्र्यै°
–(c) ABM °मय्यायतिम् K °मेकायिनम् for °मेकायनीम्
–(d) ABM °तद्वद्भि° K तद्विद्भि for विद्वद्भि°

संवेष्ट्य सूत्रैरीशानीं दिशमारभ्य सर्वतः ।
उपरिष्टान्मण्टपस्य ध्यात्वास्त्रेशं सुदर्शनम् ॥ ६६ ॥

भूतले सगदं पद्मं पाञ्चजन्यं दिशास्वपि ।
छिद्रान्वेषणदक्षाणां भूतानां शान्तये पुनः ॥ ६७ ॥

बलिं माषौदनेनैव विकीर्य च समन्ततः ।
स्नापयित्वौत्सवं बिम्बमुपवीतावसानकम् ॥ ६८ ॥

सभाज्य मण्टपे चैव समानीय द्विजोत्तम ।
निवेद्य च हविस्तत्र समाप्याराधनं हरेः ॥ ६९ ॥

कर्करीसहिते कुम्भे हविरन्तं सभाज्य च ।
हव्यवाहगतं देवं तर्पयित्वा हुतेन च ॥ ७० ॥

पवित्रभूषणं सर्वं चतुःस्थानस्थितस्य च ।
पृथक् पृथक् पात्रगतं पुरतो विनिवेश्य च ॥ ७१ ॥

जपन्निदं विष्णुरितिमन्त्रं मङ्गलसंयुतम् ।
आसाद्य मूलबिम्बं तु पवित्रं मूलमन्त्रतः ॥ ७२ ॥

तस्मिन् विन्यस्य सर्वत्र क्रमादर्चासु देशिकः ।
पवित्रभूषणन्यासं विधाय तदनन्तरम् ॥ ७३ ॥

सूत्रैश्च पञ्चवर्णाद्यैः(ढ्यैः ?)प्रासादं चापि वेष्टयेत् ।
तां रात्रिं सकलां नीत्वा जाग्रदेव जपादिकैः ॥ ७४ ॥

प्रभाते मण्डपाग्रस्थं नीत्वा स्नानार्थवेदिकाम् ।
स्नापयित्वा च विधिना भूषयित्वा ततः परम् ॥ ७५ ॥

---

72-(c) K °चार्यो for °साद्य

(d) AM पूर्वं° for मूल°

73-(a) ABM °श्वस्य for °न्यस्य

74-(a) K पूतवर्गाढ्यैः for पञ्चवर्णाद्यैः(ढ्यैः ?)

75-(a) KM मण्टपाग्रस्थान् for मण्डपाग्रस्थम्

नीत्वा च मण्डलं तत्र पूजयेद्दीपपश्चिमम् ।
कुम्भादीनपि चाभ्यर्च्य निवेद्यान्नं चतुर्विधम् ॥ ७६ ॥

हुत्वा च पायसादीनि पुंसूक्तेन पृथक् पृथक् ।
बहुभिः सतिलैर्लाजैर्धूपैरगरुभिस्ततः ॥ ७७ ॥

समिद्भिराज्यैर्जुहुयात् पृथगष्टशताहुतीः ।
सांवत्सरोक्ते सुभगे मुहूर्ते देशिकोत्तमः ॥ ७८ ॥

मण्डलं भूषयेत्पूर्वं पवित्रैर्भूषणोत्तमैः ।
मण्डलाङ्गानि च तथा पद्मादीनि यथातथम् ॥ ७९ ॥

कुम्भादीनपि चाभ्यर्च्य निवेद्यान्नं चतुर्विधम् ।
कुम्भस्थे(म्भे च ?) करके देवे कुण्डे वा तोरणादिषु ॥ ८० ॥

तत्कुम्भेषु च सर्वेषु भूषणानि यथाक्रमम् (?) ।
मण्डलस्थं जगन्नाथं परीत्याथ प्रदक्षिणम् ॥ ८१ ॥

सर्वमङ्गलसंयुक्तं मन्दिरान्तः प्रवेश्य च ।
स्नपनादिनिवेद्यान्तं विधाय च सभाजनम् ॥ ८२ ॥

मूलार्चादीनि सर्वाणि विम्बान्यपि पवित्रकैः ।
अलंकृत्याथ निर्गत्य चण्डादीनामपि द्विज ॥ ८३ ॥

परिवारगणानां च पवित्राणि निधाय च ।
ब्रह्मादीनामपि तथा सेनानीतार्क्ष्ययोरपि ॥ ८४ ॥

बलिपीठावसानानां सर्वेषामपि काश्यप ।
विष्णुगायत्रिया यद्वा तथेदं विष्णुरित्यपि ॥ ८५ ॥

---

76-(c) K °नमितोऽ° for °नपि चा°
77-(b) K. ससूत्रेण for पुंसूक्तेन
-(d) K °था for °तः
78-(b) My. °ग्दश° for °गष्ट°
79-(d) ABKM °य for °त°
80-(c) ABMMy. कुम्भं सकरकं देवम्
-(d) ABMMy. °ण्डम् for °ण्डे

अष्टाक्षरेण वा यद्वा द्वादक्षरविद्यया ।
पवित्राणि प्रदायाथ देशिको मूर्तिपैर्युतः ॥ ८६ ॥

प्रविश्य विष्णोः सदनं यजमानः समाहितः ।
अञ्जलौ रत्ननिचयं हैमं वा पुष्पसंचयम् ॥ ८७ ॥

निवेश्य स्तोत्रपठनं कुर्वन्नेव पदाब्जयोः ।
विकीर्य तानि रत्नानि हैमानि कुसुमान्यपि ॥ ८८ ॥

मनुजानामपि तथा पवित्राणि कृतानि च ।
वस्त्राण्यपि च विज्ञाप्य देवं गृह्णीत देशिकः ॥ ८९ ॥

ऋत्विग्भ्यः पूजकेभ्यश्च वेदविद्भ्यश्च दापयेत् ।
विहितानि पवित्राणि दृष्ट्वा देवमुखाम्बुजम् ॥ ९० ॥

विज्ञापयेदिमां गाथां सर्वदेवक्षमापिणीम् ।
देवदेव जगन्नाथ दयाम्भोधे मया कृतम् ॥ ९१ ॥

गृहाणाराधनमिदं सर्वभोगप्रपूरणम् ।
स्वातन्त्र्येण मया नैतद्विहितं जगतां निधे ॥ ९२ ॥

किं तु त्वत्प्रेरितमतिः किमु वान्यत् क्षमस्व मे ।
इत्थं विज्ञाप्य देवेशं प्रणिपत्य क्षमापयेत् ॥ ९३ ॥

यजमानश्च गुरवे तस्मिन् काले पशून् भुवः ।
गृहं च धनधान्याढ्यं दद्यात् प्रीतेन चेतसा ॥ ९४ ॥

अन्येभ्यः सहकारिभ्यस्तत्तत्कर्मानुरूपतः ।
देया च दक्षिणा तेषां मनःप्रीतिर्यथा भवेत् ॥ ९५ ॥

अपराह्णे च देवेशं नीत्वा धाम प्रदक्षिणम् ।
सर्वमङ्गलसंयुक्तं मन्दिरान्तः प्रवेशयेत् ॥ ९६ ॥

---

91-(b) KMy. °दोषक्षमां पराम् for देवक्षमापिणीम्

सप्त त्रीन् पञ्च दिवसान् समतीत्यावरोहणम् ।
पौरुषं सूक्तमुच्चार्य तथा साम रथन्तरम् ॥ ९७ ॥

त्रिसुपर्णं मूलमथ पवित्राण्यवरोपयेत् ।
गुरवे तानि देयानि प्रीणनार्थं मधुद्विषः ॥ ९८ ॥

कुम्भस्थं मण्डलस्थं च वह्निस्थं च हरिं पुनः ।
विसृज्य देवस्य ततः स्नपनं चापि कारयेत् ॥ ९९ ॥

अनेन विधिना विप्र पवित्रारोह(प?)णं हरेः ।
कुर्वन् फलान्यनन्तानि प्राप्नोत्येव न संशयः ॥ १०० ॥

अनेन विधिना विप्र कह्लारकुसुमान्यपि ।
तथा दमन्याः पत्राणि देवस्यारोपयेद् द्विज ॥ १०१ ॥

सांवत्सरिकभोगानां पूरणार्थं श्रियः पतेः ॥

इति पञ्चरात्रे महोपनिषदि विश्वामित्रसंहितायां
पवित्रारोपणविधिर्नाम चतुर्विंशोऽध्यायः ॥

---

97-(a) ABK °रात्रं त्रि M त्रिरात्रम् for त्रीन् पञ्च
-(b) AB °त्य च for °त्याव°
KM °त्य च रोहि for °त्यावरोह°

98-(a) AB सुपर्णंमूलमथवा

99-(a) ABKM उद्वास्य कुम्भसं° for कुम्भस्थं मण्डल°
-(b) ABKM मण्डलस्थम् for वह्निस्थं च

100 ABKM. Om.

# पञ्चविंशोऽध्यायः

काश्यपः—

भगवन् करुणावास कह्लारकुसुमार्चनम् ।
दमनीदलपूजां च वक्तुमर्हसि मे गुरो ॥ १ ॥

विश्वामित्रः—

कह्लारकुसुमैः पूजां लक्ष्मीभर्तुर्वदाम्यहम् ।
सावधानेन मनसा तच्छृणु द्विजपुंगव ॥ २ ॥

पुराम्बरीषो नामाभूद्राजर्षिर्धार्मिकोत्तमः ।
चक्रवर्तीश्वर*श्चक्रे*(?) सद्वीपां सागराम्बराम् ॥ ३ ॥

विजित्य सकलामुर्वीं स राजा धर्मतः प्रजाः ।
रञ्जयामास सकलाः प्रजाः स्वा इव भूपतिः ॥ ४ ॥

अदर्शनेन कार्याणामन्येषां यज्ञपूरुषम् ।
तोषयामास बहुभिर्यज्ञैः संपूर्णदक्षिणैः ॥ ५ ॥

एकोनमश्वमेधानां शतं चक्रे महामनाः ।
कर्तुं शततमं यज्ञं तुरंगं स विसृष्टवान् ॥ ६ ॥

स्वैरं चरन्तमश्वं तममात्यैर्बहुभिर्वृतम् ।
पश्यतां रक्षिणां शक्रो गूढमूर्तिर्जहार ह ॥ ७ ॥

रक्षिणोऽन्विष्य सर्वत्र तुरगादर्शनेन *तम्* (तु?) ।
विषण्णवदना भूत्वा भूमिपालं व्यजिज्ञपन् ॥ ८ ॥

पश्यतां सावधानेन(ना ?) अ(प्य ?)स्माकं ते (तु ?) तुरंगमः ।
अदर्शनं गतो देव करणीयं वद प्रभो ॥ ९ ॥

इति श्रुत्वा गिरं तेषामम्बरीषो महीपतिः ।
ऋत्विक्पुरोहिताचार्यानाहूयेदं वचोऽब्रवीत् ॥ १० ॥

---

7-(d) **AKM My.** तम् for ह

मध्ये तुरंगमो नष्टः किं कृत्यं वदत द्विजाः ।
इत्युक्तास्ते गिरं चेमामूचुर्द्विजवरा द्विज ॥ ११ ॥

अन्विष्यतां द्विजसुतः कश्चित् तेन यजामहे ।
इत्युक्तो भूमिपालस्तु द्विजसूनुं स्वकैर्धनैः ॥ १२ ॥

*विक्रीया(?)*नीतवान् मार्गे मया नीतः कुमारकः ।
मह्यं निवेदयामास यथावृत्तं मयापि सः ॥ १३ ॥

पालितः शिष्यतां प्राप्तः शुनःशेपः स वै द्विजः ।
राजापि निर्विण्णमना वसिष्ठमिदमुक्तवान् ॥ १४ ॥

यज्ञ*विघ्नार्थ(?)*मानीतो मया विप्रकुमारकः ।
सोऽपि त्रातो भगवता विश्वामित्रेण धीमता ॥ १५ ॥

यज्ञः सफलतां प्राप्तस्तथापि मम चेतसि ।
विप्रो विशसनार्थाय मयानीत इति द्विज ॥ १६ ॥

वर्तते विचिकित्सा तु प्रायश्चित्तं समादिश ।
इति पृष्टः स भगवान् वसिष्ठो मुनिसत्तमः ॥ १७ ॥

अम्बरीषं महाराजमुक्तवान् द्विजसत्तम ।
असद्वाक्येन नृपते यत्त्वया द्विजबालकः ॥ १८ ॥

आनीतस्तव दोषोऽत्र न भविष्यति भूमिप ।
तथापि विचिकित्सा ते वर्तते यदि चेतसि ॥ १९ ॥

ब्रह्महत्यापहं राजन् श्रूयतां व्रतमुत्तमम् ।
धन्यं यशस्यमायुष्यमारोग्यजनकं महत् ॥ २० ॥

विष्णोः प्रीतिकरं सर्वसंपदामेककारणम् ।
विशेषेण श्रियो देव्याः प्रीणनं तद्व्रतोत्तमम् ॥ २१ ॥

---

15-(d) BM मेधया for धीमता

20-(d) BKM °नम् for °कम्

सदा धारयते देवी मही कह्लारसूनकम् ।
द्विधाभूता स्थिता शक्तिरेकैकं(व ?)मधुविद्विषः ॥ २२ ॥

श्रीमहीरूपभेदेन तस्माद्भूम्या करे धृतम् ।
कह्लारं भगवत्प्रीतिकारणं तत्सभाजय ॥ २३ ॥

एवमुक्तो भगवता वसिष्ठेन महीपतिः ।
कह्लारैर्देवदेवेशमर्चयित्वा श्रियः पतिम् ॥ २४ ॥

ऐहिकान् सकलान् भोगान् भुक्त्वान्ते वैष्णवं पदम् ।
*गच्छेदतः*(?) प्रवक्ष्यामि तव तेजोऽभिवृद्धये ॥ २५ ॥

मयाप्याराधितो देवः कह्लारैः पुरुषोत्तमः ।
ब्राह्मण्यं तपसा लब्धं यदा कश्यपनन्दन ॥ २६ ॥

तदा मां ब्रह्मणः पुत्रो वसिष्ठो भगवान् ऋषिः ।
ब्रह्मर्षिस्त्वमसीत्युक्त्वा तव तेजोभिवृद्धये ॥ २७ ॥

कह्लारैर्यज तं देवं विष्णुं जिष्णुं सनातनम् ।
इत्युक्त्वा तद्विधिं भूयः कथयित्वा मुनीश्वरः ॥ २८ ॥

जगामादर्शनं भूयस्तच्छ्रुत्वाहमपि द्विज ।
जी(ची?)र्णवांस्तु व्रतेनैव तदुक्तेनैव वर्त्मना ॥ २९ ॥

सकृदेतेन चीर्णेन व्रतेन द्विजसत्तम(?) ।
तच्छृणुष्वा(?)वधानेन व्रतं सर्वार्थसाधनम् ॥ ३० ॥

ऋतुराजे वसन्ते वा तथा शरदि वा द्विज ।
ज्येष्ठे वा श्रावणे वापि मासे पौषेऽथ फाल्गुने ॥ ३१ ॥

---

26–(d) ABM My. °था for दा
29–(c) ABM चीर्णवान् व्रतपर्यन्तम्
–(d) K My. एतदुक्तेन for तदुक्तेनैव
30–(a) My. जी° for ची°
31–(c) ABM श्रे° for ज्ये°
–(d) ABM My. °ष्ये for °षे
BKM My. फ° for फा°

पूर्वपक्षे तु पञ्चम्यां द्वादशीपूर्णयोरपि ।
रोहिणीश्रवणादित्येषूत्तरासु तथैव च ॥ ३२ ॥

यजमानानुकूलेषु मासर्क्षादिषु च द्विज ।
त्रैवर्णिकेष्वेकतमो यजमानोऽपि काश्यप ॥ ३३ ॥

प्रार्थितो यजमानेन देशिकः कारयेदिमम् ।
कह्लारं भगवद्यागं सांवत्सरिकमुत्तमम् ॥ ३४ ॥

आराधनदिनात्पूर्वं नवमे सप्तमेऽपि वा ।
तृतीये वाथ सद्यो वा मङ्गलाङ्कुरवापनम् ॥ ३५ ॥

तस्मादारभ्य कुर्वीत विशेषयजनं हरेः ।
मण्डपादिष्वलंकारविधिः कार्यो विशेषतः ॥ ३६ ॥

सर्वा*श्च वृतयो*(श्चैवावृतीः?) धाम्नो ग्राममध्यं च सर्वतः ।
तोरणैः केतुमालाभिः पताकाभिश्च सुव्रत ॥ ३७ ॥

अलंकुर्यात् प्रयत्नेन यथा दिव्या भवन्त्यमी ।
संकल्पित्दिनात् पूर्वदिवसे तु प्रकेतनम् ॥ ३८ ॥

समाप्य सकलं कर्म सर्वमङ्गलसंयुतम् ।
कारयेद्वापिकां खात्वा(?) तस्याः पश्चिमतः प्रपाम् ॥ ३९ ॥

चतुःस्तम्भयुतामष्टस्तम्भैर्युक्तामथापि वा ।
विधाय स*विधानां तं* (वितानां तु?) समीकृत्य च भूतलम् ॥ ४० ॥

विलिप्य गोमयेनाथ सुधाचूर्णैर्विचित्र्य च ।
तन्मध्ये पञ्चभारेण शालीनां चतुरश्रकम् ॥ ४१ ॥

विधायोपरि विस्तीर्य क्षौमं भारद्वयं पुनः ।
तण्डुलानां विनिक्षिप्य भारयुग्मं तदूर्ध्वतः(?) ॥ ४२ ॥

---

37–(a) ABM सर्वस्वावृत्तयो for सर्वा*श्च वृतयो*

40–(c) BM; सं° for स°

42–(a) ABM °स्त्रा for °स्ती°

वस्त्रोपरि तिलान् भारातीतान् निक्षिप्य देशिकः ।
तत्कृते चतुरश्रेऽथ कुम्भं गन्धाम्बुपूरितम् ॥ ४३ ॥

तन्तुवेष्टितसर्वाङ्गं क्षौमयुग्माभिवेष्टितम् ।
निक्षिप्य कुशकूर्चान्तं नवरत्नसुसंयुतम् ॥ ४४ ॥

तन्मध्ये पृथिवीं देवीमावाह्यार्घ्यादिना यजेत् ।
परितश्चाष्टकलशानिन्द्रादींस्तेषु पूजयेत् ॥ ४५ ॥

सुदर्शनं च करके सर्वविघ्नप्रशान्तये ।
निवेदयेत् पायसं च मनुना पार्थिवेन तु ॥ ४६ ॥

दत्वा च क्षेत्रपालाय तत्प्राच्यां पायसेन तु ।
बलिदानं च परितः शक्रादीनां तथा बलिम् ॥ ४७ ॥

दत्वा पूर्वादिशर्वान्तं भूमिर्भूम्नेतिसूक्ततः(कम्?) ।
अधीयानोऽपि चिनुयात् पुष्पाणि सुशुभान्यपि ॥ ४८ ॥

शङ्खकाहलतूर्यादिनृत्तगीतसमन्वितम् ।
वापि(टि?)काया नूतनानि गृह्णीयात् कुसुमान्यपि ॥ ४९ ॥

वैष्णवाश्चापि गृह्णन्तु तूर्णीं पुष्पाणि सर्वशः ।
सौवर्णे पात्रनिचये स्थापयित्वा पिधाय च ॥ ५० ॥

पुष्पाणि च समाहृत्य कुम्भस्य स्थापयेत्पुरः ।
देव्याश्चोद्वासनं कृत्वा क्षामयित्वा च देशिकः ॥ ५१ ॥

---

43–(a) My. तलात् for तिलान्
AK °र My. °रम् for °रा°
–(b) AK मि for ती°
My. ततो for °तीतान्
46–(a) K °लशे for °रके
48-(d) My. °भगा for °शुभा°
50–(d) ABM °पि च द्विज K यथाविधि for पिधाय च
51–(a) K शुभ° for च स°
–(b) K My. कुम्भे संस्थापयेत्पुनः ।
–(c) ABM My. व्यो° for व्या°
–(d) My. क्षौ° for क्षा°

गजस्कन्धाधिरूढैश्च वाहयेद् द्विजसत्तम ।
छत्रच्छायासु चानीतैः पठद्भिः स्वस्तिसूक्तकम् ॥ ५२ ॥

अधीयानैश्च पुरतो विप्रैर्वेदचतुष्टयम् ।
शङ्खकाहलचिह्वानां(?) संनादस(नः?)पुरःसरम् ॥ ५३ ॥

तूर्यघोषैश्च पुरतो बधिरीकृतदिङ्मुखम् ।
पताकाभिर्विचित्राभिश्छादितातपसंचयम् ॥ ५४ ॥

धाम प्रदक्षिणं कृत्वा गीतनृत्तान्वितं पुरः ।
देवागारं प्रविश्यैव ध्रुवबेरपुरोभुवि ॥ ५५ ॥

स्थापयित्वा च देवाय दर्शयेत् कुसुमान्यपि ।
निर्गमय्य बहिः पुष्पं मण्डपे संनिवेश्य च ॥ ५६ ॥

स्नातैः शुक्लाम्बरधरैः सोष्णीषैर्वैष्णवैरपि ।
धृतोर्ध्वपुण्ड्रैर्विप्राद्यैर्मालाकर्मणि कोविदैः ॥ ५७ ॥

कारयेद्विविधा मालास्तत्तद्बेरप्रमाणतः ।
अधिवासस्रजं कुर्यादाद्यामानाभिलम्बिताम् ॥ ५८ ॥

मूलबेरस्य कुसुमैः कुर्यात् पञ्चशतैर्द्विज ।
अष्टोत्तरशतैः कुर्यात् कौतुकस्यौत्सवस्य च ॥ ५९ ॥

तदर्धेन स्रजं कुर्याद्देव्योः श्रीभूमिसंज्ञयोः ।
कर्मार्चाप्रभृतीनां तु पञ्चविंशतिभिः स्रजम् ॥ ६० ॥

आनाभिलम्बितां कुर्याद्यथाहारविभूषणम् ।
कुम्भमण्डलकुण्डानामधिवासस्रजं द्विज ॥ ६१ ॥

पञ्चाशद्भिः पृथक् कुर्यात् कुसुमैर्द्विजपुंगव ।
अधिवासस्रजः कुर्यादेवं द्विजवरोत्तम ॥ ६२ ॥

---

55 (d) ABM विभोः for भुवि
56-(b) K °यित्वा for येत् कु°
My. ° यन् for येत्
57-(b) K प्राकृतात्मकैः for वैष्णवैरपि
62-(b) My. सत्तम for पुंगव

तद्दिनस्रक्प्रमाणानि प्रोच्यन्ते शृणु तान्यपि ।
बेराणां तु ध्रुवादीनां प्रत्येकं पञ्चमालिकाः ॥ ६३ ॥

उत्तमा मध्यमा चैव तथैवाधमसंज्ञिका ।
किरीटवनमालाख्ये पञ्चैव स्युर्द्विजोत्तम ॥ ६४ ॥

उत्तमां मूलबेरस्य कुर्यादष्टसहस्रकैः ।
कुसुमैर्जानुपर्यन्तां मध्यमामष्टभिः शतैः ॥ ६५ ॥

ऊरुमध्यावलम्बां तु शृणु चापि कनीयसीम् ।
षड्भिः शतैश्च पुष्पाणां नाभिलम्बां प्रकल्पयेत् ॥ ६६ ॥

किरीटमालां कुर्वीत पुष्पैरष्टोत्तरैः शतैः ।
चतुःसहस्रैः कुर्वीत वनमालां द्विजोत्तम ॥ ६७ ॥

आपादलम्बिनीं श्लक्ष्णां वृत्ताग्रां द्विजसत्तम ।
पीठस्य चापि कुसुमैरष्टोत्तरशतैः स्रजम् ॥ ६८ ॥

कल्याणकौतुके कुर्यादुत्तमां पञ्चभिः शतैः ।
चतुःशतैर्मध्यमां च त्रिशतैरधमां स्रजम् ॥ ६९ ॥

पञ्चाशद्भिश्च कुसुमैः किरीटस्रजमादरात् ।
विदध्याद्वनमालां च कुसुमैः पञ्चभिः शतैः ॥ ७० ॥

पीठस्यापि प्रकुर्वीत स्रजमष्टशतैर्द्विज ।
उक्ते उत्तममध्याख्ये स्रजावधमसंज्ञिताम् ॥ ७१ ॥

त्रिद्व्येकशतसंख्याकैः कुसुमैः क्रमशो मुने ।
प्रमाणं पूर्ववत्प्रोक्तमेतासां कुसुमस्रजाम् ॥ ७२ ॥

बेराणं कर्मपूर्वाणां पुष्पैरष्टशतैर्द्विज ।
तदर्धैरथवा कुर्यात् तदर्धैरपि वा मुने ॥ ७३ ॥

---

67-(d) My. °मालास्रजं तथा for ° मालां द्विजोत्तम

68-(b) K पुंगव for सत्तम

73-(d) ABK °थ° for °पि

तिस्रो द्वे वा तथैका वा यथासंभवमेव वा ।
कुम्भमण्डलकुण्डान्तर्वर्तिनः पुरुषस्य च ॥ ७४ ॥

शतद्वयेन पुष्पाणामुत्तमा स्यात्तु मालिका ।
अध्यर्धशतपुष्पैस्तु मध्यमा परिकीर्तिता ॥ ७५ ॥

कुम्भवत् करकस्यापि प्रमाणं परिकीर्तितम् ।
तत्स्थानपरिवाराणामेकैकं कुसुमं भवेत् ॥ ७६ ॥

पद्मनाभ्यन्त(र)नेमीनां श्रितानां चक्रमण्डलम् ।
तत्प्रमाणस्थितं कार्यं शतं द्वित्रिचतुर्गुणैः ॥ ७७ ॥

पुष्पैः कार्याः स्रजो बाह्ये तत्प्रमाणाश्च मालिकाः ।
चतुःसहस्रैः पुष्पाणां मालिका द्विजपुंगव ॥ ७८ ॥

प्रभायाः कौतुकानां स्युर्मालास्तत्तत्प्रमाणकाः ।
उत्सवार्चाप्रभायास्तु सहस्रद्वयसंख्यकैः ॥ ७९ ॥

पुष्पैर्माला विधातव्या सेनापक्षीशयोरपि ।
चण्डादीनां च सर्वेषामिन्द्रादीनां च कारयेत् ॥ ८० ॥

प्रत्येकं मालिकाः कार्याः पुष्पैस्त्रिंशत्तमै(न्मितै ?)र्मुने ।
अन्येषां परतन्त्राणां बिम्बानामपि काश्यप ॥ ८१ ॥

अष्टोत्तरशतैरेवमलंकुर्याद्विचक्षणः ।
आनाभिलम्बिताः कार्या हाराकारा द्विजोत्तम ॥ ८२ ॥

अनेन वर्त्मना कार्याः पुष्पाणां संभवे सति ।
असंपत्तौ तु पुष्पाणामर्धैः पादैरथापि वा ॥ ८३ ॥

---

75–(b) ABKM °स्तास्तु for स्यात्तु ; काः for °का
–(d) ABKM °माः for मा ; °ताः for °ता
76–(a) My. °स्य for °वत्
77–(a) AB °रं नेमि M रं नेमिम् for नेमीनाम्
–(b) AB श्रुतानां च कमण्डलुम् । KM स्तुतानां च कमण्डलुम् ।

यथासंभवमेव स्यात् क्रियामेतां न लोपयेत् ।
मालागणं विधायेत्थमभ्युक्ष्य हिमवारिणा ॥ ८४ ॥

स्वर्णपात्रेषु विन्यस्य सितैः सूत्रैर्नवाम्बरैः ।
पिधाय चक्रमुद्रां च कृत्वास्त्रेणाभिपूज्य च ॥ ८५ ॥

चक्राब्जपूर्वभागे तु पञ्चभिः शालिभारकैः ।
*भूपुरं(?)* कल्पयित्वैव तदूर्ध्वे नववाससा ॥ ८६ ॥

आस्तृते तण्डुलान् न्यस्य भारद्वयमितानपि ।
तदूर्ध्वे वाससास्तीर्णे तिलभारान् विनिक्षिपेत् ॥ ८७ ॥

चतुरश्रं विधायाथ तिलैस्तस्योपरि न्यसेत् ।
पुष्पपात्राणि सर्वाणि संवेष्ट्य च नवाम्बरैः ॥ ८८ ॥

गुरुः स्नातः शुचिः स्रग्वी नवसूत्राम्बरद्वयः ।
चन्दनेन विलिप्ताङ्गो हिमवार्याप्लुतेन च ॥ ८९ ॥

हारकेयूरकटककुण्डलाद्यैरलंकृतः ।
सोत्तरीयः सितोष्णीषः स्वर्णयज्ञोपवीतिमा(तवा?)न् ॥ ९० ॥

सपवित्रः साङ्गुलीयो रत्नमुद्राविभूषितः ।
श्वेतमृत्स्नाविरचितैरूर्ध्वपुण्ड्रैरलंकृतः ॥ ९१ ॥

केशवाद्याख्यसंयुक्तैर्देशिकैर्द्विजसत्तमैः ।
यजमानेन सहितः ऋत्विग्भिर्भूषितैर्वरैः ॥ ९२ ॥

धामान्तः संप्रविश्यैव देवं विज्ञापयेत्ततः ।
प्रणम्य दण्डवद् भूमौ कृताञ्जलिपुटः स्थितः ॥ ९३ ॥

भगवन् आर्तिहरण भक्तानां पुरुषोत्तम ।
कह्लारकुसुमैर्देव त्वद्धितैरर्चयाम्यहम् ॥ ९४ ॥

*दयामपि(?)*च सर्वेश तदनुज्ञातुमर्हसि ।
विडम्बनानि मे देव क्षान्त्वा पूजां जुषस्व मे ॥ ९५ ॥

---

89–(b) ABKM °क्ष्मा° for °त्रा°
94–(d) ABKM °द्द° for °द्धि°

इति विज्ञाप्य लक्ष्मीशं सविशेषं सभाज्य च ।
निवेद्य च हविः कृत्स्नं पुण्याहं वाचयेत्ततः ॥ ९६ ॥

निष्कैस्तु दशभिः कुर्यात् कौतुकं ध्रुवविग्रहे ।
त्रिभिर्निष्कैः सुवर्णस्य बिम्बे कल्याणसंज्ञिते ॥ ९७ ॥

कौतुकं दक्षिणकरे बध्वा देव्योर्गुरोरपि ।
प्रत्येकं निष्कमानेन कौतुकानि विधाय वै ॥ ९८ ॥

करेषु बध्वा च पुनस्तथा देवं प्रणम्य च ।
आरोप्य शिबिकां नीत्वा सर्वाभरणभूषितम् ॥ ९९ ॥

देवं मण्डपमासाद्य पूर्ववद्वस्त्रभूषितम् ।
स्वनुलिप्तं सुधाचूर्णविचित्रिततलं तथा ॥ १०० ॥

वितानध्वजमुक्तास्रग्भूषितोर्ध्वप्रदेशकम् ।
कह्लारमालसंवीतस्थूणागणविराजितम् ॥ १०१ ॥

प्रलम्बिताभिः सर्वत्र कह्लारस्रग्भिरुज्ज्वलम् ।
कह्लारपुष्परचितविमानवरशोभितम् ॥ १०२ ॥

चतुर्षु द्वारदेशेषु विनिवेशिततोरणम् ।
प्रतितोरणसंक्लृप्तसतत्स्रक्चन्दनमालिकम् ॥ १०३ ॥

तस्मिन् यानादवारोप्य सिंहपादाष्टकोज्ज्वले ।
कह्लारपुष्परचितकल्पद्रुमविभूषिते ॥ १०४ ॥

---

97–(ab) ABM. om.

100–(a) BK याग °for देवम्

101–(a) My. °भिः for स्रग्°

103–(c) My. °क्षि° for क्लृ°

104–(d) ABM दाम for द्रुम

K· शोभिते for भूषिते

लम्बमानाभिरभितः कह्लारस्रग्भिरुज्ज्वले ।
विष्टरे विनिवेश्याथ देवं चात्र सभाजयेत् ॥ १०५ ॥

आगत्य देशिकवरः पूर्वमेवात्र मण्डपे ।
मण्डलं कारयेद्विद्वान् ऋत्विग्भिः सहितो मुने ॥ १०६ ॥

चक्राब्जं स्वस्तिकं वाथ भद्रकं वा द्विजोत्तम ।
मण्डलस्य बहिः कुर्यादैशान्ये धान्यसंचये(यम् ?) ॥ १०७ ॥

स्थापयेच्च महाकुम्भं सूत्रवेष्टितमुत्तमम् ।
क्षौमयुग्मेन संवीतं सूक्ष्मेन सदशेन च ॥ १०८ ॥

नवरत्नानि तन्मध्ये निक्षिप्य शुचिवारिणा ।
पूरयेच्चन्दनादीनां गन्धानां चापि संचयम् ॥ १०९ ॥

तत्तोये विन्यसेद्विद्वान् कुश(शान् ?) कूर्चं च विन्यसेत् ।
करकं चापि संवेष्ट्य पूरयित्वा सरत्नकम् ॥ ११० ॥

कूर्चं च विन्यसेन्मन्त्री कुम्भं दक्षिणतो न्यसेत् ।
एवं विधायाष्टकुम्भान् मण्डलस्याष्टदिक्ष्वपि ॥ १११ ॥

स्थापयित्वाग्निकुण्डं च कुर्यादुत्तरतो द्विज ।
परितो द्वारपार्श्वेषु कुम्भानेवं विधाय च ॥ ११२ ॥

कुम्भानष्टौ च विन्यस्य सर्वान् कुम्भांश्चतुर्दिशि ।
संवेष्ट्य वस्त्रयुग्मेन वेष्टयित्वा सरत्नकान् ॥ ११३ ॥

सकूर्चान् मध्यनिक्षिप्तसौवर्णाष्टमहायुधान् ।
कृत्वा सर्वेषु कुम्भेषु महाश्वत्थसमुद्भवान् ॥ ११४ ॥

---

105-(b) ABM कुसुमैर्द्विज for ° स्रग्भिरुज्ज्वले
-(c) K °श्यैव for °श्याथ
-(d) ABM नेतृसभाजनम् for चात्र समाजयेत्
107-(c) K °टप° for °डल°
109-(d) K °दीनां विकर्दमैः for °नां चापि संचयम्

पल्लवानपि विन्यस्य कलशान् स्थापयेत्ततः ।
अष्टोत्तरशतं वाथ तथैकाशीतिमेव वा ॥ ११५ ॥

धान्यराशिषु विन्यस्य शास्त्रोक्तेनैव वर्त्मना ।
सकूर्चान् सापिधानांश्च पूरितान् गन्धवारिभिः ॥ ११६ ॥

छादयित्वैव वासोभिः शयनं कल्पयेत् पुनः ।
चतुरश्रे तु भूभागे गोमयाम्भोविलेपिते ॥ ११७ ॥

चूर्णैः सुधामयैः सूक्ष्मैर्विचित्रिततलोदरे ।
दशभारेण शालीनां चतुरश्रं प्रकल्प्य च ॥ ११८ ॥

तस्योपरिष्टादास्तीर्य सुशुभं वसनं नवम् ।
तस्योपरि च विन्यस्य शालितुल्यप्रमाणकान् ॥ ११९ ॥

तण्डुलांश्च तदूर्ध्वं(र्ध्वे ?) तु तस्य(?) विस्तारयेत् पटम् ।
तिलानपि च तन्मध्ये निक्षिपेत् पूर्वसंमितान् ॥ १२० ॥

क्षौमेणाच्छाद्य तान् पश्चादुपरिष्टात् कृतान(न्य ?)पि ।
विचित्राणि सुसूत्राणि वासांस्यास्तीर्य चोपरि ॥ १२१ ॥

मूर्ध्नोपधानं विन्यस्य पादयोरपि पार्श्वयोः ।
पाणिपादविनिक्षेपयोग्यानि मृदुतूलकैः ॥ १२२ ॥

कल्पितान्युपधानानि विन्यस्य च तदूर्ध्वतः ।
प्रच्छाद्य सूक्ष्मवसनैर्दिक्ष्वष्टस्वष्टकुम्भकान् ॥ १२३ ॥

स्थापयित्वा च पूर्वोक्तविधानेन गुरूत्तमः ।
परितः स्थापयित्वा च मङ्गलाङ्कुरपालिकाः ॥ १२४ ॥

धूपयेत् परितो धूपैश्चन्दनैश्चागरूत्तमैः ।
मुद्गान् माषांस्तिलांश्चैव गोधूमान् सकुलुत्थकान् ॥ १२५ ॥

---

120–(a) ABM My. °लानधिकानूर्ध्वम् for °लांश्च तदूर्ध्वं(र्ध्वे ?)तु
121–(b) K °च्च तानपि for °त्कृतान(न्य ?)पि
–(c) K °क्ष्मा° for °त्रा°

निष्पावान् राजमाषांश्च सर्षपान् यवसंयुतान् ।
व्रीहीनपि च विन्यस्य प्रत्येकं शिवसंमितान् ॥ १२६ ॥

फलानि कदलीनां च पनसानां च काश्यप ।
चूतानां नालिकेराणां लिकुचानां च सत्तम ॥ १२७ ॥

निधाय मातुलुङ्गानां क्रमुकाणां फलान्यपि ।
ताम्बूलदलपूगं च हरिद्राः सरसा अपि ॥ १२८ ॥

मङ्गलान्यष्ट परितः श्रीवत्सं वनमालिकाम् ।
मत्स्ययुग्मं पूर्णकुम्भं स्वस्तिकं दर्पणं तथा ॥ १२९ ॥

शङ्खं चक्रं च निष्केण स्वर्णस्य च पृथक् पृथक् ।
कारयित्वा च संस्थाप्य देवं विज्ञाप्य देशिकः ॥ १३० ॥

आसीनो देवपुरतः कृत्वाङ्गन्यासपूर्वकम् ।
अर्घ्यादीनां च पात्राणां स्थापनं च विधाय च ॥ १३१ ॥

कलशानर्चयित्वा च कुम्भसंनिहितं हरिम् ।
आराध्य मण्डलस्थं च कुण्डेऽग्निं विनिवेश्य च ॥ १३२ ॥

देवं संपूज्य विधिवन्मन्त्रासनपुरस्क्रियाम् ।
समर्प्य स्नानवेद्यां(दिं ?)च देवमभ्यास्य पूजनम् ॥ १३३ ॥

विधाय च क्रमाद्देवं स्नापयेत् कलशोदकैः ।
सहस्रधारापयसाप्यभिषिच्य विधाय च ॥ १३४ ॥

नीराजनक्रियां चैवमलंकारासनं नयेत् ।
भूषयित्वा च या(मा ?)त्रान्तं संपूज्य च यथाविधि ॥ १३५ ॥

भोज्यविष्टरगं देवं सभाज्यार्घ्यादिना ततः ।
मधुपर्कं निवेद्याथ ताम्बूलं विनिवेद्य च ॥ १३६ ॥

---

126–(a) ABM ऋजु° for राज°

132–(c) ABM °प° for °ल°
My. °लं चक्र° for °लस्थं च

133–(b) K मन्त्रन्यासपुरःसरम् ।
–(c) K °र्च्य for °र्प्य

सवत्सं धेनुयुगलं स्रग्भिश्च समलंकृतम् ।
हेमसंकल्पितखुरं शृङ्गवेष्टितमर्चितम् ॥ १३७ ॥

आचार्याय प्रदायाथ दत्वा धान्याष्टकं ततः ।
कुम्भमण्डलबिम्बेषु पञ्चवर्णान्नसंचयम् ॥ १३८ ॥

निवेद्य लेह्यपेयानि विनिवेद्य महाहविः ।
अपूपसहितं पश्चात् ताम्बूलं मुखवासनम् ॥ १३९ ॥

विनिवेद्य च सर्वेषां बेराणां च विशेषतः ।
देव्योश्च सर्वभोगाढ्यं विधाय च समाजनम् ॥ १४० ॥

तिलान् वस्त्रं सुवर्णं च सरत्नं तण्डुलानपि ।
ताम्बूलं घृतपात्रं च दत्वाचार्याय दक्षिणाम् ॥ १४१ ॥

ततः कुण्डसमीपं च गत्वावाह्य च पावके ।
देवं समिद्घृतचरुहोमं च सुविधाय च ॥ १४२ ॥

कह्लारकुसुमैराज्यसंपृक्तैर्जुहुयात्ततः ।
अष्टोत्तरसहस्रैश्च शान्तिहोमं विधाय च ॥ १४३ ॥

भस्मना तिलकं कृत्वा देवमुद्वास्य चाग्निगम् ।
गत्वा सकाशं देवस्य हवनं च समर्प्य च ॥ १४४ ॥

बलिं च दत्वा परितः कुमुदादिगणस्य च ।
संप्रार्थ्य देवदेवेशमानीय कुसुमस्रजः ॥ १४५ ॥

शङ्खकाहलतूर्यादिनादयुक्तं पृथक् पृथक् ।
कुम्भे च मण्डले चैव कुण्डे चैकैकशः स्रजः ॥ १४६ ॥

अधिवासाय विहिता विनिवेश्यौत्सवेऽपि च ।
बिम्बे देव्योश्च धामान्तर्गत्वा मूलादिकेष्वपि ॥ १४७ ॥

---

139–(c) ABM My, °पं वि° for °पस°

140–(c) ABM My. भोगसर्वा° for सर्वभोगा°

141–(d) ABM. च न्यायसादरम् for °चार्याय दक्षिणाम्

बिम्बेषु विनिवेश्याथ पुनर्गत्वा च मण्डपम् ।
देवं क्षमापयित्वा च शयने चाधिरोपयेत् ॥ १४८ ॥

तत्रस्थस्य च देवस्य देवीभ्यां सहितस्य च ।
धान्यपात्रादिसकलान् दर्शयित्वा पृथग्विधान् ॥ १४९ ॥

यथापुरं संनिवेश्य शयने चापि शाययेत् ।
श्रीभूमिसहितं देवं प्राङ्मूर्धानं द्विजोत्तम ॥ १५० ॥

कम्बलैः सितरक्ताद्यैर्देवाहैंरवकुण्ठ्य च ।
दिक्ष्वष्टासु स्थापयित्वा हेतीश्चक्रादिकाः पृथक् ॥ १५१ ॥

यजमानेन सहितो जाग्रदेव नयेन्निशाम् ।
स्तोत्रैश्च वेदघोषैश्च गीतैर्नृत्तैश्च देशिकः ॥ १५२ ॥

प्रभाते गुरुरुत्थाय स्नात्वा नित्यविधिं द्विज ।
समापय्य ततो गत्वा देवपार्श्वं च देशिकः ॥ १५३ ॥

प्रणम्य देवमुत्थाप्य विष्टरे चोपवेश्य च ।
कुम्भमण्डलकुण्डानामर्चनं सुविधाय च ॥ १५४ ॥

अर्घ्यादिमधुपर्कान्तं देवं च स्नानवेदिकाम् ।
अधिरोप्य ततः कुम्भैः स्नापयित्वाधमोत्तमैः ॥ १५५ ॥

अलंकृत्य यथापूर्वं विष्टरे विनिवेश्य च ।
अर्चयित्वा यथापूर्वं हवींषि विनिवेद्य च ॥ १५६ ॥

महाहविश्च दशभिस्तण्डुलानां कृतं तथा ।
भारैः सर्वफलोपेतैः सर्वव्यञ्जनसंयुतैः ॥ १५७ ॥

---

148–(c) My. विज्ञा° for क्षमा°
151–(b) ABM My. °राच्छाद्यैवा° for °दैवाहैंर°
152–(b) ABM My. °गरेण for °ग्रदेव
155–(a) ABM अर्घ्यादीनि निवेद्यान्तम्
K दीपपर्यन्तम् for मधुपर्कान्तम्
157–(b) ABKM ° तेन च for °तं तथा
–(d) My. °तैः for °तम्

प्लुतैर्घृतेन गव्येन गालितेन शुभेन च ।
अपूपपृथुकाद्यैश्च खाद्यवर्गैः सुसंस्कृतैः ॥ १५८ ॥

निवेदयित्वा बिम्बानां ध्रुवादीनां च सत्तम ।
अग्नौ च हुत्वा विधिवत् समिधः सप्त देशिकः ॥ १५९ ॥

पूर्णामपि विधायाथ देवाय विनिवेद्य च ।
समये शोभने प्राप्ते यजमानशुभावहे ॥ १६० ॥

अर्चयित्वा यथाकुम्भं कुण्डमण्डलगं हरिम् ।
*बहिर्मि*(वह्निम?)ध्ये स्थितं देवं बिम्बस्थमपि तं प्रभुम् ॥ १६१ ॥

अर्चयित्वा विधानेन द्वारतोरणपूर्वकम् ।
कुम्भस्य कल्पिता मालाः सकला विनिवेश्य च ॥ १६२ ॥

मण्डलस्य च कुम्भस्य मालाः सर्वा द्विजोत्तम ।
कल्याणकौतुकं चैव परिभूष्य विधाय च ॥ १६३ ॥

बलिपीठावसानं च भूषयित्वा समन्ततः ।
प्रासादं चापि तत्संस्थं देववृन्दं च देशिकः ॥ १६४ ॥

पवित्रैरिव मालाभिः परिभूष्य समन्ततः ।
कुमुदादिगणं सर्वमिन्द्रादीनपि सर्वतः ॥ १६५ ॥

तर्पयित्वा बहुविधैर्बलिभिर्वास्तुदेवताः ।
धान्यपात्राणि सर्वाणि मङ्गलानि तथाष्ट च ॥ १६६ ॥

फलानि च समस्तानि ताम्बूलीपूगिकाश्च ताः ।
देवाय दर्शयित्वा तत्सकलं देशिकः स्वयम् ॥ १६७ ॥

---

158–(a) ABK °तं घृ° M. °तघृ° for °तैर्घृ°
–(b) My. °भोदकैः for °भेन च

160–(d) ABM My. नः शुभान्वितः for °नशुभावहे

162–(d) ABKM °द्य for °श्य

156–(b) ABM °हु° for °लि°

शयनादि समस्तं च गृह्णीयात् स्वयमेव तत् ।
कुम्भमण्डलकुण्डादिसंस्थितं देवतागणम् ॥ १६८ ॥

उद्वास्य पुष्पयागोक्तविधिना कुम्भपूर्वकम् ।
वाहने देवदेवेशं रथादावधिरोप्य तम् ॥ १६९ ॥

ग्रामं वा धाम वा सर्वं परिभ्राम्य प्रदक्षिणम् ।
गर्भगेहान्तरं नीत्वा देवं कुम्भस्थवारिणा ॥ १७० ॥

प्रोक्षयित्वा ततस्तत्र देवं सम्यङ्निवेश्य च ।
संप्रार्थ्य देवदेवेशं यजमानेन संयुतः ॥ १७१ ॥

गृहाण देवदेवेश कह्लारकुसुमैः कृताम् ।
त्वद्दत्तैर्भोगनिचयैः संपूर्णां सर्वकामदाम् ॥ १७२ ॥

इति विज्ञाप्य देवेशं प्रणिपत्य क्षमापयेत् ।
तस्मिन् काले च गुरवे यजमानस्तु दक्षिणाम् ॥ १७३ ॥

*दद्यान्निष्कशतं स्वर्णमितं*(?) यद्वा तदर्धकम् ।
पशून् गृहाणि ग्रामांश्च वस्त्राणि विविधान्यपि ॥ १७४ ॥

अन्येभ्यश्चापि ऋत्विग्भ्यः सहकारिजनाय च ।
तत्तत्कार्यानुरूपेण प्रदद्याद्दक्षिणामपि ॥ १७५ ॥

गायकेभ्यो नर्तकेभ्यो वेदविद्भ्यश्च सर्वतः ।
वादकेभ्यश्च तूर्याणामुपकारिभ्य एव च ॥ १७६ ॥

संप्रीणनार्थं निष्काणि वस्त्राणि विविधान्यपि ।
प्रदापयेद्यथाशक्ति वित्तशाठ्यं न कारयेत् ॥ १७७ ॥

प्रभातायां रजन्यां च पूजाया अवसानके ।
अपनीय च माल्यानि वैष्णवेभ्यः प्रदापयेत् ॥ १७८ ॥

---

174-(b) KMy. °ताम् for °तम्
176-(c) ABM का° for तू°
-(d) K. °वासिजनाय for °कारिभ्य एव
178-(b) ABM My. °वसरे सति for अवसानके

ये धारयन्ति शिरसा देवभुक्तोज्झितानि तु ।
माल्यानि तानि ते सर्वे दुष्कृतं सप्तजन्मजम् ॥ १७९ ॥

अवधूय प्रपद्यन्ते विष्णुलोकं पुनर्नराः ।
यः कारयति विप्रेन्द्र पूजामेतां मधुद्विषः ॥ १८० ॥

अकिंचनोऽपि लभते पृथ्वीराज्यमकण्टकम् ।
भुक्त्वा च विविधान् भोगानिह लोके सुदुर्लभान् ॥ १८१ ॥

गजाश्वरथनागा(?) ढ्यान् पुत्रपौत्रसमन्वितान् ।
यशसा भुवनं सर्वं धवलीकृत्य मानवः ॥ १८२ ॥

पितॄनपि समुत्तार्य दश पूर्वान् दशावरान् ।
देहान्ते परमं धाम प्राप्नोत्यपुनरागतिम् ॥ १८३ ॥

आचार्यमपि तं देवभुक्तोच्छिष्टस्रगादिभिः ।
अलंकृत्य गजाश्वादियानमारोप्य चाग्रतः ॥ १८४ ॥

भेरीकाहलशङ्खादिवाद्यघोषपुरःसरम् ।
वेदविद्भिर्द्विजश्रेष्ठैः सेव्यमानं समन्ततः ॥ १८५ ॥

छत्रचामरसंयुक्तं कृत्वा ग्रामप्रदक्षिणम् ।
प्रवेशयेत् स्वकं गेहं सर्वमङ्गलसंयुतम् ॥ १८६ ॥

इति पञ्चरात्रे महोपनिषदि विश्वामित्रसंहितायां
कह्लारकुसुमारोपणं (णविधिः?) नाम पञ्चविंशोऽध्यायः ॥



# षड्विंशोऽध्यायः

विश्वामित्रः—

दमनारोपणविधिं वक्ष्यामि द्विजसत्तम ।
यदनुष्ठानतो विप्र ऐहिकामुष्मिकं फलम् ॥ १ ॥

अवाप्य चान्ते परमं पदमाप्नोति मानवः ।
चैत्रे मासे तु वैशाखे सितपक्षे विशेषतः ॥ २ ॥

द्वादश्यां पौर्णमास्यां च दमनीदलपूजनम् ।
कर्तव्यं तद् द्विजश्रेष्ठ तत्प्रकारोऽद्य वक्ष्यते ॥ ३ ॥

संकल्पितदिनात्पूर्वं नवमे सप्तमेऽपि वा ।
पञ्चमे वा तृतीये वा दिवसेऽङ्कुररोपणम् ॥ ४ ॥

कारयित्वा च पूर्वोक्तविधानेन महामुने ।
एकादश्यां प्रभातेऽथ सान्ध्यं कर्म समाप्य च ॥ ५ ॥

स्नातः शुक्लाम्बरधरः सर्वाभरणभूषितः ।
पवित्रितकरः शुक्लविलेपनविभूषितः ॥ ६ ॥

गत्वोद्यानं सहर्त्विग्भिर्यजमानेन संयुतः ।
गत्वा दमनवाटीं तु तस्याः पश्चिमतो मुने ॥ ७ ॥

चतुःस्तम्भां प्रपां कृत्वा वितानेन पिनघ्य(ह्य ?) च ।
संवेष्ट्य दर्भमालां च तस्याधो वेदिकां ततः ॥ ८ ॥

चतुरश्रं कल्पयित्वा गोमयेनोपलिप्य च ।
तस्योपरि विनिक्षिप्य व्रीहिभारचतुष्टयम् ॥ ९ ॥

आस्तीर्य तस्योपरि च पटमास्तीर्य तण्डुलान् ।
तदर्धानथ विस्तीर्य तस्योपर्यम्बरोर्ध्वतः ॥ १० ॥

---

6–(b) My. °र्वभूषण for °र्वाभरण

7–(a) My. °त्वागारम् for °त्वोद्यानम्

8–(b) ABM My. °नमपि बध्य for °नेन पिनध्य(ह्य ?)

तिलांस्तदर्धान् विन्यस्य तदूर्ध्वं(र्ध्वे ?) विन्यसेद् घटम् ।
तन्तुवेष्टितसर्वाङ्गं विन्यस्तनवरत्नकम् ॥ ११ ॥

क्षौमयुग्मेन संवेष्ट्य कुशकूर्चं तु विन्यसेत् ।
तादृग्विधं च करकं तस्य दक्षिणतो न्यसेत् ॥ १२ ॥

कुम्भाष्टकं च विन्यस्य तस्य दिक्ष्वष्टसु क्रमात् ।
कुम्भे प्रद्युम्नमभ्यर्च्य करके च सुदर्शनम् ॥ १३ ॥

कुम्भाष्टके च परितः शक्रादीनर्चयेत् क्रमात् ।
पायसान्नं निवेद्याथ चोत्तरे हव्यवाहनम् ॥ १४ ॥

आधायाज्येन हुत्वाथ चाष्टोत्तरशताहुतीः ।
प्रद्युम्नेनैव मन्त्रेण पश्चात् क्षेत्रेशमर्चयेत् ॥ १५ ॥

पायसान्नेन च बलिं दिक्ष्वष्टसु विनिक्षिपेत् ।
आचार्यो मूर्तिपैः सार्धं मनुं प्रद्युम्नमुच्चरन् ॥ १६ ॥

लूत्वा दमनपत्राणि स्वर्णपात्रेषु निक्षिपेत् ।
तानि पत्राणि कुम्भस्य पुन(रः) संस्थाप्य भूतले ॥ १७ ॥

तदम्भसा च संप्रोक्ष्य वाहयित्वा द्विजोत्तमैः ।
उच्चरञ्छाकुनं सूक्तं बह्वृचैर्द्विजपुंगव ॥ १८ ॥

अन्यैरपि च विप्राग्र्यैः स्वशाखामुखराननैः ।
संयुतस्तूर्यघोषेण बधिरीकृत्य दिग्वधूः ॥ १९ ॥

छत्रचामरकेतूनां संघैराच्छाद्य चाम्बरम् ।
सर्वमङ्गलसंयुक्तं प्रविश्य सदनं हरेः ॥ २० ॥

देवस्य(वाय ?) दर्शयित्वा च पुष्पमण्डपमानयेत् ।
शुचिभिर्द्विजवर्यैश्च निपुणैर्मालिकाविधौ ॥ २१ ॥

---

13–(b) AM. दिक्षु यथाक्रमम् for दिक्ष्वष्टसु क्रमात्
BK दिक्ष्वष्टसु यथाक्रमम् ।

21–(b) ABM पुनर् My. पूर्वं for पुष्प

कह्लारवत्प्रमाणेन कल्पयेन्मालिकागणम् ।
उत्तमादिक्रमेणैव तत्तद्बेरानुसारतः ॥ २२ ॥

कुम्भमण्डलकुण्डानां स्थौल्यं हस्तप्रमाणकम् ।
चण्डादीनामपि तथा तार्क्ष्यसेनेशयोरपि ॥ २३ ॥

कह्लारदामवद्दैर्घ्यं स्थौल्यं हस्तप्रमाणकम् ।
तोरणानां च सर्वेषां *दमनीदलमालया*(?) ॥ २४ ॥

कारयेन्मध्यतो लम्बां शुभां दमनमालिकाम् ।
वितानं परितो मालां लम्बयेद्दमनीं शुभाम् ॥ २५ ॥

मन्दिरं मण्डपं चैव वेष्टयेद्दमनीस्रजा ।
दमनीदामभिः कुर्याद्विमानमपि मण्डपम् ॥ २६ ॥

स्थूणादमनमालाभिर्वेष्टयेत्तासु लम्बयेत् (?) ।
मण्डपं परितः कुर्यादुद्यानमिव पूर्ववत् ॥ २७ ॥

मण्डपे मण्डलं कुर्याद्यथापूर्वं द्विजोत्तम ।
तस्यैशान्ये च दिग्भागे कुम्भं धान्यस्य संचये ॥ २८ ॥

करकं च यथापूर्वं वेष्टितं तन्तुभिः शुभैः ।
वेष्टितं क्षौमयुग्मेन निक्षिप्तनवरत्नकम् ॥ २९ ॥

घटाष्टकं च विन्यस्य दिक्ष्वष्टास्वपि तद्विधम् ।
मण्डलस्यापि परितः स्थापयित्वा घटाष्टकम् ॥ ३० ॥

सर्वं कुर्यात् कुम्भसंघं महाघटविधानतः ।
चूताश्वत्थदलाढ्यं च विदधीत द्विजोत्तम ॥ ३१ ॥

शयनं देवदेवस्य कल्पयित्वा च पूर्ववत् ।
शालीनां भारदशकं पूर्वमास्तीर्य भूतले ॥ ३२ ॥

आच्छाद्याभिनवैः सूक्ष्मैः सदशैरंशुकैरपि ।
तण्डुलैरपि तस्योर्ध्वे तन्मानैरपि कल्प्य च ॥ ३३ ॥

---

22–(a) K. °रोघ for °रवत्

25–(b) My: वन्दन for दमन

तिलैस्तदुपरिष्टाच्च तत्संख्यातै(?)र्द्विजोत्तम ।
कल्पयित्वा च शयनं क्षौमानास्तीर्य चोपरि ॥ ३४ ॥

कम्बलानुपरिष्टाच्च विचित्रांस्तस्य चोपरि ।
आच्छाद्य तत्र परितो यथापूर्वं घटाष्टकम् ॥ ३५ ॥

सतन्तुकं सकौशेयं सरत्नं च सपल्लवम् ।
सकूर्चं धान्यपीठस्थं यथापूर्वमुदाहृतम् ॥ ३६ ॥

पात्रेष्वष्टसु धान्यानि प्रत्येकं भारसंख्यया ।
स्थापयित्वा च कदलीपनसाम्रफलान्यपि ॥ ३७ ॥

नालिकेरी(?)मातुलुङ्गपूगीफलयुतान्यपि ।
ताम्बूल(लं ?) पूगिकाभिश्च घटेषु विनिवेश्य च ॥ ३८ ॥

आर्द्रा हरिद्राः पात्रस्थं मङ्गलाष्टकमेव च ।
प्रत्येकं निष्कमानेन विहितं कनकेन च ॥ ३९ ॥

मण्डलोत्तरदिग्भागे वह्निकुण्डं विधाय च ।
समेखलं सयोनिं च कुम्भैरष्टाभिरावृतम् ॥ ४० ॥

सतन्तुभिश्च सक्षौमैरन्तर्विन्यस्तरत्नकैः ।
सपल्लवैः सकूर्चैश्च सविता(सापिधा ?)नैः समन्ततः ॥ ४१ ॥

चतुर्षु द्वारदेशेषु मण्डपस्य च पार्श्वयोः ।
घटानष्टौ यथापूर्वं तन्तुभिः संवृतानपि ॥ ४२ ॥

प्रत्येकं वस्त्रयुग्मेन वेष्टयित्वा सरत्नकान् ।
स्थापयेत् कलशान् सम्यक् पूर्वस्यां दिशि काश्यप ॥ ४३ ॥

प्रत्येकं धान्यपीठेषु शतमष्टोत्तरं तु वा ।
एकाशीतिमथैकोनपञ्चाशतमथापि वा ॥ ४४ ॥

पूरितान् गन्धतोयेन सकूर्चान् सापिधानकान् ।
सूक्ष्मैर्नवैश्च सुश्लक्ष्णैरम्बरैः कलशानपि ॥ ४५ ॥

---

38-(d) My. प° for घ°

छादयित्वा च सद्रव्यान् यथापूर्वमुदीरितम् ।
वासांस्यप्यहतान्यत्र कुम्भादिषु महामते ॥ ४६ ॥

नानाकौशेयवल्कानि (?) यदि संप्रोक्ष्य वेष्टयेत् ।
फलानि यदि संक्षाल्य रोमाण्यपि परीक्ष्य च ॥ ४७ ॥

आतपे शोषयित्वा च विनियुञ्ज्याद् द्विजोत्तम ।
दमनीमालिकासंघं पात्रेषु विनिवेश्य च ॥ ४८ ॥

मूर्तिपैरानयित्वा(?)च धान्योपरि निवेश्य च ।
आचार्यो मूर्तिपयुतः स्नातः शुक्लाम्बरावृतः ॥ ४९ ॥

सुगन्धिना चन्दनेन विलिप्ताङ्गः सुभूषितः ।
धृतोर्ध्वपुण्ड्रः सोष्णीषः श्वेतमाल्यपरिष्कृतः ॥ ५० ॥

सोत्तरीयः पवित्राढ्यः साङ्गुलीयकभूषणः ।
लाञ्छितश्चक्रशङ्खाद्यैर्दिव्यैरायुधपञ्चकैः ॥ ५१ ॥

यजमानेन सहितः सायाह्ने मन्दिरान्तरम् ।
प्रविश्य देवं विज्ञाप्य बिम्बमौत्सवमादरात् ॥ ५२ ॥

आरोप्य शिबिकां धाम परिभ्राम्य प्रदक्षिणम् ।
आनीय मण्डपं देवमारोप्योत्तमविष्टरे ॥ ५३ ॥

सभाजयित्वा चार्घ्याद्यैः पुण्याहं वाचयेत्ततः ।
देवस्य कौतुकं हेमनिष्केण रचितं शुभम् ॥ ५४ ॥

देव्योरपि तदर्धेन पृथङ्निर्माय काश्यप ।
आचार्यस्यार्धनिष्केण रचितं बन्धयेत्ततः ॥ ५५ ॥

क्रमेणानेन बध्नीयात् कौतुकानां चतुष्टयम् ।
द्वारदैवतपूर्वं च पूजां निर्वर्त्य देशिकः ॥ ५६ ॥

---

51-(a) My. °पवीतः for °त्तरीयः
53-(a) ABMMy. °कायां च for ° कां धाम
55-(c) M °थ for °र्धं

कलशानर्चयित्वा च निशाचूर्णघटं ततः ।
कलशोत्तरदिग्भागे ताण्डुलद्रोणमूर्धनि ॥ ५७ ॥

निहितं कूर्चसहितं मध्यवेष्टितवस्त्रकम् ।
तत्रावाह्य श्रियं देवीं समाराध्य विधाय च ॥ ५८ ॥

कुम्भान्तःस्थं जगन्नाथं नैवेद्यान्तं समर्च्य च ।
मण्डलेऽपि समाराध्य देवं लक्ष्मीपतिं प्रभुम् ॥ ५९ ॥

निवेद्य पायसं तस्मै कुण्डेऽग्निं संनिधाय च ।
गर्भाधानादिसंस्कारगणं सर्वं समाप्य च ॥ ६० ॥

देवं सभाज्य तदनु मन्त्रासनविधानतः ।
निवेद्य मधुपर्कं च वेदिं समधिरोप्य च ॥ ६१ ॥

तत्राप्याराध्य कलशैः स्नापयित्वा विधानतः ।
अलंकृत्य जगन्नाथं निवेद्यान्नं चतुर्विधम् ॥ ६२ ॥

मुखवाससमायुक्तं ताम्बूलं संनिवेद्य च ।
वह्निमध्यगतं देवमभ्यर्च्य विधिना ततः ॥ ६३ ॥

समिद्भिः सप्तभिर्हुत्वा दमनं घृतसंप्लुतम् ।
अष्टोत्तरसहस्रं च हुत्वा पूर्णां विधाय च ॥ ६४ ॥

देवेशमर्चयित्वा च हवनं विधिना कृतम् ।
इन्द्रादीनां च पुरतो बलिं दत्वाष्टदिक्ष्वपि ॥ ६५ ॥

अधिवासनमालां च कुम्भमण्डलयोरपि ।
सशक्तिकस्य देवस्य मूलबेरादिकस्य च ॥ ६६ ॥

एकैकां संनिवेश्याथ शयने च जगद्गुरुम् ।
शाययित्वा च संप्राश्य हुतशेषं चरुं ततः ॥ ६७ ॥

तदादिभिर्विनोदैश्च स्वाध्यायपठनैः सह ।
गेयनृत्तादिभिश्चैव जागरेण निशां नयेत् ॥ ६८ ॥

---

59-(d) K °वीम् for °वम् ; °मथ for पतिम्

ततः प्रभाते सुस्नातः परिधायांशुकं नवम् ।
यथापूर्वमलंकृत्य मण्डपान्तः प्रविश्य च ॥ ६९ ॥

कृत्वा न्यासादिसकलमर्घ्यादि परिकल्प्य च ।
द्वारेषु पूजनं कृत्वा तिष्ठन्नासीन एव वा ॥ ७० ॥

अर्चयित्वा च सकलान् कुम्भमण्डलगं विभुम् ।
आराध्य च निवेद्यान्तमग्निसंस्थं जगद्गुरुम् ॥ ७१ ॥

सभाजयित्वा देवं च संपूज्य स्नापयेत् क्रमात् ।
अलंकृत्य ततो देवं निवेद्य च महाहविः ॥ ७२ ॥

देव्योरपि निवेद्यान्नं पायसादि चतुर्विधम् ।
मूलबेरादिबिम्बेषु सविशेषं सभाजनम् ॥ ७३ ॥

विधाय च निवेद्यान्तं हुत्वा सप्तसमिद्गणम् ।
मुहूर्ते शोभने प्राप्ते यजमानसुखावहे ॥ ७४ ॥

कुम्भे च मण्डले चैव कुण्डे चार्चास्वपि द्विज ।
मूलादिषु समस्तेषु देव्योरपि पृथक् पृथक् ॥ ७५ ॥

प्रदाय दमनीमालां देवं विज्ञाप्य देशिकः ।
कुम्भमण्डलवह्निस्थं देवमुद्वास्य वै द्विज ॥ ७६ ॥

धान्यपात्राणि सर्वाणि मङ्गलाष्टकमेव च ।
फलानि च समस्तानि दर्शयित्वा च विष्णवे ॥ ७७ ॥

आचार्याय प्रदद्याच्च धान्यसंचयमेव च ।
क्षौमाणां निचयं सर्वमन्यच्चानीतमत्र च ॥ ७८ ॥

तत्सर्वं देशिकः कृत्वा चात्मसात् स्वगृहं नयेत् ।
देव(बेर ?)मुत्सवसंज्ञं च वाहने विनिवेश्य च ॥ ७९ ॥

---

71-(a) K कलशान् for सकलान्

74-(d) ABMMy. °नः सहायवान् for °नसुखावहे

सर्वालंकारसंयुक्तं परिभ्राम्य प्रदक्षिणम् ।
प्रवेशयेदालयान्तः स्वस्थाने विनिवेशयेत् ॥ ८० ॥

यजमानेन सहितः ऋत्विग्भिरपि देशिकः ।
प्रणम्य देवदेवस्य पादाब्जयुगलं द्विज ॥ ८१ ॥

गृहीत्वा पाणियुग्मेन देवं विज्ञापयेदिदम् ।
उत्सवं देवदेवेश दमनीदलकल्पितम् ॥ ८२ ॥

अस्मासु दयया देव गृहाण परमेश्वर ।
इति विज्ञापनं कृत्वा सर्वदेवाधिदैवतम् ॥ ८३ ॥

प्रसाद्य देवदेवेशं वर्धयेदेनमाशिषा ।
यजमानोऽपि गुरवे दक्षिणां प्रतिदापयेत् ॥ ८४ ॥

शतनिष्कं तदर्धं वा वासांसि विविधानि च ।
रत्नोर्मिकाः पशून् कामान् गृहाणि सुमहान्त्यपि ॥ ८५ ॥

क्षमापयेत् संप्रदाय ऋत्विग्भ्यश्च तदर्धकम् ।
परिचारकविप्राणामन्येषां सहकारिणाम् ॥ ८६ ॥

सदस्यानां सेवकानां गीतनृत्तरतात्मनाम् ।
भेर्यादिवादकानां च तत्तत्कर्मानुरूपतः ॥ ८७ ॥

प्रदापयेद्धनगणं वस्त्रौघं धान्यसंचयम् ।
वितीर्य भोजयेद्विद्वान् यथाशक्ति महामते ॥ ८८ ॥

कारयेत् प्रतिवर्षं यो दमनीपत्रपूजनम् ।
देवस्य वासुदेवस्य श्रद्धया परया युतः ॥ ८९ ॥

तस्य सिध्यन्ति सकलाः संपदस्तत्प्रसादतः ।
इह प्राप्य परामृद्धिं पितॄनुत्तार्य सर्वतः ॥ ९० ॥

---

80–(d) K My. स्वासने for स्वस्थाने

84–(b) ABM °व for °न°

88–(c) My. °की° for °ती°

पूर्वानप्यप(व ?)रान् सप्त स्वदेहस्य समन्ततः ।
प्राप्नुयाद्वैष्णवं धाम सर्वयोगीन्द्रदुर्लभम् ॥ ९१ ॥

इति पञ्चरात्रे महोपनिषदि विश्वामित्रसंहितायां
दमनारोपणविधिर्नाम षड्विंशोऽध्यायः ॥

---

## †सप्तविंशोऽध्यायः

विश्वामित्रः—

श्रृणु काश्यप सर्वेषां प्रायश्चित्तं च कर्मणाम् ।
यागकर्मसु सर्वेषु विहीनेषु द्विजर्षभ ॥ १ ॥

प्रायश्चित्तं विधातव्यमिति शास्त्रस्य निश्चयः ।
प्रासादनाशे संजाते कृत्वा बालालयं बुधः ॥ २ ॥

तत्र विन्यस्य कर्मार्चां कारयित्वा यथापुरम् ।
आलयं तत्र देवस्य प्रतिष्ठां संविधाय च ॥ ३ ॥

पुण्याहं कारयित्वाथ संप्रोक्ष्य च जगद्गुरुम् ।
स्नापयित्वोक्तमार्गेण ब्राह्मणान् भोजयेदपि ॥ ४ ॥

पीठविश्लेषणे जाते लाक्षासज्जरसं तथा ।
गुग्गुलुं कुरुविन्दं च गुलं(डं?) तैलं च गैरिकम् ॥ ५ ॥

अष्टभागाभिवृद्धैस्तु क्रमादेभिः सुवेष्टितैः ।
संश्लेष्य सुदृढं कृत्वा वालुकाभिश्च पूरयेत् ॥ ६ ॥

---

91-(a) My. सर्वान् पूर्वान् परान् for पूर्वानप्यप(व ?)रान्
-(d) K My. Add 27 verses after दुर्लभम् and before the colophon.
See Appendix—I for the full text.
Also see Appendix—II for a different version entitled विशाखोत्सवनिर्णयः wich appears as the 26th chapter.

Colophon :—K My. फलपूजा° for दमनारोपण.

†ABM Omit this chapter.

1-(d) My. °हृते° for °हीने°

सर्वाङ्गेषु च देवस्य चन्दनै*र्नवपन्तकैः *(?) ।
कर्पूरागरुकाश्मीरहिमाम्भोमिश्रितैर्द्विज ॥ ७ ॥

संलिप्य वेष्टयित्वा च नवक्षौमयुते(गे?)न च ।
पुण्याहवाचनं कृत्वा विधाय स्नपनं हरेः ॥ ८ ॥

स्वतन्त्रे चेद्दिशाहोमं कृत्वा होमं सभाज्य च ।
भोजयित्वा द्विजाग्र्यांश्च दक्षिणां दापयेदपि ॥ ९ ॥

विनष्टे मण्टपे कृत्वा मण्टपं तद्यथापुरम् ।
कारयित्वा च पुण्याहं स्नापयित्वा हरिं ततः ॥ १० ॥

हुत्वा च मूलमन्त्रेण शतमष्टाधिकं तथा ।
भोजयित्वा द्विजांस्तत्र दद्यात्तेभ्यश्च दक्षिणाम् ॥ ११ ॥

प्रासादद्वारभङ्गे वा संभवेऽयं (?) विधिर्भवेत् ।
वल्मीकदर्शनेनै(चै?)व प्रासादस्यान्तरे द्विज ॥ १२ ॥

आमूलात् खनयित्वा तं प्रदेशं पूरयेदपि ।
वल्मीकमृद्भिः शुद्धाभिः कारयेत् स्नपनादिकम् ॥ १३ ॥

आलयेऽशनिपाते च वह्निदाहे च पूर्ववत् ।
कारयित्वा प्रदेशं तं संप्रोक्ष्य स्नपनं तथा ॥ १४ ॥

कारयित्वा वैष्णवानां भोजनादीनि दापयेत् ।
नदीस्रोतःसमावेगात् पतिते धाम्नि काश्यप ॥ १५ ॥

वर्जयित्वा तु तं देशं शुभे देशे च मन्दिरम् ।
कारयित्वा प्रतिष्ठाप्य तत्र देवं श्रियः पतिम् ॥ १६ ॥

प्रतिष्ठोक्तेन विधिना शेषमन्यत् समाचरेत् ।
*प्रतिष्ठाहीनबेरस्य स्थापनं सार्वकालिकम्* (?) ॥ १७ ॥

---

7-(b) My. °र्णवपञ्च° for °र्णवपन्त°

9-(a) K च for चेत्

12-(a) K भागैक° for भङ्गे वा

15-(b) K °दिविधा भवेत् for °दीनि दापयेत्

-(d) My. °रितो for °तिते

*तत्पूर्वं ब्राह्मणविधिं गृहीत्वा स्थापयेदपि* (?) ।
कालातिपातशान्त्यर्थं हुत्वा चाष्टसहस्रकम् ॥ १८ ॥

नयनोन्मीलनादन्यत् कृत्वा संस्थापयेच्च तम् ।
प्रतिमायास्तु पतने जाते सद्यः समाचरेत् ॥ १९ ॥

कुण्डमण्डलहीने तु कारयेत् पुनरेव तत् ।
हुत्वा जितं त(ते?)मन्त्रेण शतमष्टाधिकं चरेत् ॥ २० ॥

महाध्वजविहीने तु चिह्ने वा पतितेऽपि वा ।
पतितं सम्यगादाय चिह्नं संत्यज्य देशिकः ॥ २१ ॥

पुनरन्यत् स्थापयित्वा हुनेद(?)ष्टसहस्रकम् ।
स्नपनादि यथापूर्वं शेषमन्यत् समाचरेत् ॥ २२ ॥

ध्वजतोरणहानौ तु पुनः कृत्वा तु तद्द्विकम् ।
पुण्याहवाचनस्नानप्रभृत्यन्यत् समाचरेत् ॥ २३ ॥

शूलस्थापनहीनं चेच्छूलं कुर्यात्पुनः स्थिरम् ।
रत्नन्यासविहीनं चेत् कृत्वा रत्नाधिवासनम् ॥ २४ ॥

कृत्वा च पीठमूले तु निक्षिप्य सुदृढं यथा ।
कारयित्वा च सुधया स्नपनादि समाचरेत् ॥ २५ ॥

अङ्कुरार्पणहीनं चेदङ्कुरानर्पयेत् पुनः ।
अप्ररूढं यदि त्याज्यं रक्ते श्यामे च वापयेत् ॥ २६ ॥

सर्वत्र स्नपनादीनि कारयेच्च विचक्षणः ।
अष्टमङ्गलहीनं चेत् कारयित्वा पुनर्द्विज ॥ २७ ॥

पुण्याहवाचनं कृत्वा प्रोक्षयेत् कुशवारिणा ।
समाराधनहीने तु कालमेकं मधुद्विषः ॥ २८ ॥

---

19-(d) K °मुद्धरेत् for °माचरेत्
21-(a) My. महद्ध्वज for महाध्वज
-(b) K च for वा

द्विगुणं कारयेद्धीमान् नैवेद्यावाहनादिकम् ।
द्विकालहानौ स्नपनं नवकुम्भैर्विधाय च ॥ २९ ॥

द्विगुणं पूजयेच्चैव हविरादि च कारयेत् ।
एकपूजनहानौ च दशभिः सप्तभिश्श(श्च ?)तम् ॥ ३० ॥

कलशैः स्नापयित्वा च हवनादि समाचरेत् ।
तदूर्ध्वं पञ्चदिवसपर्यन्तं पञ्चविंशतिम् ॥ ३१ ॥

कलशं स्थापयित्वा च स्नपनादीन् समाचरेत् ।
पुनर्दशाहपर्यन्तं पञ्चाशद्भिर्घटैर्द्विज ॥ ३२ ॥

देवेशं स्नापयित्वा च हवनादि समाचरेत् ।
तदूर्ध्वं मासपर्यन्तमेकाशीतिघटैर्द्विज ॥ ३३ ॥

विधाय स्नपनं शेषं यथापूर्वं समाचरेत् ।
मासषट्काधिके हीने समाराधनकर्मणि ॥ ३४ ॥

संप्रोक्षणं विधातव्यमिति शास्त्रस्य निश्चयः ।
अब्दत्रिद्वयहीने च प्रतिष्ठां कारयेद् द्विज ॥ ३५ ॥

अग्निकार्ये पुनर्हीने पुनः संस्कारमाचरेत् ।
हुत्वा चाष्टोत्तरशतं व्याहृतीभिर्घटैरपि ॥ ३६ ॥

नवभिः स्नापयेद्देवं शेषं पूर्ववदाचरेत् ।
उत्सवाग्नौ विरहिते सन्ध्यातिक्रमणेऽपि च ॥ ३७ ॥

पञ्चविंशद्घटजलैः(?) स्नापयित्वा हरिं प्रभुम् ।
पुण्याहवाचनादीनि यथापूर्वं समाचरेत् ॥ ३८ ॥

---

32-(d) My. °जः for °ज
34-(c) My. °दिकं for °धिके
35-(c) K °त्रयेत्र for त्रिद्वय°
37-(d) My. om.
38-(a) My. om.

सन्ध्यातिक्रमणेऽप्येष विधिः स्याद् द्विजपुंगव ।
अविनीते गुरौ सर्वं कर्म तेन न कारयेत् ॥ ३९ ॥

अन्यमानीय च गुरुं समीचीनं समाचरेत् ।
अज्ञानाद्यत्कृतं कर्म तद्गुरुश्च समाचरेत् ॥ ४० ॥

बलिप्रदानहानौ च बलिं कुर्याद्यथापुरम् ।
*अष्टोत्तरशतैर्होमैः*मूलमन्त्रेण कारयेत् ॥ ४१ ॥

एककालं बलेर्हानौ द्विगुणं च बलिं हरेत् ।
कुर्याच्च पूर्ववच्छेषमिति सन्तः प्रचक्षते ॥ ४२ ॥

विहीने स्रुक्स्रुवे(?)चैव स्रुक्स्रुवं(वौ ?) प्रविधाय च ।
होमस्नपनमुख्यानि यथापूर्वं तु कारयेत् ॥ ४३ ॥

रक्तस्त्रीदर्शने धाम्नि *खात्वा(?)तं देशमावसेः*(?) ।
सिकताभिश्च संपूर्य पञ्चगव्यैः समुक्ष्य च ॥ ४४ ॥

एकाशीतिघटस्नानं दिनानि त्रीणि पञ्च च ।
पुण्याहं च समाघोष्य भोजयेद् ब्राह्मणानपि ॥ ४५ ॥

दिने दिने च जुहुयादष्टोत्तरसहस्रकम् ।
चण्डालप्रभृतीनां च हीनानां दर्शने सति ॥ ४६ ॥

शुद्धाम्भसा कुशाग्रेण प्रोक्षयित्वा प्रभुं द्विज ।
हुनेद(?)ष्टोत्तरशतमष्टार्णेन द्विजोत्तम ॥ ४७ ॥

सूतिकाशौचयुक्तैश्चाप्यन्त्यजैः स्पर्शने सति ।
एकाशीतिघटैः स्नाप्य शेषं पूर्ववदाचरेत् ॥ ४८ ॥

चोरादिभिर्गजैर्वापि बिम्बोद्धारे कृते सति ।
पूर्ववत्कारयित्वा च प्रतिष्ठामपि सत्तम ॥ ४९ ॥

---

44-(b) K °धेः for °सेः

दिशाहोमं च मन्त्रस्य स्नानं त्यक्त्वा समाचरेत् ।
प्रतिष्ठोक्तक्रमाच्चैव(मेणैव ?) स्नपनादि समचरेत् ॥ ५० ॥

*संप्रोक्षणे विधिरयं प्रोक्तो द्विजवरात्मज (?)* ।
य इत्थमाचरेद्यस्तु(?) प्रायश्चित्तं समाहितः ॥ ५१ ॥

सर्वान् कामानिहावाप्य प्राप्नोत्यन्ते परं पदम् ।
इति ते सर्वमाख्यातं यन्मया ब्रह्मणो मुखात् ॥ ५२ ॥

श्रुतं तस्मात् समुद्धृत्य सारं संक्षेपतो मुने ।
पञ्चरात्रामृताम्भोधिं मथित्वा सारसंग्रहः ॥ ५३ ॥

प्रोक्तो मयायं तस्मात्त्वमेतच्छ्रुत्वावधार्य च ।
अनेन विधिना देवं प्रपन्नार्तिहरं हरिम् ॥ ५४ ॥

समाराधय देवं त्वं प्रायश्चित्तात्मनः पदम् ।
गुह्याद् गुह्यतमं म(त ?)न्त्रं सारात्सारतरं मुने ॥ ५५ ॥

सप्तविंशतिभिः प्रोक्तमध्यायैः कश्यपात्मज ।
विश्वामित्रीयनाम्नैतन्मयोक्तत्वात् प्रथां गतम् ॥ ५६ ॥

नाशिष्याय प्रदातव्यं न संसारनिवासिने ।
वैष्णवाय प्रदातव्यमुपसन्नाय धीमते ॥ ५७ ॥

इति श्रुत्वा मुनिश्रेष्ठः काश्यपः सुप्रसन्नधीः ।
प्रणम्य भगवन्तं तं विश्वामित्रं तपोनिधिम् ॥ ५८ ॥

कृताञ्जलिपुटो भूत्वा ध्यायन् नारायणं प्रभुम् ।
स्वमाश्रमं समासाद्य भक्तियुक्तेन चेतसा ॥ ५९ ॥

---

50–(c) K °क्रमं चैव for °क्रमाच्चैव (°मेणैव?)

51–(c) My. यन्मर्थं°(?) for य इत्थ°

54–(a) K कृतो for प्रोक्तो

57–(d) My. °प° °for °स°

त्यक्तान्यसर्वव्यासंगः वाङ्मनःकर्मभिः सदा ।
पञ्चकालरतो भूत्वा समाराध्य श्रियः पतिम् ॥ ६० ॥
अवाप्य (प?) परमं धाम यतो नावर्तते पुनः ॥

इति पञ्चरात्रे महोपनिषदि विश्वामित्रसंहितायां
प्रायश्चित्तविधिर्नाम सप्तविंशोऽध्यायः ॥

॥ हरिः ओम् ॥



# विश्वामित्रसंहिता

## CRITICAL NOTES

[ References are to verse numbers. ]

### CHAPTER No. 1

5–(ab) Are corrupt and unintelligible in all the Mss.

13–(a) All the readings appear obscure. Could it be as गोमयाक्तासु (?)

16–(c) Is corrupt and unintelligible in all the Mss.

–(d) Readings of all the Mss. appear obscure. Could it be as °माश्रिताभ्यर्णभूतले (?)

17–(b) Is not intelligible. Could it be as मुस्तासुरभितान्तरे (?)

39–(cd) Are not intelligible in all the Mss.

41–(d) Is not clear in all the Mss.

42–(ab) Are corrupt and not intelligible in all the Mss.

49–(a) Is not intelligible in all the Mss.

52–(b) All the Mss. read मेतमुदीरयम्, which is wrong. So we corrected it as °मेतदुदैरयम्.

59–(cd) Are not intelligible in all the Mss.

74–(ab) Are not clear in all the Mss. Could these be as एते निर्वाणफलदा इत्यप्यासीन्न° (?)

### CHAPTER No. 2

14–(cd) Are not intelligible in all the Mss.

15–(ab) Are not intelligible in all the Mss.

### CHAPTER No. 3

1–(c) Is corrupt in all the Mss. Could it be as किंयोनिर्वा किमाचारः (?)

22–(ab) ABKM read these after 19 ab and before 19 cd while Ks. & My. read after 21 cd and before 22 cd.

### CHAPTER No. 4

10–(d) Is not intelligible in all the Mss.

24–(cd) Are not intelligible in all the Mss.

29–(ab) Readings of all the Mss. are corrupt. Could these be as श्रियादयोऽथ देव्यस्तु श्रीवत्साद्दिव्यलाञ्छनात् (?) ।

## CHAPTER No. 5

9–(d) Is not intelligible in all the Mss.

## CHAPTER No. 6

34–(a) Is corrupt in all the Mss. Could it be as वर्णः शुक्लो भवेदस्य (?)

35–(b) Is not clear in all the Mss. Could it be as काश्यपात्री सकुम्भ जौ(?)

38–(a) Is not clear in all the Mss. Could it be as पृथिव्यन्तं व्युत्क्रमेण (?)

64 Is not intelligible in all the Mss.

## CHAPTER No. 7

26, 27. It appears that some of the verses dealing with अग्निप्राकारमन्त्र are missing, since these two verses are not giving the entire form of अग्निप्राकारमन्त्रः

35–(a) Word सातिदेश does not suit the context. Could it be as सादिदेव, which denotes 'आ' कार ?

45–(a) Is corrupt. Could it be as चतुर्षु साधितेष्वेषु (?)

54–65 Appear in My. only.

54 Not intelligible; has been retained unaltered.

56–(c) Is corrupt and appears obscure. Could it be सततं दिव्यगन्धादि (?)

60 Not intelligible; has been retained unaltered.

## CHAPTER No. 8

20–37 & 38–(abc) Appear in My. only.

47–(c) Not intelligible in all the Mss.; has been retainep unchanged.

48 & 49–(ab) Not clear in all the Mss.

53–(c) Not clear in all the Mss.

## CHAPTER No. 9

5–(ab) Appear unintelligible in all the Mss.

## CHAPTER No, 10

49–(cd) Readings of all the Mss. are not correct. Could it be as नाभिपर्यन्तमपां स्थानम् (?)

96–(a) Readings of all the Mss. are corrupt. Could it be as मण्डलं च क्रमाद्ध्येयम् (?)

97–(a) Readings of all the Mss. are corrupt. Could it be as दलद्वादशके ज्ञेया: (?)

107–(a) All the Mss. read देहविन्यासं which does not appear appropriate. Could it be as अङ्गविन्यासम् (?)

111–(c) Readings of all the Mss. appear obscure. Could it be as देवमर्घ्या° (?)

## CHAPTER No. 11

70–(a) Is not clear in all the Mss.

## CHAPTER No. 12

3 Is not intelligible in all the Mss.

7–(b) Is not clear for want of the object ; it may be reconstructed as बलिं तन्मूर्ध्नि विन्यसेत् (?)

20–(b) Word सुमुखं doesn't suit the context. Could it be as संमुखे (?)

23–(a) Metrical rule has not been followed here.

30–(d) Is corrupt in all the Mss. Could it be as पीतोष्णीषधरौ मुने (?)

37–(c) Word अजारुसं makes no sense. Could it be as अजारूढं (?)

## CHAPTER No. 13

1–(b) Is corrupt in all the Mss. Could it be as प्रभेदं विनियोजनम् । (?)

11–(cd) Are unintelligible in all the Mss ; have been retained unaltered.

26–(a) Is corrupt in all the Mss; has been retained unaltered.

38–(d) Is not clear in all the Mss.

39–(cd) Are not intelligible in all the Mss.

67–(a) Is not intelligible in all the Mss.; Could it be as इतरस्माद्यामुनस्य (?)

68–(ab) Are not intelligible in all the Mss.

69–(cd) Are corrupt in all the Mss. Could these be as ज्ञानमुद्रा विनिर्मुक्तकनिष्ठाङ्गुष्ठमूर्धनि । (?)

90–(cd) & 91–(ab) Are not intelligible in all the Mss.

94–(a) Is not intelligible in all the Mss.; Could it be as शाखा-संघस्य च पुनः (?)

95–(ab) Are not intelligible in all the Mss.

## CHAPTER No. 14

11–(c) Is corrupt in all the Mss. Could it be as पताका ध्वजदीपौ च (?)

64–(a) Is corrupt in all the Mss.; has been retained unaltered.

134–(a) Is corrupt in all the Mss.; Could it be as मध्यं ग्राह्मं तु तद्ग्राह्यम् (?)

142–(a) Is unintelligible in all the Mss.

146–(ab) Are not intelligible in all the Mss.

148–(b) Word याम्ये doesn't suit the context. Could it be as सौम्ये (?)

–(c) Is not intelligible in all the Mss.

176–(d) Are not intelligible in all the Mss.

183–(b) Metrical rule has not been followed here. Could it be as स्तुवीत द्विजसत्तम (?)

## CHAPTER No. 15

25–(cd) Are not intelligible in all the Mss.

30–(ab) Are not intelligible in all the Mss.

## CHAPTER No. 16

38–(b) Readings in all the Mss. appear unintelligible. Could it be as कृत्वा प्राभातिकं तथा । (?)

97–(c) Is corrupt in all the Mss. has been retained unaltered.

103–(a) Metrical rule has not been followed here. Could it be as तत आरभ्य (?)

108–(a) Appears as repetition of 107d; has been retained as it appears in most of the Mss.

110 Not intelligible in all the Mss.

## CHAPTER No. 17

5–(b) Is corrupt in all the Mss.; has been retained unaltered.

136–(d) Is corrupt in all the Mss.; Could it be याम्याशायां ततः परम् (?)

137–(a) Metrical rule has not been followed here.

154–(c) Metrical rule has not been followed here.

207–(a) Is corrupt in all the Mss.; Could it be as खनित्वा वाराह-मन्त्रम् (?)

211–(c) Metrical rule has not been followed here. Could it be as श्रीसूक्तं पौरुषं सूक्तं (?)

213–(ab) Are not intelligible in all the Mss.; have been retained unaltered.

## CHAPTER No. 18

68–(c) Metrical rule has not been followed here; Could it be as प्रधानदिक्संस्थितेषु (?)

82–(b) Is corrupt in all the Mss.; has been retained unaltered.

97–(a) Is corrupt in all the Mss.; has been retained unaltered.

149–(a) Word मण्डपम् doesn't suit the context. Could it be as मण्डलम् (?)

178–(c) Is corrupt in all the Mss.; Could it be as दक्षिणाहीन-कर्मभ्यो (?)

186–(a) Corrupt in all the Mss,; Could it be as निवेदितं दिने तस्मिन् (?)

## CHAPTER No. 19

21–(a) Is not intelligible in all the Mss.; Could it be as पूर्वस्यां चन्दनार्द्राणि (?)

36–(b) Is not intelligible in all the Mss.

–(d) Is not intelligible in all the Mss,

40–(d) Word शुद्धाम्बु doesn't suit the context. Could it be as गन्धाम्बु (?)

58–(a) Metrical rule has not been followed here. Could it be as दधिक्राविण्णमन्त्रेण (?)

80–(ab) Appear unintelligible in all the Mss. ; have been retained unaltered.

87–(a) Metrical rule has not been followed here. Could it be as विनैव चन्दनद्रव्यम् (?)

97–(a) Matrical rule has ot been fallowed here. Could it be as स्वर्णं रजतताम्रं च (?)

118–(cd)–131 (ab) Appear in My. only. Though it is not possible to make out the lacuna on the basis of the Mss. available, we have suggested the appropriate matters in place of lacuna, in consultation with other Pancharatra texts.

127,128–(ab) Verses 127, 128 ab should actually find their places immediately after 131 ab. As has already been noted, verses 118 cd–131 ab are found missing in all Mss. except My. But My., it seems to us, has misplaced the lines noted above Cf. Pādmasamhitā (चर्यापाद 8. 157–60). Thus in accordance with the subject dealt with here, the sandal, saffron etc. should be placed in the गन्धोदकलश subsequent to placing of सर्वौषधिघट. It may also be noted here that all details relating to the materials which are to be placed in गन्धोदकलश are not given in the text Cf. Pādmasamhitā (चर्यापाद 8. 157–60).

141–(a) Metrical rule has not been followed here.

144–(a) Metrical rule has not been followed here.

172–(ab) Appear unintelligible ; have been retained unaltered.

188–(d) Metrical rule has not been followed here,

## CHAPTER No. 20

38–(c) Metrical rule has not been followed here. Could it be as पञ्चगव्यैर्दधिक्रैति (?)

## CHAPTER No. 21

24–(d) Appears unintelligible in all the Mss. ; has been retained unaltered.

82–(d) Verses 81, 82 describe the deities to be installed on the 5th story (पञ्चमतल). Subsequently one would have expected the 83rd verse to begin with a similar description on the 6th story (षष्ठतल). But, all the Mss. begin 83 a as सप्तमेऽपि तले.........This means that the description on the 6th story is wanting in all the Mss.

## CHAPTER No. 22

55–(a) Appears unintelligible in all Mss. ; has been retained unaltered.

61–7 It deserves mention in this conneetion that the मध्यमदशताल section of the बिम्बमान is missing, since after describing the उत्तमदशताल all Mss. describe अधमदशताल. All Mss. are silent on this point. Therefore, the portion containing मध्यमदशताल might have been lost in the later transition.

## CHAPTER No. 23

34–(b) Appears unintelligible in all the Mss. ; has been retained unaltered.

39–(c) Appears unintelligible in all the Mss. ; has been retained unaltered.

## CHAPTER No. 24

6–(ab) Appear unintelligible in all the Mss. ; have been retained unaltered.

## CHAPTER No. 25

30–(ab) Appear unintelligible in all the Mss. ; have been retained unaltered.

76–(a) It appears that half a verse dealing with अधमा (मालिका) is missing after 75 d and before 76 a.

86–(c) Appears unintelligible in all the Mss. ; has been retained unaltered.

161–(c) Appears unintelligible in all the Mss.; Could it be as वह्निमध्ये स्थितं देवम् (?)

174–(a) Is corrupt in all the Mss.; has been retained unaltered.

## CHAPTER No. 26

24–(d) Appears unintelligible in all the Mss.

## CHAPTER No. 27

7–(b) Appears unintelligible.

17–(cd) Appear unintelligible.

18–(ab) Appear unintelligible.

44–(b) Is corrupt ; has been retained unaltered.

51–(ab) Appear unintelligible.

---

# APPENDIX—I

[ The following additional verses are found at the end of 26th chapter in K & My Mss. ]

फलैरपि विधातव्यं प्रीणनं मधुविद्विषः ।
ज्येष्ठे मासि सिते पक्षे द्वादश्यां फलपूजनम् ॥ १ ॥

कारयीत द्विजश्रेष्ठ भुक्तिमुक्तिफलप्रदम् ।
अथवा पञ्चदश्यां वा श्रवणे वा द्विजोत्तम ॥ २ ॥

अंकुरानर्पयित्वाथ यथापूर्वं शुभेऽहनि ।
कदलीनां च चूतानां पनसानामपि द्विज ॥ ३ ॥

फलानि नालिकेराणां मातुल(लु?)ङ्गफलान्यपि ।
खर्जूराणामपि तथा द्राक्षाणां च तथैव च ॥ ४ ॥

फलानि कुरुविन्दानां बदराणां च संचयम् ।
जम्बूनां बर्बराणां च साधकान्यपि(?) यानि च ॥ ५ ॥

फलानि तानि सर्वाणि यथालब्धानि सर्वशः ।
आहृत्य सर्वाण्येकत्र स्थापयित्वा द्विजोत्तम ॥ ६ ॥

विधाय *पेटिका वेत्री दृढा श्लक्ष्णा महत्तरी* (?) ।
तासु पर्णानि निक्षिप्य फलानि द्विजसत्तम ॥ ७ ॥

स्नातानां वेदविदुषां सुसिताम्बरधारिणाम् ।
निक्षिप्य मूर्ध्नि सुमनः सर्वमङ्गलसंयुतम् ॥ ८ ॥

विष्वक्सेनं च पुरतो वाहनेऽप्यधिरोप्य च ।
शृङ्गानां काहलानां च शङ्खानां नादसंयुतम् ॥ ९ ॥

भेरीपटहकांस्यानां तथा मर्दलढक्कयोः ।
झल्लरीणां च संघोषैरापूरितदिगन्तरम् ॥ १० ॥

---

2-(a) K. °यित्वा for °यीत

5-(d) My. स्वालकान्यान्यानि for साधकान्यपि यानि

गायकीनृत्त(नर्त?)कीभिश्च विप्रैः स्वाध्यायतत्परैः ।
छत्रचामरसंयुक्तध्वजौघैः पिहिताम्बरम् ॥ ११ ॥

ग्रामं प्रदक्षिणं नीत्वा शकटेष्वधिरोप्य च ।
प्रविश्य मन्दिरस्यान्त*र्मण्टपोपरि निक्षिपेत्* (?) ॥ १२ ॥

सुश्लक्ष्णे गोमयालिप्ते सुधाचूर्णविचित्रिते ।
पटानास्तीर्य सुश्लक्ष्णान् श्वेतानविरलानपि ॥ १३ ॥

तेष्वारोप्य फलौघं च रक्षां तेषां विधाय च ।
तदाप्रभृति कुर्वीत मण्डपालंकृतिं द्विज ॥ १४ ॥

वितानक्लृप्तिप्रभृति सर्वं निर्माय पूर्ववत् ।
द्वारेषु तोरणादीनि यथापूर्वं प्रकल्प्य च ॥ १५ ॥

कुम्भमण्डलकुण्डादि सर्वं संकल्प्य च द्विज ।
वितानं परितः कृत्वा *निशान्तं* मण्डपोपरि ॥ १६ ॥

एकादश्यां पुनर्देवं विज्ञाप्यानीय मण्डपम् ।
तत्र सर्वं यथापूर्वं स्नपनं स्वापनादिकम् ॥ १७ ॥

कारयित्वा च देवस्य जाग्रन्नीत्वा निशां च ताम् ।
द्वादश्यां कर्म निर्माय सन्ध्योपासनपूर्वकम् ॥ १८ ॥

फलानि सर्वाणि ततः पृथक् संकल्प्य राशिशः ।
महाभिजनसंयुक्तं विप्रैः शुद्धैर्जितेन्द्रियैः ॥ १९ ॥

उष्णीषसहितास्यैश्च (?) जिह्वाचापल्यवर्जितैः ।
निस्त्वक्करणयोग्यानि निस्त्वचं(श्चि?) परिकल्प्य च ॥ २० ॥

यथावस्थितरूपेण शोधनार्हाणि शोधयेत् ।
क्षालनार्हाणि संक्षाल्य कदलीदलसंचये ॥ २१ ॥

महाहविःप्रकारेण राशिशः परिकल्प्य च ।
हैमेष्वपि च विन्यस्य पात्रेषु फलसंचयम् ॥ २२ ॥

---

12-(d) My. वेशने for निक्षिपेत्

17-(d) K, स्ना° for स्वा°

यथापुरं कल्पयित्वा महाहविरपि द्विज ।
बिम्बानि मूलपूर्वाणि सविशेषं सभाज्य च ॥ २३ ॥

पृथक् पृथक् फलौघं च सर्वेभ्यो विनिवेदयेत् ।
कुम्भमण्डलकुण्डेभ्यो निवेद्य च यथापुरम् ॥ २४ ॥

हैमपात्रेषु विन्यस्तं फलराशिं पृथक् पृथक् ।
निवेद्योत्सवबिम्बाय तन्महाहविषोर्युगम् ॥ २५ ॥

हुत्वा फलानि च पुनः पृथगष्टोत्तरं शतम् ।
सेनेशपूर्वकं पश्चाद्वैष्णवेभ्यो यथाक्रमम् ॥ २६ ॥

प्रदाय फलसंघं च देवमारोप्य यानके ।
सर्वमङ्गलसंयुक्तं परिभ्राम्य प्रदक्षिणम् ॥ २७ ॥

इति श्रीपञ्चरात्रे महोपनिषदि विश्वामित्रसंहितायां
फलपूजाविधिर्नाम षड्विंशोऽध्यायः ॥



27-(a) K, °साय for °दाय ; पुष्पम् for संघम्

